पराणां वचनानां प्रवृत्तेर्न्यायत्वात्। तथा च पाषंडादिमतानामपि स्वस्वाधिकारिविषये परंपरया मुक्तिप्रदत्वं मुक्त्यभाववर्णनं तु साक्षादिति गृहाण। अत एवोत्कृष्टाधिकारिणो न्यूनविद्यायां फलाभावपातित्ये। अतः "पाषंडान् परिवर्जयेदिति" प्रमाणम् न्यूनाधिकारिणोऽधिकसाधनानुष्ठाने फलाभावपातित्ये समाने इदं सर्वमतप्रवर्तकाः सर्वे गुरुपीठाधिकारिण इति सर्वगुरुत्वप्रयुक्तसर्वमतप्रवर्तकत्वं सिध्यति। अगस्त्यादयो मंत्रद्रष्टारः श्रौतस्मार्तसूत्रनिर्मातारोऽपि "× परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादिति" श्रुत्यर्थानुसंधानशीला अतिवर्णाश्रमे अवधूतशब्दिते ब्रह्म परिशीलयन्तीति विशिष्टविभूतिरुद्राक्षादिक्रियासमभिव्याहृतज्ञानस्योत्कृष्टत्वं। कर्मणां परःसहस्राणामग्निष्टोमादीनामपि चित्तनैर्मल्यसंपादकत्वार्थत्वेन यावता चित्तनैर्मल्यं तावन्मात्रमनुष्ठेयमिति शिवजीवैक्यविद्यायाः सर्वोत्कृष्टत्वेन कर्मैव श्रेष्ठमित्येतावन्मात्रस्य परमपुरुषार्थवादिनः पूर्वमीमांसकाः प्रत्युक्ताः। अगस्त्यरेणुकाचार्यसंवादेनागस्त्यस्य तत्संबंधिनामन्येषां च वीरशैवत्वं सिद्धं। तथाच कर्मरतायाः सार्वजनीनत्वेऽपि वीरशैवविद्यायाः क्वाचित्कत्वं सुकृतपरिपाकीकृतमिति। एषां तु जन्मचरममित्यनेनन स्फुटीकृतम्॥

मू०— शिव एव हि सर्वेषां गुरुराद्यः परात्परः॥ १७॥
कालेन चानवच्छेदात्स पूर्वेषां गुरुः शिवः॥
तन्मुखाद्गलिता वेदाः कामिकाद्याश्च संहिताः॥ १८॥
अन्याश्च विविधा विद्यास्तत्तत्कर्मप्रदर्शकाः॥
तत्र दीक्षां गतो व्यासस्तत्त्वज्ञानैकतत्पराः॥ १९॥
पशुपाशपतिज्ञानं लब्धवांञ्छिवभक्तितः॥

व्या०— यतः शिवगणा एव सर्वगुरुपीठाधिरोहिणस्ततस्तेषामुपदेष्टा शिव एव इति न्यायः पंथाः। पातंजलयोगसूत्रेऽपि "स पूर्वेषामपि गुरुः कालेन चानवच्छेदात्" इति श्रूयते। यथा देवकीगर्भसंभूतः कृष्णः पांडवाय नीतवान् कमलभूः सनकादीनिति सर्वेषां कालावच्छेदस्तत्र तत्र श्रूयते। कालावच्छेदरहितानाद्यंतब्रह्मशब्दवाच्यः शिव एव पूर्वेषां प्रमथगणानां ब्रह्मादीनां चोपदेष्टेति। अतः परमाप्तेन शिवेनोपदिष्टाः श्रुतिस्मृतयः सकलविद्याः प्रमाणमिति पूर्वोक्तरीत्याऽधिकारिभेदेन व्यवस्था युक्ततरा॥ ननु पाषंडादिमतप्रकाशकानामपि तंत्राणां वैदिकत्वाविशेषप्रसंग इत्याशंक्य तादृशवेदविरुद्धागमानां तत्र न्यूनाधिकार्यनुगुणतुच्छफलप्रदत्वमिति वेदानुगुणागमापेक्षया भेदद्योतनाय अन्याश्चेति नित्यफलप्रदविद्यया अतिशयसूचनद्वारा तदन्यत्वं प्रकटितं। वेदव्यासस्य वीरशैवदीक्षाशालित्वं चतुर्थोपदेशगतपराशरवंचनपर्यालोचनया उत्पत्तौ तस्य सांकर्यमनुमेयं विपश्चितेति प्रतिपादितदोषराहित्यप्रतिपादनावश्यंभावेनोन्नीयते। शिवभक्त्यभावे तात्विकनित्यफलसाधनशास्त्रनिर्माणासंभवात्। तस्य परापरगुरोः प्रसादाभावे तात्विकज्ञानानुदयप्रसंगात्। अतो दीक्षां गतस्यैव व्यासस्य वीरशैवत्वं। भुजस्तंभानंतरभाविशिवस्तोत्रादिवृत्तांतानां काशीखंडादिप्रसिद्धत्वेन चाध्यवशीयते। न च वीरत्वे प्रमाणाभावः वीरत्वाभावेऽपि प्रमाणाभावस्य तुल्यत्वात्केषांचिद्वेदान्तसारोपनिषद्वाक्यानां श्रवणाच्च भ्रमप्रमादादिराहित्यस्य शिवप्रसादस्य गुरुप्रसादरूपस्य साकल्येन विद्यमानत्वेन तच्च तत्वज्ञानं पशुपाशपतिज्ञानं शिवोदीरिताविरुद्धा-

× मुंडक–१–२–१२

गमनिगमादितत्वनिष्कर्षः । शिवभक्तित एवेति बहूनां साधनानां वीरशैवत्वसूचकधर्माणां दृष्टत्वाद्-व्यासो वीरशैवः स्वयं विष्णोरवताररूपः अवतारिणो मूलनारायणस्यापि शिवभक्तिकृतपालनादिसाम-र्थ्यसूचकानां वचनानां भीष्मपर्वणि श्रुतत्वादश्वत्थामानं प्रति । "तस्मादिष्टतमः कृष्णादन्यो मम न विद्यत" इति शिववचनाद्रामाद्यवतारकृतशिवलिंगप्रतिष्ठादेरद्यापि प्रत्यक्षसिद्धत्वेन कलियुगादौ चतुर्ल-क्षपुराणसंग्रहेष्वष्टादशसु पुराणेषु त्रिलक्षग्रंथानां दशपुराणानां शिवगुणवर्णनैदंपर्येण प्रवृत्तेश्च शिवभक्तो व्यासो भक्तिभरेणैव तत्त्वज्ञानं लब्धवानिति युक्ततरं प्रतीमः । यत्तु भेदिभाष्ये लिखितं । "नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् । ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते" ॥ द्वापरे सर्वत्र ज्ञाने आकु-लीभूते तन्निर्णयाय ब्रह्मरुद्रादिभिरभ्यर्थितो भगवान् व्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तद्ज्ञापनार्थं वेदमुत्पन्नं व्यंजयंश्चतुर्धा व्यभजत् । चतुर्विंशतिधा एकशतधा सहस्रधा द्वादशधा च तन्निर्णयाय ब्रह्मसूत्राणि चकार । तच्चोक्तं स्कांदे । "नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितं । किंचित्तदन्यथा ज्ञातं त्रेतायां द्वापरे खिलम् । गौतमस्य मुनेः शापात् ज्ञाने त्वज्ञानतां गते । संकीर्णबु-द्धयो देवा ब्रह्मरुद्रपुरःसराः । शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरु-षोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्पन्नो भगवान्वेदानुज्जहार हरिः स्वयम् । चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधाः पुनः । शतधा चैकधा चैव तथैव च सहस्रधा । कृष्णो द्वाद-शधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि तेषां सूत्रत्वमंजसा । अल्पाक्षरमसंदिग्धं सारवद्वि-श्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः । निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । यथा व्यासत्वमेकस्य कृष्णस्यान्यैर्विशेषणात् । न विशेषेण सूत्राणि ह्यपराणि विदो विदुः । मुख्यस्य निर्विशे-षेण शब्दो नैषां विशेषत" इति । वेदविदः प्राहुः । शब्दतत्त्वार्थवेदिनः । "सूत्रेषु चैषु सर्वेऽपि निर्णयाः समुदीरिताः । शब्दजातस्य सर्वस्य यत्प्रामाण्यविनिर्णयः । एवंविधानि सूत्राणि कृत्वा व्यासो महा-यशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तम" इति ॥ एत-दुपन्यस्तस्कांदवचनसंदर्भानुगुणं वा तद्ज्ञानविजृंभितं । तथाहि मंगलश्लोकसंदर्भे गुणैरुदीर्णमित्यत्रो-त्पूर्वैनैरगताविति धातोः कर्मणि क्तप्रत्यये रदाभ्यां निष्ठातो नः पूर्वस्यैनैति णत्वे चोदीर्णशब्द उन्नतस्थान-गतं प्रतिपादयति । उन्नतस्थानं च वैकुंठादिरूपं । तच्च स्वाभाविकं गौणं वेति दाये गुणैरिति विशेष-णात् "रौद्रं समभ्यर्च्य हि लिंगमादौ शिलामयं चारु हरिस्तु भक्त्या ॥ सुदुर्लभं वैष्णवमाद्यमग्र्यम-वाप्तवानेष परं पदं यदिति" ब्रह्मकैवर्तवचनात् । "रौद्रं लिंगं महाविष्णुर्भक्त्या शुद्धं शिलामयं । चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम्" इति आदित्यपुराणवचनात् । "इंद्रनीलमयं लिंगं विष्णुः पूज-यते सदा । विष्णुत्वं प्राप्तवांस्तेन स भुंक्ते शं सनातनम्" इति । शिवरहस्यवचनाच्च । "जन्मकर्म-तपोयोगस्तयोस्तव च पुष्कलाः । आभ्यां लिंगेऽर्चितो देवस्त्वयाऽर्च्योऽयं युगे युगे" इति । भारत एवा-रण्यपर्वणि व्यासेनाश्वत्थामानं प्रत्युपदेशात् । "ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् । स्वर्गाधिपत्य-मिंद्रस्य शिवपूजाविधेः फलम्" इत्यानुशासनिकपर्वणि व्यासवचनाच्च । "यज्ञकर्ता च देवेंद्रः सृष्टि-कर्ता च वाक्पतिः । अहमेव जगत्कर्ता मम कर्ता महेश्वर" इति । कूर्मपुराणगतवचनादप्युपबृंहित "रुद्र यत्ते जनिम चारु चित्रं पदं यद्विष्णोः परमं न्यधायि" इत्यादिश्रुतिसंदर्भपर्यालोचनया शिव-पूजादिगुणैरेवोदीर्णो न तु वस्तुत इति स्ववचनस्यैव स्वव्याघातार्थप्रतिपादकत्वेन दोषवर्जितमिति दोष-राहित्यं प्रतिपाद्य तद्विरुद्धस्य सत्यवत्यां पराशरादवततारेति योनिजत्वरूपदोषस्य नैवोद्घाटनात् ज्ञेयं

गम्यमिति । विशेषणद्वयवैयर्थ्यादस्मन्मतरीत्या ज्ञातृज्ञानज्ञेयभावानां परमात्मन्यभावाद्भवन्मतरीत्या ज्ञेयत्वस्य प्रपंचसाधारण्यात्प्राप्यत्वे घटकत्वाभावाद्विशेषणवैयर्थ्येन चापीति समुच्चयवैयर्थ्येन च नत्वासूत्रार्थ उच्यत इति क्त्वाप्रत्ययस्य समानकर्तृकयोः पूर्वकाल इति व्याकरणानुशासनात्समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वाप्रत्ययविधानादुत्तरकालभाविनः सूत्रार्थ उच्यत इति प्रतिज्ञातस्य सूत्रार्थप्रतिपादनस्यानंतरकालभावित्वमन्तराप्रतिज्ञातार्थविरुद्धज्ञानाकुलीभाववेदोच्छित्तिव्यासावतरणतत्कृतवेदविभजनतदर्थनिश्चायकसूत्रनिर्माणसविशेषणनिर्विशेषणत्वादिस्वरूपप्रतिपादनमनुष्यपितृपक्षिदेवादिज्ञानस्थापनानां असूत्रार्थानां प्रतिपादनादावेव प्रतिज्ञाभंगात् । नचोपनिषदादिषु ब्रह्मस्वरूपप्रतिपादकेषु सृष्ट्याद्युपोद्घातच्छायायाः संगतिरिति वाच्यम् । उपोद्घातो नाम किंचिदर्थं बुद्धौ संगृह्य तदर्थमर्थांतरवर्णनं । अत्र तु सूत्रार्थ उच्यत इति कंठरवेणैवोपपादितत्वेन । "* आत्मन आकाशः संभूत" इत्यादिवदुपोद्घातच्छायाया अभावात् । उपनिषदादिष्वादौ क्त्वाप्रत्ययस्यादृष्टत्वात्प्रतिज्ञातार्थस्य समनंतरकालभावित्वनियमाभावेन सृष्ट्यादिनिरूपणौचित्यात् । प्रकृतश्लोके सूत्रार्थ उच्यत इत्युत्तरकालभाविसूत्रार्थप्रतिपादनपूर्वकालस्य व्यासावतरणादिकथया व्यवधानेन त्वाप्रत्ययप्रसक्त्यसंगतेः । यदि सूत्रकर्तृप्रभावादिप्रतिपादनीयमित्याग्रहस्तदा "नारायणं गुणातीतं दोषगंधविवर्जितं ॥ ज्ञानगम्यं गुरुं ध्यायन् ब्रह्मसूत्राणि वर्णयेत्यादि कवयेत् (?) अपिच केवलसूत्रवदप्रयोगात्प्रकृतश्लोके विरुद्धार्थप्रतिपत्तिर्दोषः । विषयप्रयोजनसूचनद्वारा मंगलार्थेऽस्मिन् श्लोके कर्तृसंदेहात् प्रतिपादकसंदेहः । कस्येदं सूत्रमिति । न च वक्ष्यमाणस्कांदवचनपर्यालोचनया निर्विशेषितसूत्रत्वात्प्रतिपादकसंदेहो न भवतीति वाच्यम् । पाणिनिसूत्रं, गौतमसूत्रं, बोधायनसूत्रमापस्तंबसूत्रमित्यादिवदेकस्यैव धर्मस्य प्रतिपादकशब्दसंदर्भाणामनेककर्तृकत्वदर्शनादिव वेदान्तार्थाभिधाननिर्णय (स्य) केनाप्यसूत्रणात् व्यासेनैव सूत्रितत्वात् ब्रह्मसूत्रमित्युक्ते कस्येदं ब्रह्मसूत्रमिति संदेहानुदयात्। धर्मसूत्रमित्युक्ते कस्येदं धर्मसूत्रमिति संशयपरिहाराय कस्यचिदापस्तंबादेर्नामग्रहणौचित्यात् । कर्तृविशेषणद्वारा प्रतिपाद्यार्थविश्वासः संभवति । प्रकृते तु न तथा कर्तृविशेषणराहित्येऽपि प्रतिपाद्यजीवब्रह्मैक्यविषयमहिमद्वारा सूत्रविश्वास इति सर्वोत्कृष्टब्रह्मशब्दोपपदत्वेन सूत्रप्रसिद्धौ स्कांदवचनानां तात्पर्यावसायात् । अन्यथा "चकार ब्रह्मसूत्राणि । एषां सूत्रत्वमंजसेति" ब्रह्मशब्दविशेषणासंगतेस्तदनंतरस्कांदवचनसंदर्भस्य निर्विशेषणसूत्रत्वमित्यादेः कर्तृविशेषणराहित्यप्रतिपादनपरत्वात् । सूत्रार्थ उच्यत इति प्रतिपादकसंदेहपरिप्राप्तप्रतिपाद्यसंदेहादिदं प्रतिज्ञानं स्कांदत्वेनाभिमतैर्वचनैरेवोन्नीयते । ब्रह्मसूत्राणीति ब्रह्मशब्दोपपदसूत्रत्ववर्णनपरिज्ञानाभावप्रयुक्तं पूर्वापरसंदर्भाननुगुणं मंगलश्लोकार्थमनुसृत्य विद्वांसः प्रहसेयुः । अनंतरमपि द्वापरे सर्वत्र ज्ञाने आकुलीकृते नारायणो व्यासत्वेनावततारेत्युक्त्वा अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तद्ज्ञापनार्थं वेदमुत्पन्नं व्यंजयन् व्यभजदिति वेदविभागं प्रदर्श्य तत्प्रमाणत्वेन तद्विरुद्धावतारिनारायणकृतवेदविभजनप्रतिपादकानां "तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् " इति वचनानंतरभाविनां "उत्पन्नान्भगवान् वेदानुजहार हरिः स्वयम् " । इति श्लोकानां हरिः स्वयमिति पदद्वयस्वारस्येन तद्वैयर्थ्यभियाऽवताररूपव्यासस्य वेदविभजनाकर्तृत्वप्रतिपादकानां विलेखनेन कृष्णो द्वादशधेत्युत्तरस्य कृष्णस्य वराहाद्यवतारकृतपुराणांतरानुगुणवेदोद्धरणादिस्तु चैककृष्णशब्दप्रयोगाच्च पुनस्तस्यार्थ

* तैत्तिरीये–२–१–२

वित्तय इति पुनः शब्देनावतारांतररूपव्यासात्मना ब्रह्मसूत्रनिर्हरणरूपविशेषस्य प्रतिपादनात् । यथा व्यासत्वमेकस्य कृष्णस्यान्यैर्विशेषणादित्येकशब्दस्वारस्यादवताराणां कृष्णशब्दवाच्यत्वेनेतरावतारनिवृत्तिद्वारा चैकस्मिन्नेव नारायणावतारे व्याससंज्ञायाः प्रतिपादनेन व्यासावतारानंतरभाविवेदविभागस्यपाशबुद्धिकल्पितत्वार्थ्यात्किंचिदेव तत् । समनंतरमप्येवंविधानि सूत्राणि कृत्वा व्यासो महायशा इति ब्रह्मसूत्रनिर्माणमात्रेणोदितां कीर्तिं प्रदर्श्यैतावन्मात्रेण परमेश्वरनिर्मितवेदागमपुराणेतिहासानामध्येतृविरलताप्रयुक्तोच्छित्त्या उच्छिन्नार्थप्रकाशनमात्रेण सूत्रनिर्मातुरेतादृशं यशः प्राप्तमादिनिर्मातुः परमाप्तस्य परमेश्वरस्य किमु वक्तव्यमिति परमेश्वरमहिमैव प्रपंचितो भवति । ततो "ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥ ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तम" इति । ब्रह्मादिकारणमूर्तीरारभ्यैतावत्पर्यंतमविच्छेदेन शरीरान्तःप्रविष्टान्तर्यामिद्वारा ज्ञानसमर्पकस्य प्रेरकस्य परमशिवस्य भगसंज्ञितषड्गुणैश्वर्यपरिपूर्णस्य "× पुरुषो वै रुद्रः सन्महो नमो नम" इति यजुषः श्रुतेश्छांदोग्ये "ब्रह्मणे पुरुषाय सुपुरुषाय इत्यारभ्य शिवाय" इति पूर्वपठितविशेष्यश्रवणाच्च श्रुतिसिद्धसत्पुरुषस्य पुरुषोत्तमत्वप्रतिपादने स्कांदवचनतात्पर्यावसायात्। सुपुरुषायेति सन्मह इति सुसच्छब्दाभ्यां शिव एवाभिधेयः । केवलपुरुषशब्दवाच्यमन्यदैवतमपि भवत्विति तन्निर्वचनभारतादौ "पुरुषसंज्ञे शरीरेऽस्मिन्" इत्यादीनामविरोधात् । "गौतमस्य मुनेः शापात्" इति वचनेन गौतमव्यतिरिक्तानां शापादिभूतत्वेऽपि शप्तुर्गौतमस्य ज्ञानिनः शिवाचारनिष्ठायास्तन्निर्मितसूत्रस्मृत्यादिषु स्पष्टत्वात् । शापागताज्ञानपरिहारकस्य व्यासस्यैतावन्महिमा यदि शप्तुरेकस्मादतिशयेन महिमेति शिवभक्तमहिमवर्णनाच्छिवस्य परब्रह्मभावः स्पष्टं भवति । एतद्भारतलिखितमंकणकोपाख्यानेन ज्ञायते । "नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम्" । इति जन्यज्ञानाश्रयत्वेन स्वरूपज्ञानशिव इत्युपक्रमोपसंहारैकरूपेण शिवमहिमवर्णने तात्पर्यौचित्यात् । वस्तुतस्तु स्कांदे ॥ कस्यां संहितायां कस्मिन् खंडे कस्मिन्नध्याये इति स्कांदत्वमेव मृग्यमिति ततो व्यासो दीक्षां गतः शिवप्रसादत एव पशुपाशपतिज्ञानं लब्धवानिति विस्तरभीतेरुपरम्यते ॥

नन्वर्थजातस्य पशुपाशपतीनां ज्ञानस्य मनोवृत्तिरूपत्वेनार्थाकारैव प्रतीतिर्लब्धा न शब्दाकारा तत्राह ॥

मू०— शिवज्ञानानि दिव्यानि मोक्षैकफलदान्यपि ॥ २० ॥
शिवेनैवोपदिष्टानि तेन तानि धृतानि च ॥
ततः कृतानि सूत्राणि तेन तत्त्वपराणि हि ॥ २१ ॥
तेषामर्थाश्च न स्पष्टाः सद्गुरोरप्यदर्शनात् ॥
बहुधोल्लेखिता अर्थास्तर्कैः कर्कशभाषणैः ॥ २२ ॥

व्या०— अर्थद्वारा मोक्षैकफलदानि दिव्यागमरूपाणि शब्दजालान्यपि लब्धानि। तदेतादृशशब्दार्थोभवसंदर्भपरिज्ञानं साक्षाच्छिवेनैवोपदिष्टानि । गुरुकटाक्षेण तानि सम्यगवधृतानि न विस्मृतानि । व्यासस्य नारायणावतारत्वेन तस्य च पुंभावशक्तेरुमांशत्वेन ॥ "एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी पुरुषेषु विष्णुः कार्येषु काली समरेषु दुर्गा" । इति मंत्रशास्त्रादिप्रसिद्धेः साक्षादुपदेशो युक्तिसहः । अत एवैतादृशसकलवेदागमार्थपरिज्ञानवान् व्यासस्तन्निर्णयाय

× नारायणोपनिषदि–२४–१

ब्रह्मसूत्राणि प्रणिनायेति व्याससूत्राणां शिवज्ञानमूलत्वेन प्रामाणिकत्वाद्वीरशैवानां तत्सूत्रानुसरणे न दोषः । तथा च सूत्रैरेव निर्वाहादस्य प्रवंधस्य प्रयोजनं तु सूत्रार्थस्येदानीं तन्निर्मंदबुद्धिभिरनवधेयत्वेन सद्गुरोरदर्शनाच्च ॥ सूत्रसंदर्भस्याशयस्फुटीकरणम् । स च नंदीश्वरवरशालित्वेन तत्सूत्रार्थविवेचने सामर्थ्यं इतरेषां तज्जन्मांतरीयविघ्नबाहुल्येन शिवभक्तिविरहान्नंदीश्वरप्रसादार्हत्वं नास्ति । ते च "स्वयंनष्टः परान् नाशयतीति" न्यायेन तर्ककर्कशाः आप्तवचनविश्वासरहिताः यथायथं सूत्रार्थमुपवर्णयन्ति तन्निवारणद्वारा यथाकथं सूत्रार्थस्थापनमात्मीयस्य प्रवंधस्य प्रयोजनम् ॥

मू०— यदैक्यं ज्ञानशब्दार्थो जीवात्मपरमात्मनोः ॥
मिथ्यात्वं जगतो रज्जुसर्पभ्रांतिवदिष्यते ॥ २३ ॥
अविद्यावद्विषयता शास्त्राणामिति केचन ॥
ब्रह्मज्ञानैकनाश्यं हि प्रारब्धं कर्मजं फलं ॥ २४ ॥
इति केचिद्वर्णयन्ति केचिदन्यत्प्रचक्षते ॥

व्या०— सर्वेषां मतानामद्वैतिभिरेव निराकरणात्तन्मतमभिमत्य यत्किंचित्स्वानभिमतं व्यवस्यति ते चेमेऽर्थाः ॥ जीवब्रह्मैक्यं शास्त्रस्य विषयः जगतो मिथ्यात्वं रज्जौ सर्पज्ञानवत् । अविद्यावद्विषयाणि शास्त्राणि भवन्ति ज्ञानस्य मुक्तिसाधनत्वं क्रियाया मुमुक्षासाधनत्वं "* विविदिषन्ति यज्ञेन दानेन" इति श्रुतेः अत्रेदमवधेयं अज्ञानं असदावरणं अभानावरणं विक्षेपः । एतत्सर्वं बंधशरीरं परोक्षमतिः अपरोक्षबुद्धिः अनर्थनिवृत्तिः आनंदावाप्तिश्च मोक्षशरीरं तदुक्तम् ॥ "अज्ञानमावृतिश्चैव विक्षेपश्च परोक्षधीः । अपरोक्षमतिः शोकनिवृत्यानंदसंभवौ । सप्तावस्था इमाः सन्ति चिदाभासस्य नात्मन" इति । बंधमोक्षौ चिदाभासस्य बुद्धिप्रतिबिंबस्येति बुद्धेरज्ञानकार्यत्वाद्बंधमोक्षस्वरूपप्रतिपादकं शास्त्रमित्यविद्यावद्विषयाणि शास्त्राणि मूलज्ञानमविद्याऽनादिरिति संसारोऽप्यनादिः अज्ञानस्यासदावरणभानावरणोभयकारणत्वं । घटाज्ञानेन हि घटो नास्ति न भातीति प्रतीतिद्वयमुत्पद्यते । घटो नास्तीति परोक्षज्ञानेन नास्तीति व्यवहारकारणमसदावरणं नश्यति । घटो भातीत्यपरोक्षज्ञानोदयेन न भातीत्यभानावरणं नश्यति । आवरणद्वयनाशानंतरं विक्षेपः ॥ शोके निवर्तते तत आत्मानंदः स्वयमेव प्रकाशते अथो वेदान्तैरापातज्ञानविषये ब्रह्मणि नास्तीति दुर्वासना नश्यति । "× अयमात्मा ब्रह्म" इत्यपरोक्षज्ञानोदये ब्रह्म मे न भातीत्यविद्याकल्पितान्तःकरणवासना अपगच्छति । ततोऽहं कर्ता भोक्तेत्यादिविक्षेपनिवृत्त्याऽहमानंद इति प्रतीतिर्जायत इति श्रुतिरपि ॥ "+ भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यस्यां कर्माणि क्षीयन्त इति बहुवचनवैयर्थ्यभिया प्रारब्धकर्मणोऽपि ज्ञाननाश्यत्वं प्रतिपेदिरे । अपरे तु संचितागामिप्रारब्धसंज्ञितेषु कर्मसु "नाभुक्तं क्षीयते कर्मेति" श्रवणात् प्रारब्धव्यतिरिक्तयोः कर्मणोरेव ज्ञाननाश्यत्वं युक्तं प्रारब्धकर्मणो भोगादेव क्षयः । तच्चेच्छाप्रारब्धमनिच्छाप्रारब्धं परेच्छाप्रारब्धमिति त्रिधा । अपथ्यसेविनश्चोरा इत्यादि सर्वं इच्छाप्रारब्धशालिनः "अवश्यंभाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन् नलरामयुधिष्ठिरा" इत्यनिच्छाप्रारब्धशालिनः कृष्णः पांडवोपकारी परेच्छाप्रारब्धशाली । यथा कर्माणि नश्यन्ति तथा कर्मजन्यफलान्यपि ज्ञानेनैव नाश्यानि कारणाभावे

* बृहदारण्यके–६–४–२२ × बृहदारण्यके–४–५–१९ + मुंडके–२–२–८

कार्याभावस्यावश्यंभावात् । कर्ममात्रस्य ज्ञाननाश्यत्वमिति कार्मिकफलनाशस्य कर्मनाश्यत्वं किंचिद्वर्णयन्ति । कर्मणः पाषाणे शिरस्ताडनस्य नाशेऽपि तज्जन्यशिरोव्रणस्य दुःखस्य बहुविधौषधनाश्यत्वेन कर्मनाशनाश्यत्वाभावात् । प्रकृतेऽपि प्रारब्धसंचितागामिकर्मणां ज्ञाननाश्यत्ववत् फलानामपि ज्ञानैकनाश्यत्वमिति केचिदवादिषुः । अन्ये तु संचितागामिकर्मणोस्तत्फलयोश्च ज्ञानैकनाश्यत्वेऽपि प्रारब्धकर्मणस्तत्फलस्य च भोगैकनाश्यत्वं प्रतिपादयामासुः ॥

मू०— जीवात्मा परमात्मा च द्वौ पदार्थौ व्यवस्थितौ ॥ २५ ॥
सत्यत्वं ब्रह्मणस्साक्षादनित्यत्वं विकारजम् ॥
प्रपंचस्य तथा सर्वसाक्षित्वं परमेशितुः ॥ २६ ॥
प्रधानतोपासनस्य मुक्तिः सालोक्यनामिका ॥

व्या०— सर्वमाचार्याणां मतमुपन्यस्य जीवब्रह्मणोः केवलाद्वैतं न संघटते संसारी । जीवो भिन्नः ब्रह्म सत्यादिलक्षणं भिन्नमभिन्नं च समुद्रतरंगादिवदहिकुंडलवद्वह्निविस्फुलिंगवद्भिन्नाभिन्नं । न केवलं भेदो नाप्यभेदः किंतु व्यवस्थाया अभेदः भेदश्च व्यवस्थाशब्दः । भेदाधिकरणे अभेदमभिमनुते भगवत्पाणिनिसूत्रे "* व्यवस्थायामसंज्ञायाम्" इति कं चिदुदयगिरिं पश्चिमगिरिं वापेक्ष्य पूर्वः पर इति प्रतिपादने कं चित्पदार्थमपेक्ष्य पूर्वो भवति । स एवावध्यंतरमपेक्ष्य पश्चिमोऽप्युत्तरो दक्षिणश्चेति भेदाभेदस्यांगीकारात् । प्रकृते जीवपरयोर्भेदो व्यवस्थया प्रतिपादनीयः । एतच्चतुर्थोपदेशे स्फुटीभविष्यति । जीवस्यौपाधिकचिदाभासस्योपाधिनाशनाश्यत्वात् ब्रह्मणोऽपि नाशानित्यतासत्यत्वे सत्यपरोक्षस्वप्रकाशस्वरूपं । प्रपंचस्य तु नामरूपात्मकविकारजातमनित्यत्वं । परमेशितुः सर्वसाक्षिकत्वमेतादृशब्रह्माहंभावनया शिवपूजारूपोपासनस्य सालोक्यनामिका मुक्तिः । तत्र वेदान्तश्रवणद्वारा निर्विशेषा मुक्तिः सिध्येत । निर्विकल्पस्वरूपस्य कथं पूजोपासनमित्याह ॥

मू०— दिव्यमंगलरूपस्य परस्य ब्रह्मणोऽस्ति हि ॥ २७ ॥
एवंभूतानि ( मतानि ) बहुशः भुवि विस्तारितान्यपि ॥
समुपेत्य तदा व्यासः प्रार्थयामास शंकरं ॥ २८ ॥

व्या०— निर्विकल्परूपस्य ब्रह्मणोऽर्चनपूजनाद्यसंगतौ लोकानुग्रहार्थाः पंचविंशतिलीलामूर्तयः सन्ति । तासां सगुणत्वेन ध्यानार्चनादिसंभवः । एवंभूतानि जीवब्रह्मैक्यं शास्त्रस्य विषय इत्यारभ्य दिव्यमंगलविग्रहान्तानि भेदाभेदवादिनामस्माकं न संमतानि । क्रियासारः शास्त्रस्य विषयः । जीवब्रह्मैक्यशब्दितलिंगांगसामरस्याष्टावरणपंचाचारविशिष्टस्यैव मुक्तिप्रदत्वेन शास्त्रविषयमंगीकुर्मः । ज्ञानकर्मसमुच्चयवादिनोऽवयवमिति इयान्विशेषः । विशिष्टपंचाचारादेरेव समुच्चयः । पशुकर्मणां तु फलाभिसंधिरहितानां विशिष्टक्रियासमर्पकत्वेन परंपरया विनियोगः । तदुक्तं । "अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् । नराणां क्षीणपापानां शिवे भक्तिः प्रजायत इति । जगतो मिथ्यात्वं नाम व्यक्तीनां प्रवाहस्य सत्यत्वमेव । अन्यथा कदाचिज्जगन्निवृत्तावनीश्वरत्वप्रसंगः ॥ ऐश्वर्यविषयसापेक्षत्वात्स्पष्टमग्रे वक्ष्यामः । अविद्यावद्विषयाणि शास्त्राणीति नास्माकमभिमतम् । स्वमुखाज्ञानिनः प्रथममादर्शेनावलोकने यावत्स्वरूपप-

* पाणिनिसूत्रे–१–१–३४

रिज्ञानेन संतोषाविर्भावेऽपि पुनः पुनः विद्यावतामात्मपरिज्ञानेन विशेषप्रतिपत्तेरविद्यावद्विषयाणीति संभवदर्शनमेव ब्रह्मज्ञानैकनाश्यानि कर्माणि कर्मफलान्यपीति न वयं प्रतीमः। शिरोरोगनिर्हरणार्थौषधपरिज्ञानेपि लेपनमंतरा व्याध्यनिवृत्तेर्ज्ञानमंतरा लेपासंभवेन च ज्ञानकर्मभ्यां समुचिताभ्यामेव फलाभिसंधिरहिताभ्यामीश्वरार्पणबुध्युपजीविभ्यां भोगस्य सुखदुःखादेर्नाशः। कर्मनाशो नामाकार्यकार्यत्वेन भर्जितबीजवद्भोगासमर्पकत्वमेवेत्यस्मदभिमतिः। कैश्चिज्जीवपरभेदः, कैश्चिदभेदः स्वीकृतः। न तद्वयमस्मदभिप्रायमध्यारोहति। भेदोऽपि व्यवस्थाया अभेदोऽपि व्यवस्थयेति भेदाधिकरणे अभेदांगीकारात्। सत्यता ब्रह्मण इत्येतावन्मात्रं न भवति प्रपंचस्याप्यंगीकुर्मः। विकारस्यानित्यत्वमिति न नित्यत्वादिति। तथा सर्वसाक्षित्वमेव न बिंबप्रतिबिंबाकारेण वयमंगीकुर्मः किंतु परिणामित्वमपि जगत इति स्वीकुर्मः। "आदित्यमंबिकां विष्णुं गणनाथं महेश्वरं। गृहस्थः पूजयेन्नित्यं पंचयज्ञपरायण" इत्यादिवत्कस्यचित् प्राधान्येनोपासनमन्येषां ब्रह्मादीनामप्राधान्येन यथारुचीति न विद्वत्पंथाः। उपासनाकाले पातिव्रत्येन "× शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्येति" देवतांतराणामुपासनागंधोऽपि "त्वयि सति शिवदातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्। चरमचरणघातैर्दुग्रहं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम्" इत्यप्पय्ययज्वप्रतिपादितरीत्या शिवस्यैकस्यैवोपासनविषयत्वं। मुक्तिसमये प्रपंचाभेदवद्देवतांतराभेदप्रतिपादकशास्त्राणामकिंचित्करत्वात्। दिव्यमंगलविग्रहाणामुपासनानुग्रहार्थमेवेति न शास्त्रसरणिः। किंतु लीलाविग्रहाणां परशिवाविर्भावविशेषाणां वास्तवत्वमेवांगीकुर्मः। इयानद्वैतिनामस्माकं भेदः। सर्वमन्यत्तेषां मतमस्मत्सिद्धांतानुगुणमेवेति। मतांतराणामद्वैतिनिराकरणीयानामसरणीयत्वादकिंचित्करत्वान्नास्माभिर्विलेख्यमित्यास्तां विस्तरः। अथास्मत्सिद्धांतानां व्याससूत्रानुकूल्यसंपादनाय व्यासावतरणकारणस्य बहुविधमतप्रसरणस्यानंतरं स्कांदत्वेनाभिमत्य विलिखितवचनानुरोधेनोमांशो नारायणो व्यासत्वेनावतीर्य स्वपतिमुमापतिं प्रार्थयामासेति संगच्छतेतरां। "गौतमस्य मुनेः शापात् ज्ञाने त्वद्ज्ञानतां गत" इति। पूर्वं विलिखितवचने गौतममुनेः शिवभक्तस्य शापविमोचनार्थं शिवमेव शरणं करणं युक्तमित्यर्थः। प्रार्थनां निर्दिशति॥

मू०— मतानि विविधान्येव समुत्पन्नानि शंकर ॥
मत्कृतानां च सूत्राणामयथानयनं कृतम् ॥ २९ ॥
एवमेवेति निश्चित्य कुर्वन्ति कलहं मिथः ॥
त्वत्प्रसादैकलब्धस्य सूत्रजालस्य शंकर ॥ ३० ॥
यथापूर्वं त्वया कार्यं मत्सूत्रार्थविवेचनम् ॥
इति तेन प्रार्थितः सन् दयालुः पार्वतीपतिः ॥ ३१ ॥
नीलकंठशिवाचार्यनाम्ना भाष्यमचीकरत् ॥

व्या०— अद्वैतिनिराकार्यासरणीयानि वेदविरुद्धानि दुर्मतान्युत्पन्नानि समुत्पाद्यन्त उत्पत्स्यन्ते च। तेषां मतानां श्रवणे धर्मवितर्ये श्रुणुभिर्नृभिरस्यमाने॥ कर्णौ पिधाय निरगाद्यदकल्य ईशे छिंद्यात्प्रसह्य रुशतीमसतां प्रभुश्चेज्जिव्हामसूनपि ततो विसृजेत्सधर्मे इति "भवन्तं देवेशं शिवमितरगीर्वा

× अथर्वशिखायां

णसदृशं प्रमादाद्यः कश्चिद्यदि वदति चित्तेऽपि मनुते । स दुःखं लब्ध्वाऽन्ते नरकमभियाति ध्रुवमिम् तथा देवाराध्यामितगुणनमस्तेऽस्तु भवते" । इत्यादिवचनप्रसिद्धगणाचारविरुद्धत्वान्न वयं तन्मतमुद्धरेम । तमः किं त्वत्सूत्राणि यथा वेदान्तार्थविधायकानि सन्ति । तद्वद्दृणां स्वत एवेतरमतेषु वैरस्यमुत्पत्स्यत इति चेन्मदीयसूत्रसंदर्भस्यापि मत्तात्पर्यविषयं श्रुतिविरुद्धार्थं नयेयुस्तावन्मात्रमेव न भवति । यथाश्रुतार्थप्रतिपादयितृभिः स्वकपोलकल्पितमर्थं सती (स्वी) कृत्य कलहं कुर्वन्ति । सत्प्रतिपक्षस्य व्याप्तिज्ञानप्रतिबंधकत्वेन परोक्षनिश्चयो नास्मदीयानामपि भवेत् । कलिरयं कालः । तत अपरोक्षज्ञानानिश्चयान्मुक्तिः प्रतिबद्धा स्यात्त्वत्प्रसादेन कृतानि मया सूत्राणि मूलशक्तेरंबायाः शिवमुखोद्गीतार्थश्रवणशालित्वेनायं व्यासोऽपि शक्त्यंशनारायणांश इति द्वैतिरेतत्स्कांदैरेवाभिव्यक्तं । यथापूर्वं सूत्रार्थविवेचनम् सर्वहृदयग्राहि त्वयैव कार्यमिति प्रार्थित उमापतिः श्रीनीलकंठशिवाचार्यनाम्नाऽवतीर्य भाष्यमचीकरदिति कार्यात्कारणानुमानमिति तदभिमतसिद्धान्तं लिखति ॥

मू०— विशिष्टाद्वैतसिद्धांतप्रतिपादनमुत्तमम् ॥ ३२ ॥
मयापि तस्य तात्पर्यं श्रोतृणां सुखबुद्धये ॥
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ॥ ३३ ॥

व्या०— वक्ष्यमाणरीत्या शक्तिविशिष्टं ब्रह्म जगत्कारणमिति सर्वोत्तमं भाष्यसंदर्भमनुश्रुत्य व्याससूत्रानुकूल्येन श्रोतृबुद्धिसौकर्यायानुष्टुप्छंदसा निबध्यत इति प्रतिज्ञाय स्वमतमुद्दिशति ॥

मू०— लिंगांगसामरस्यैकलभ्यं पाशविमोचनम् ॥
शिव एव परं तत्त्वं शिव एव परं महः ॥ ३४ ॥
शिव एव परं ज्योतिः शिव एव परात्परः ॥
व्यासोक्तं यत्परं ब्रह्म स्वसूत्रेषु शिवः स्वयं ॥ ३५ ॥
शिव एव हि लिंगं च लिंगरूपी शिवः स्वयम् ॥
सर्ववेदान्तवाक्यानां प्रतिपाद्यः शिवः स्वयम् ॥ ३६ ॥
सर्वतत्त्वावलंबश्च जगत्का ( सर्वका ) रणमव्ययः ॥
तत्त्वमस्यादिवाक्यार्थस्वरूपी निष्कलः स्वयम् ॥ ३७ ॥
एकं ब्रह्माद्वितीयं च सत्यं ज्ञानं सुखात्मकं ॥
निर्गुणं निर्मलं शुद्धं जनिमाख्यं निरंजनम् ॥ ३८ ॥
देवानामादिभूतश्च रुद्रो विश्वाधिपः प्रभुः ॥
सर्वज्ञः सर्वकर्ता च सर्वकारणमीश्वरः ॥ ३९ ॥
अनादिनिधनं वस्तु परापरविहीनकम् ॥
परमात्मस्वरूपं च पर (पंच) ब्रह्मस्वरूपकम् ॥ ४० ॥
निष्ठाप्राप्यं परं तत्त्वमप्रमेयमनूपमम् ॥

कथयन्तीति वेदान्ताः शिवं परमकारणं ॥ ४१ ॥
महालिंगस्वरूपोऽयं शंकरः स सदाशिवः ॥
इति जानंति ये भक्ता गुरोः कारुण्यतः शिवम् ॥ ४२ ॥
शोकं तरन्ति ते सर्वे महादेवप्रसादतः ॥

व्या०— प्रतिपादितोऽयं ग्रंथसंदर्भः स्थूलसूक्ष्मकारणानुबद्धमूलाज्ञानकामक्रोधलोभमोहाद्यखिलवातपित्तादिरोगत्रयरूपपाशविमोचनपुरस्कृतः स्वस्वरूपप्रकाशः. फलं पंचाचारपुरस्कृतावरणांतर्गतपंचाक्षरमंत्रार्थानुसंधानरूपलिंगांगसामरस्यं मनोवृत्तिविशेषः साधनम्। तथा च प्रतिपाद्यप्रतिपादकफलानि निर्दिष्टानि। तत्र लिंगशब्दार्थस्तु लीनमर्थं गमयति योऽसौ लयस्य वाधरूपकार्यनाशस्याधिष्ठानभूतः स शिव एव शिवभक्तसार्वभौमेन व्यासेन स्वसूत्रे ब्रह्मशब्देनाभिहितः। तत्र प्रमाणं व्यासावतारस्यावतारिणा नारायणेनोपासकेन नारायणोपनिषदि प्रतिपादितानि । परंज्योति........ज्वादयो धर्माअनुसंधेया इति शोकतरणमनावृत्तिः शब्दादित्यधिकरणविषयीभूतं "* न स पुनरावर्तत" इति श्रुत्यभिप्रायं शोकतरणं प्रतिपाद्यपरमाकाशवैशिष्ट्यमात्मीयं सिद्धान्तं दर्शयति ॥

मू०— सर्ववेदान्तसारं हि चिदंवरसमन्वितं ॥ ४३ ॥
पूजयेद्धृदयाकाशे स्वात्मनो हितमाचरन् ॥
प्रकारा वहवः सन्ति दहरोपासनादयः ॥ ४४ ॥
सा तु कार्या वीरशैवैर्गर्भदीक्षादिसंस्कृतैः ॥
लिंगांगसामरस्येन शिवभावसमन्वितैः ॥ ४५ ॥
कालयोरागमार्थानुसारेणातिसमाहितैः ॥
स्फुटीभविष्यति स्थूलसूक्ष्ममध्यमभेदतः ॥ ४६ ॥
त्रिविधा शिवपूजापि चोपदेशे चतुर्दशे ॥
सा च पूजा हस्तपीठे मुख्यान्यत्रापि केचन ॥ ४७ ॥
तन्मात्रेणैव संतुष्टः शंभुर्निश्रेयसः प्रदः ॥
तस्यापि मूर्तयः सन्ति पंचविंशतिसंख्यया ॥ ४८ ॥
ताश्च कुर्वन्ति लिंगस्य पूजनं भक्तिपूर्वकम् ॥
विष्ण्वादयः सुरगणा यक्षरक्षोगणास्तथा ॥ ४९ ॥
जन्मकर्मनिवृत्त्यर्थं मुनयो धृतनिश्चयाः ॥
उपासते महालिंगं वहवो मोक्षणार्थिनः ॥ ५० ॥

व्या०— "+ आकाशो वै नामरूपयोर्निर्वहिता ते यदंतरेति" अंतरत्वेन नामरूपनिर्वहितत्वेनाकाशशब्दार्थत्वेन चाभिधानात् " § दहरोऽस्मिन्नंतराकाश " इति प्रकाशशक्तेर्जनन्याः प्रकाशिनो लिंगस्य च

* छांदोग्ये–८–१५–१ + छांदोग्ये–८–१४–१ § छांदोग्ये–८–१–१

द्वीपदीपप्रभावचदभेदस्योचितत्वेन विशिष्टस्यैव दहरप्रकरणे प्रतिपादितत्वेन स्वात्महितं शोकतरणमभीप्सुः पूजयेद्बहिर्द्रव्यैर्मन्त्रसंस्कृतैरिष्टलिंगार्चनं कुर्यादंतरपूजादहरादयस्तु ॥ "+ पद्मकोशप्रतीकाशम्" इत्याद्यनेकगुणविधानाद्बहुप्रकाराः । एवमेव शांडिल्यविद्यावैश्वानरविद्यासंवर्गविद्योद्गीथविद्यादयः प्रसिद्धाः । एतासु विद्यासु मध्ये गर्भदीक्षासंस्कृतैः कथंकारमनुष्ठेयमित्यत्र विधत्ते । सर्वासु विद्यास्वयं विशेषः । शिवभावसमन्विताः सन्तः स्वान्तर्बहिर्विद्यमानलिंगस्य अंगस्य च सामरस्यस्य गुरुणैव कृतत्वात्प्रातःसायमुभयोः कालयोरागमोक्तमार्गानुसारेण सावधानेन चेतसोपासना कर्तव्या । तत्प्रकारश्चतुर्दशोपदेशे स्पष्टीभविष्यति । हस्तपीठे कार्येति विशेषः । तं तु स्पष्टेन पीठादौ केचित्पूजयन्ति । तन्नातीव प्रशस्ततरम् । एतावन्मात्रेणाखिलविद्याफलसमर्पकोऽस्माकं देवो निःश्रेयसं मुक्तिं प्रयच्छति । एतादृशार्थसूचनायैव परमशिवोऽपि लीलामूर्तीरासाद्य बालशिक्षार्थं गुरुकृताक्षराभ्यासनटनवन्नटति । विष्णवादयोऽपि पालनादिकर्तारः शिवपूजादिना निःश्रेयसमुपगच्छन्तीति प्रसिद्धं । ततो मननशीला ऋषयो वेदमार्गप्रदर्शितारो दृढमर्चनमेव पारलौकिकं निश्चित्य कृतार्थाः समभवन् । ततो वीरशैवानामर्चना मुक्तिदात्रीति सिद्धम् ॥

मू०— नित्यापरोक्षविज्ञानं चिद्घनानंदरूपिणं ॥
लिंगं च काटं जनिमं ऋतं ब्रह्मेडितं परम् ॥ ५१ ॥
सत्यं ज्ञानं सुखं नित्यं वार्धकं शरणं स्मृतं ॥
एवमादीनि नामानि सन्ति लिंगस्य भूरिशः ॥ ५२ ॥
तल्लिंगमेव सूत्रेषु व्यासेनापि विचारितं ॥
नीलकंठशिवाचार्यैस्तत्तात्पर्यं प्रकाशितम् ॥ ५३ ॥
कलिकल्मषनिर्धूततत्त्वबुद्धिभिरन्यथा ॥
नीतं यथायथं शास्त्रं सद्गुरोरप्यदर्शनात् ॥ ५४ ॥
अमात्सर्यपरिप्राप्तमतिकौशलशालिभिः ॥
विभावनीय (विश्रामनीय) एवार्थः कथ्यतेऽथ यथातथम् ॥५५॥

व्या०— साधनांतरसापेक्षविषयापरोक्षस्य घटादिप्रत्यक्षस्य कादाचित्कत्वेऽपि साधनांतरनिरपेक्षस्य स्वस्वरूपापरोक्षस्य स्वप्रकाशरूपस्याखंडाकारवृत्तिगोचरस्यावरणनाशाच्चिद्घन आनंदघनः । लिंगकाटजनिमेत्यादिशब्दैरभिधेयः । "*अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "§ अनावृत्तिः शब्दात्" इत्यंतेन व्यासेन विचारितः अयमाशयो नीलकंठशिवाचार्यपादैराविष्कृतः । एवमपि कलिकलुषितचित्तैर्दुर्भगैर्माध्वादिभिर्यथायथं नीतं तत्सर्वं सद्गुरुराहित्येन रागद्वेषादिषड्वैरिवशगत्वप्रयुक्ताज्ञानप्रयुक्तं । अमत्सरैस्तत्त्वज्ञानशालिभिरवलोकनीयोऽर्थो यथातथं प्रकाश्यते । ब्रह्मशब्दवाच्यस्य शिवरूपत्वे च "युधिष्ठिरो धर्ममयो महाद्रुमः स्कंदोऽर्जुनो भीमसेनोऽस्य शाखाः ॥ माद्रीसुतौ पुष्पफले समृद्धे मूलं हि कृष्णो ब्रह्म च ब्राह्मणाश्चेति" । भारतवचनादुच्चावचैरुपनिषद्ववचनप्रकांडैरुन्मीलितश्रुतिगणैरुपबृंहणैश्च "यत्सादरं

+ महानारायणे-११-७ * ब्र. सू.-१-अ.-१ पा.-१. § ब्र. सू.-२२-अ.-४ पा.-४.

समुदितं यमिनामुपास्यं तद्ब्रह्म शंकर भवानिति तर्कयाम" इति ब्रह्मतर्कस्तवे स्पष्टं प्रतिपादितम्। तथा च ब्रह्मशिवशब्दयोर्वाच्यमेकमेव "बिंदुरूपा परा शक्तिर्नादरूपः परः शिवः॥ बिंदुनादात्मकं लिंगं तस्माच्छिवशिवात्मकमिति"॥ तत्त्वमस्यादिवाक्यार्थस्वरूपाशा चास्यैव शक्तिविशिष्टस्य ब्रह्मणः। तथाहि त्वंपदार्थभूतोऽतःकरणावच्छिन्नः तत्पदेन च मायावच्छिन्नः तथाचावच्छिन्नयोरैक्ययोगेन प्रत्यक्चैतन्ये साक्षिणि लक्षणा त्वंपदस्य तत्पदस्य च मायानवच्छिन्ने ईश्वरसाक्षिण्यखंडाकारचैतन्योऽयं, सोऽयं देवदत्त इत्यत्र तत्कालतद्देशादिरूपविशेषनाशपरित्यागवज्जीवोपाधेरीश्वरोपाधेश्च। मायाऽविद्ययोर्विशेषणयोः परित्यागो भागत्यागलक्षणेत्याहुः। वयं तु ब्रूमः भेदाधिकरणे अभेदस्य वक्ष्यमाणरीत्या सिद्धान्तितत्त्वेन जीवेश्वरयोर्भेदाभेदस्य प्रतीयमानत्वात्तत्र चाभेदश्रुतीनां भेदश्रुतीनामुभयासामप्यानुकूल्यमितरमतापेक्षया बहुलाघवमिति। अपिच घटमानयेदित्यादौ देवदत्तकर्तृकघटकर्मका जलाहरणफलकानयनरूपा कृतिरित्येवं श्रुतपदसमर्पितानां संसर्गो वाक्यार्थ। इत्येवं पदार्थातिरिक्तवाक्यार्थाभावेन संसर्गातिरिक्तस्य तत्त्वमसिवाक्यस्थशब्दासमर्पितस्याकस्मिकस्याशब्दार्थस्यात्रैकस्य वाक्यार्थत्वेनांगीकारोऽपि विरुद्ध इति चेन्न। एहि देवदत्त इत्यादौ प्रकरणानुरोधेनाशब्दार्थानां तात्पर्यविषयाणां जलाहरणघृताहरणकवाटपिधानादीनामनेकेषामुपस्थितेः "× सदेव सोम्येदमग्रआसीत्" इत्युपक्रम्यैतदात्म्यमित्युपसंहारादनुप्रवेशादिमध्यमपरामर्शेन चैक्यमेव तात्पर्यविषय। इति शब्दमंतरार्थस्फूर्तेरसंभवेन वाक्ये लक्षणा। अत एव नीलोत्पलमित्यत्र नीलवैशिष्ट्यमिव न वैशिष्ट्यमात्रवाक्यार्थः। ऐक्यं च भेदसहमिति केचित्। अखंडैकरसत्वमिति विवरणानुसारेणायमेवाखंडार्थवादे स्पष्टीकृतो भाष्यादाविति नात्र पुनः समर्थ्यते। सजातीयभेदविजातीयभेदस्वगतभेदानां "* एकमेवाद्वितीयम्" इति वाक्येन निराकरणात् पूर्वोक्तपरंज्योतिस्त्वादयो ब्रह्मणः स्वरूपलक्षणानि जगत्कारणत्वादीनि तटस्थलक्षणानि यावल्लक्ष्यकालमनवस्थायित्वं ताटस्थ्यमिति वयं तु जगत्कारणत्वमपि स्वरूपलक्षणमेवेति जगत्सत्यत्वमंगीकुर्मः। स्वरूपलक्षणाभ्यां वस्तुसिद्धेर्न्याय्यत्वात्ताटस्थ्यमपि केचिदुदाजह्रुः। आस्माकीनसैद्धान्तिकीया सरणिः। यस्मिन्नाश्रमे यस्मिन्वर्णधर्मे वर्तेते तद्धर्मसहकृतज्ञानेन "§ तमेतं वेदानुवचनेन" इति श्रुतेः ब्रह्मचारी समिधादानादि कुर्वन्नेव गृही नित्यनैमित्तिकाद्यनुष्ठानेनैव वनस्थः श्रामणकशास्त्रसिद्धधर्मानुष्ठानेनैव यतिस्तु "स्वशाखोपनिषद्गीतां विष्णोर्नामसहस्रकं। श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यतिरिति"॥ यतीनां तु चतुर्गुणमित्यादिधर्मैरेव अत्याश्रमिणो वीरशैवास्तु पंचाचाराष्टावरणैरेव नैयत्यं संपाद्य "ज्ञानेन निष्ठाया वस्तु साधयेदिति" कर्मब्रह्मज्ञानोभयसाधनाभ्यां मोक्ष इत्यधिकार्यनुगुणमोक्षवैचित्र्यं साक्षात्परंपरयेति तादृशं फलं च शक्तिविशिष्टब्रह्मीभावः। तदुक्तं "नित्यं निर्दोषगंधं निरतिशयसुखं ब्रह्म चैतन्यमेकं धर्मो धर्मीति भेदद्वयमयति पृथग्भूय मायावशेन॥ धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला शक्तिश्चेच्छादिरूपा भवति गुणगणश्चाश्रयस्त्वेक एवेत्यादि" रत्नत्रयपरीक्षायां एतादृशब्रह्म कथं ज्ञेयमित्याशंकायां "चाकटाक्षपुरःसर" मित्याद्यभिहितं श्वेताश्वतरोपनिषदुपक्रमे॥

मू०— अथातो ब्रह्मजिज्ञासेत्यस्मिन्सूत्रे यदीरितम्॥
तद्ब्रह्म केवलं लिंगं ज्ञातव्यं च मुमुक्षुभिः॥ ५६॥
समनंतरसूत्रेषु तद्गुणा एव वर्णिताः॥

× छांदोग्ये–६–२–१ * छांदोग्ये–६–२–१ § बृहदारण्ये–६–४–२२ १ ब्र-सू-१ अ०१ पा.१.

आनंतर्येऽथशब्दः स्यात्पूर्वकांडानुरोधतः ॥ ५७ ॥
किमनंतरमित्युक्ते वाच्यं धर्मविचारतः ॥
आनंतर्यं विचारस्य ब्रह्मणो लिंगरूपिणः ॥ ५८ ॥

व्या०— विशिष्टक्रियानुवर्तिनोऽखिलगुणगणालंकृतान् परमशिवभक्तानश्रुतवेदान्तार्थान् सामान्यत उपनिषच्छास्त्रप्रतिपाद्यं लिंगमिति परिज्ञानवतो विशेषतो जिज्ञासूनुद्धर्तुकामो व्यासः शास्त्रारंभे निर्विशेषब्रह्मपदाभिधेयं किं रूपं शास्त्रादौ निश्चितवानित्यस्य सूत्रस्य लिंगजिज्ञासा कर्तव्येत्यर्थ इति विशेषणोद्दिश्य मुमुक्षुभिर्ज्ञातव्यत्वं विधाय समनंतरसूत्राणां "जन्माद्यस्य यत" इत्यारभ्य "अनावृत्तिः" इत्यंतेषु तद्गुणानां स्वरूपतातटस्थ्यादीनां प्रकाशकत्वमुद्दिश्य कृत्स्नस्य वेदान्तशास्त्रस्य लिंगप्रतिपादकत्वं प्रकटयन्नथशब्दार्थमानंतर्यं प्रतिपिपादयिषुः पूर्वकांडशेषत्वाद्धर्मविचारस्य वृत्तत्वादित्येतदुत्तरभाविनः शेषस्य वेदान्तशास्त्रविचारस्यापि ब्रह्मशब्दपर्यायलिंगशब्दवाच्यार्थमुद्दिश्य मतान्तरं पूर्वपक्षयितुमुद्दिशति॥

सू०— ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥
कंठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ ॥ ५९ ॥
इति प्रमाणतस्तत्र मंगलार्थो न युज्यते ॥
पूर्वकांडविरोधेनाप्यंगांगित्वनिरूपणात् ॥ ६० ॥

व्या०— उद्देशो लक्षणं परीक्षा चेतिन्यायेन स्वाभिमतलिंगविचारं प्रतिज्ञाय लीनार्थगमकं लिंगमित्यवयवव्युत्पत्त्या लक्षणमपि सुगमं मन्वानो विचारस्याभ्यर्हितत्वादथातःशब्दाभ्यां वेदस्य विवक्षितत्वे वेदाध्ययनानंतरमविशेषेणैव वेदार्थविचारस्य प्राप्तत्वाद्धर्मविचारानंतरं ब्रह्मविचारो न्याय्यः । अथातो धर्मजिज्ञासेति धर्मत्वोपाधौ विचारस्य प्रतिज्ञेयत्वेन कृत्स्नवेदार्थस्य विचार्यत्वेन प्रतिज्ञानात्कुत्रापि ब्रह्मणो जैमिनिना विचारितत्वात् ब्रह्म विचार्यमेव। तच्च प्रसिद्धमप्रसिद्धं वा आद्ये जिज्ञासानुपपत्तिः अप्रसिद्धं चेच्छशविषाणवदफलपर्यवसायित्वात् । अतः प्रसिद्धमेव नाद्यविद्याकल्पितांतःकरणदोषनिवृत्त्यर्थं विचार्यमिति ॥ यत्तूक्तं मध्वभाष्ये अथशब्दो मंगलार्थोऽधिकारानंतर्यार्थश्च अतःशब्दो हेत्वर्थः । उक्तं च गारुडे ॥ अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ॥ प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् । कश्चार्थस्तु तयोर्विद्वान् कथमुत्तमता तयोः । एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः । एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः । आनंतर्येऽधिकारार्थे मंगलार्थे तथैव च । अथशब्दस्त्वतःशब्दो हेत्वर्थे समुदीरितः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् । स हि सर्वमनोवृत्तिप्रेरकः समुदीरितः । सिसृक्षोः परमो विष्णोः प्रथमं द्वौ विनिसृतौ । ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् । तद्धेतुत्वं वदन्सोऽपि तृतीयोऽथ उदाहृतः । अकारः सर्ववागात्मा परब्रह्माभिधायकः । तथा प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ । अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः । अथातःशब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः । सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुंजत इति । प्रमाणोपन्यासश्च एतदुदाहृतगारुडत्वेनाभिमतवचनादज्ञानविजृंभितं। तथा हि "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" न्यायेनैकस्यैव मंगलाद्यन्यतमस्यार्थस्य प्रतिपादनौचित्यात् । न च श्लेषालंकारविशिष्टकाव्यसमयसिद्धश्लोकवदनेकार्थकशब्दप्रयोगादनेके चार्थाः सूत्रकृतस्तात्पर्यविषयतामधिरोहन्ति । प्रकृताप्रकृतोभय-

वृत्तान्तस्फूर्तिकृतचमत्कारविशेषप्रतिपादने प्रकृतब्रह्मविचारव्यतिरिक्ताप्रकृताब्रह्मविचारोऽपि तात्पर्यविषय इत्युत्तरसंदर्भस्थाब्रह्मस्तंवपर्यंतमसारं चाप्यनित्यकं "विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ॥ स उत्तमोऽधिकारी स्यात्सन्यस्ताखिलकर्मवान्"॥ इति वचनानुगुणमुत्तमाधिकारित्वं व्यासस्यापि सूत्रकृतो न स्यादतः तात्पर्यविषयीभूतं वस्त्वेकमेवेति तात्पर्यभेदेन नानार्थानुपपत्तिः । तथाचैक एव तात्पर्यविषयः । न नानेति वाच्यं। अधिकारो नाम प्रारंभः । " × अथ योगानुशासनम् " "अथ शब्दानुशासनम्" इत्यादौ योगानां हठराजलयादीनां लौकिकवैदिकशब्दानामनुशासनस्य शिक्षायाः शब्दसंदर्भरचनायाः कर्तव्यत्वेन प्रारंभयोग्यत्वात्तद्वत्प्रकृते ब्रह्मजिज्ञासायाः कर्तव्यत्वेन प्रारंभयोग्यताभावात् पूर्वमनारब्धानामथेत्यारंभः शब्दशास्त्रयोगशास्त्रयोः संभवति तयोः शब्दसंदर्भरचनारूपत्वात् । प्रकृते ब्रह्मविचारात्मिकजिज्ञास्यांतःकरणवृत्तिविशेषरूपेति तस्याः कश्चन कर्तव्यत्वेनारंभकाल इति पूर्वमनारब्धाया अंतःकरणवृत्तेः कर्तव्यत्वेनाथशब्दार्थरूपाधिकारो नामारंभो न शक्यते । अन्यत्र तु शब्दसंदर्भरचनायाः स्वकर्तव्यत्वेन प्रारंभयोग्यत्वात्तद्वदधिकारार्थो न युज्यते । किंच जिज्ञासायाः विषयसौष्ठवज्ञानाधीनत्वेन विषयस्य ब्रह्मणः सौष्ठवमभिनंद्यत्वेन परमबुद्धिरध्ययनावसर एव गुरुमुखापातवचनात् ज्ञातेति कृतप्रारंभस्य कर्तव्यत्वेन प्रतिज्ञातुमशक्यत्वादिति प्रकृतसूत्रगताथशब्दस्याधिकारोऽर्थ इति न युज्यते । अपिच योगानुशासनमित्यादौ शब्दरचनापूर्वमकृता अथशब्दविन्यासपूर्वकं कृतेतिवदत्रापि पूर्वं व्यासेन ब्रह्मजिज्ञासितमथशब्दपूर्वकं जिज्ञासितमिति शास्त्रनिर्मातुर्व्यासस्य सूत्रसंदर्भरचनायाः पूर्वमब्रह्मज्ञानित्वेन ज्ञानराहित्यमपि प्रतिपादनीयं स्यात् । ततोऽधिकारार्थप्रतिपादनमयुक्तं । एवमेवात्र मंगलार्थत्वेन प्रतिपादनमप्यनुचितं । कं चित्कार्यविशेषमारभमाणोऽविगीतशिष्टाचारपरिपालनाय विघ्नध्वंसाय मंगलमाचरेत् तदपि स्वेष्टदेवतागुरुनमस्कारदधिदूर्वादर्शनप्रणवध्वन्यथशब्दध्वन्या रूपं प्रकृते अथेतिशब्दध्वनिरूपस्य मंगलस्य कर्तव्यत्वेन प्रतिज्ञातब्रह्मजिज्ञासापूर्वकालवर्तित्वं वक्तव्यं । नित्यापरोक्षरूपेण ब्रह्म पश्यतो यावद्वेदार्थपरिज्ञानवतो भगवतो वादरायणस्य जिज्ञासानुदयात् शास्त्रादौ जिज्ञासापूर्वकालभाविपदध्वनिरूपमंगलस्य जिज्ञासायाश्चान्योन्यमन्वयासंगतेरिति वक्तव्यमनंतर्यार्थकत्वं । किमनंतरमस्यारंभ इत्याकांक्षायां धर्मविचारस्य वृत्तत्वात्तदनंतरं ब्रह्मजिज्ञासाकर्तव्यत्वेन प्रतिज्ञायते । यदपि गारुडपुराणोपन्यासः तदपि नवीनशांवरीविलसितं । तत्र तत्र सूत्रादौ प्रणिहिताथातःशब्दार्थप्रश्नानुसारेण यथायोगमानंतर्याधिकारमंगलार्थानां प्रतिपादनेऽपि प्रकृतब्रह्मसूत्रेणान्वितयोर्मंगलार्थाधिकारार्थयोः प्रतिपादननियमाभावाच्चास्माकं तद्विरुध्यते। तत्रत्यविष्णुशब्दस्य "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कंठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ" इतिवत् व्यापकब्रह्मशब्दवाच्ये तात्पर्यात्। तत आनंतर्यार्थकत्वमवशिष्यते। नन्वत्राथशब्दः पक्षान्तरांगीकारपरः "अथ दध्ना जुहुयात् अथ पयसा" इतिवत् कं चिदर्थमुपवर्ण्य तस्मिन्नत्रार्थे तदनंतरमर्थांतरमथेति वर्णनीयं । अथान्यथाख्यातिः अथासद्ख्यातिरितिवत् पूर्वमेकस्या प्रतिपादनेन तत्प्रसंगाभावात्। यस्य शक्त्येन पूर्वकालवर्तिनः प्रयोजकत्वं तदानंतर्यं वक्तव्यं तच्चेहामुत्रफलभोगविरागो नित्यानित्यवस्तुविवेकः शमादिषट्कसंपत्तिर्मुमुक्षुत्वमित्येवं साधनचतुष्टयानंतर्यं केवलाद्वैतवादिन उदाहरन्ति। तत्रेदमवधेयं विषयदोषानुसंधानकृतो विराग उत्कृष्टब्रह्मज्ञानाधीनमिति ज्ञाते ब्रह्मणि जिज्ञासासंभवान्नित्यानित्यविवेकस्यानिष्टज्ञानरूपत्वेन तस्य वेदान्तशास्त्रज्ञानाधीनत्वेन नित्यानित्यवस्तुविभजनपूर्वकविवेकस्य जीवन्मुक्तधर्मत्वेनापरोक्षज्ञानिनो वंधशब्दितबुद्धिधर्मत्वासंभवान्मुमुक्षुत्वमपि न संभविष्यतीति

× योगसूत्रे—१—१—१

नियतप्रयोजनं पूर्ववर्त्यन्यदेव वक्तव्यं । न च भोजनगमनादेरस्य कस्य चित् पूर्ववर्तित्वमस्तीति वाच्यम् । कस्यापि नैयत्याभावात् धर्मविचारानंतर्यमेवेति युक्तमुत्पश्यामः । नन्वत्र ज्ञानं द्विविधं परोक्षमपरोक्षं चेति "* सत्यं ज्ञानमनंतं ब्रह्मेत्यादि" श्रुतिनिचयवचनसंदर्भश्रवणजनितपरोक्षज्ञाननिर्वर्तितसंदेहडोलासमारोहणवतोऽधीतवेदस्य संभवति । साधनचतुष्टयसंपत्तिरिति बंधनापेक्षावस्थासप्तकमत्राप्यज्ञानमावृत्तिर्विक्षेप इति त्रयाणां जीवावस्थाविशेषाणां क्रमेणापगमसाधनत्वेनावगतपरोक्षापरोक्षज्ञानयोर्मध्ये ज्ञानकृता सदावरणाभानावरणोभयविधावरणशक्त्योरादिकारणाज्ञानकृतासदावरणजनिता नास्तीति व्यवहारनिवर्तिकापरोक्षमतिः । श्रुतिपुराणागमस्थप्रतिपादकशब्दासक्तग्रहणमात्रकृतमिति । तत्राज्ञानं नाम आत्मतत्त्वविचारप्रागभावसहितमुदासीनव्यवहारस्य कारणं न जानामीत्यनुभूयमानावज्ञानमिति व्यवह्रियते । आवरणं नाम शास्त्रोक्तमर्यादामतिलंघ्य केवलं तर्केण विचार्यानंतरं नास्ति नभातीत्युभयव्यवहारकारणं । तत एवावृत्तिर्द्विधा भिद्यते । असदावृत्तिरभानावृत्तिश्चेति । घटो नास्तीति व्यवहारकारणावृत्तिः परोक्षज्ञाननाश्यापरोक्षज्ञानेन ब्रह्मास्तीति नित्यत्वेन ज्ञाते मायाब्रह्मस्तंबपर्यंतं नश्वरं निखिलं जगदिति जगतोऽनित्यत्वे च ज्ञातेऽथैहिकामुष्मिकयोः शब्दप्रमाणादेव नित्यत्वं निश्चित्य विरागी भवेत् । तथैवांतरिंद्रियनिग्रहरूपशमस्य, बहिरिंद्रियनिग्रहरूपदमस्य, विक्षेपाभावरूपाया उपरतेः, सहनरूपतितिक्षायाः, गुरुवेदांतवाक्यविश्वासरूपश्रद्धायाश्चित्तैकाग्र्यस्य, श्रुतार्थविषयकमनोवृत्तिधारायाश्च परोक्षब्रह्मज्ञानमात्रेण संभवात्तदनंतरभाविनी न भातीति व्यवहारकारणीभूताभानावृत्तिरपरोक्षज्ञाननिवर्त्यैति, ब्रह्मपरोक्षज्ञानाय साधनचतुष्टयसंपत्तिः पूर्वभाविनीति चेन्न । उक्तानां साधनानां केषांचिन्निर्गुणब्रह्मविद्यांगभूताग्निष्टोमादिस्थूलोपासनासु केषांचिद्दहरविद्यादिसगुणोपासनासु चान्यथासिद्धेस्तथाहि । द्रव्यशौचमनःशौचमित्यादिस्मृत्यांतरिंद्रियादिनिग्रहाणां श्राद्धान्तानामग्निष्टोमाद्यंगत्वेन मंडलांतर्वर्तिहिरण्यश्मश्रुत्वादिगुणविशिष्टमूर्तिविषयीकरणमनोवृत्तेरिव निर्गुणे ब्रह्मणि विरोधभावनानिवर्तकविषयाकारमनोवृत्तिनैरंतर्यरूपनिदिध्यासनायोगेन निदिध्यासनोपयोगासंभवेनापहतपाप्मत्वादिविशिष्टदहराकाशमध्यवर्तिनित्यज्ञानसहकृतानित्यज्ञानेन च पूर्वोक्तसाधनानामन्यत्र विनियोजनात्तद्व्यवहितनिर्गुणब्रह्मजिज्ञासायाः साधनचतुष्टयसंपत्त्यनंतरभावित्वासिद्धेः । अप्रकृतत्वात्तथापि तत्सहकृतस्थूलसूक्ष्मोभयोपासनारूपधर्मविचारानंतरभावित्वस्यैव वक्तव्यत्वाद्वदति चामुमेवार्थं श्रुतिरपि "× तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति" वेदानुवचनेन ब्रह्मविद्यांगत्वं धर्मविचारस्येति सिद्धं । धर्मसंपत्तिरिह ब्रह्मविचाराधिकारिविशेषणीभूता विषयस्य विचारस्य साधनीभवितुमर्हति । अथोस्याः पूर्वभाविता युज्यते "नन्वष्टमे वर्षे ब्राह्मणमुपनयीत तमध्यापयीतेति" विधिचोदनान्नित्यप्राप्तस्य पादोपसंग्रहणादिनियमानुवर्तितगुरुमुखलब्धवर्णग्रहणमात्ररूपस्यार्थपरिज्ञानफलस्य वेदाध्ययनमात्रस्य पूर्वभावित्वं युक्तं । "अथातो धर्मजिज्ञासेति" पूर्वतंत्राधिकरणस्थधर्मविचारस्यैव ब्रह्मविचारस्यापि वेदैकसमधिगम्यत्वेनानधीतवेदगंधस्य वेदार्थविचाररूपब्रह्मविचारानुपपत्तेः केवलवर्णक्रमग्रहणरूपाध्ययनमात्रसमनंतरभावित्वब्रह्मविचारस्येति वक्ष्यामः । भवतु नाम वर्णावलीग्रहणरूपमध्ययनं तदनंतरभावित्वं धर्मविचारस्यैव । तदभावे तत्साधकब्रह्मविचारस्यैवासिद्धेः । तत्राचार्यो जैमिनिराचष्टे "अथातो धर्मजिज्ञासेति" तत्र प्रथमत आचार्यमुखाद्वेदमधीत्य समनंतरं धर्मप्राप्तिरिति विचार उच्यते । तथा च धर्मविचारानंतरं ब्रह्मविचार इति धर्मब्रह्मविचाररूपयोः शास्त्रयोरत्यंतभेदाभावादेकशास्त्रं प्रतीमः । ज्योतिष्टोमादिस्थूलोपासनानां दहरविद्यादिसूक्ष्मोपासनानां

* तैत्तिरीये-२-१-१ × बृहदारण्यके-६-४-२२

वा आराधनारूपत्वेन तथाकांक्षिताराध्यहरमृडरुद्रादिशब्दितनिर्गुणब्रह्मप्रतिपादकवेदान्तशास्त्रस्य पूर्वमीमांसाशास्त्रानन्यत्वेनाथातो ब्रह्मजिज्ञासेत्यारभ्यानावृत्तिः शब्दादित्यंतमेकमेव शास्त्रं। तत्राथातःशेषलक्षणमित्यादिवदवांतरपरिच्छेदार्थोऽयमथातो ब्रह्मजिज्ञासेत्यारंभः। अथ वा कर्तृभेदात् फलभेदाच्चैकशास्त्रानुपपत्त्या धर्मज्ञानस्य ब्रह्मज्ञानसाधनत्वेन धर्मविचारोपयुक्तानां श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां वेदचोदनार्थवादस्मृत्यादिप्रामाण्यप्रतिपादनादीनां च ब्रह्मविचारोपयुक्तत्वेन धर्मविचारानंतरभावित्वं ब्रह्मविचारस्य युक्तं। साधनाभावे साध्याभावस्यापि न्याय्यत्वात्। न च ब्रह्मबोधं प्रति धर्मस्य साधनत्वे प्रमाणाभावः "* तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति" श्रुतेरेव प्रमाणत्वात्। न च धर्मस्य ब्रह्मबोधनसाधनत्वेऽगीकृते धर्म एव विचार्यः। आचरणीयश्चेति किमनेन ब्रह्मविचारप्रयासेनेति वाच्यं। तस्य फलाभिसंधिरहितस्यांतःकरणकालुष्यापनयनद्वारा पापनिवर्तकत्वेनांतःकरणनैर्मल्यसंपादकत्वेन ब्रह्मबोधेनाधनि ? भवेत् तथैवाभियुक्तगौतमादिश्रुतिषु यस्यैते चत्वारिंशत्संस्कारा इत्युपक्रम्य ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीत्यंतेन पूर्वकांडोक्तसकलकर्मणां पापमलापकर्षसंस्कारहेतुत्वप्रकाशनात् "अथ व्रीहीन् प्रोक्षतीति" व्रीहिप्रोक्षणानुकर्मणां संस्कारकत्वे सर्वे एते पुण्य (पाप) का भवन्तीति ब्रह्मचर्याद्याश्रमफलस्वातंत्र्यं न स्यादिति चेन्न। पुण्यलोकफलाभिसंधिपूर्वककर्मणां स्वातंत्र्येऽपि फलाभिसंधिरहितेन पुंसानुष्ठितकर्मणां चित्तनैर्मल्यादिसंस्कारसाधनत्वोपपत्तेः। तथाच फलाभिसंधिरहितस्य पुंसो यद्ज्ञानफलं मोक्षरूपं तदेव धर्मफलं च भवितुमर्हति। यथा व्रीहिप्रोक्षणादिदर्शपूर्णमासः उत्पत्त्यपूर्वतया स्वर्गे समुच्चीयते। तद्वद्धर्मोऽपि ब्रह्मबोधप्रयोजकतया मोक्षे समुच्चीयते अतो गुणकर्मत्वादंगत्वमेतेषां। ननु "वसंते वसंते ज्योतिषा यजेतेति" नित्यविधिप्राप्तस्य ज्योतिरादेरिति कर्तव्यतात्वविरोधात्। न संस्कारत्वादिति चेन्न। करणतया स्वतंत्रविध्यंतरविहितसौत्रामणिबृहस्पतिवासवादीनामग्निचयनवाजपेयाद्यंगत्ववदुभयविधिबलादुभयसिद्धेः। अंतःकारणाद्यावद्ज्ञानमुत्पद्यते तावदनुष्ठेयाः धर्माः। एतेन "तमेतं वेदानुवचनेनेत्यत्र" विधेः सन्नंतादुप्रत्ययादिच्छार्थका ज्ञायते। बुभुत्सासाधनानि धर्मा इति वदन्तः प्रत्युक्ताः। इच्छायाः पुरुषार्थत्वाभावात् अतो धर्माणां ब्रह्मबोधसाधनानां विचारानंतरं ब्रह्मबोधकशास्त्रारंभ इत्युचिततरः। ननु कर्मब्रह्मविचारयोः क्रमनियमः कथमुपपद्यते कर्त्रैक्यादिति चेन्न। कर्त्रैक्यमिह आघारदर्शपूर्णमासवदंगांगित्वेन वा पंचप्रयाजादिवदेकांगप्रयुक्तान्येकांगत्वेन वा गोदोहनादिवदधिकारांतरप्रयुक्तोपजीव्यत्वेन वा षड्याागादिवत् फलैक्येन वा भवति। तथात्वे धर्मविचारब्रह्मविचारयोः श्रुतिलिंगादिप्रमाणं नोपलभेत्। ततो धर्मब्रह्मणोर्विचारस्याक्रमनियमो नैव युज्यते। यदि श्रुतिलिंगादिप्रमाणमुपलभ्येत। तदा क्रमनियमः स्यात्। "‡ विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इति "× ब्रह्मवित्पुण्यकृत्" "§ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इत्यादिका ज्ञानकर्मसमुच्चयप्रतिपादिनी श्रुतिरुपलभ्यते। ततो धर्मज्ञानयोर्मोक्षफलकत्वादुभयविचारयोः क्रमनियमो युंजते। यद्यक्षग्रहणमात्रपर्यवसायित्वं तमध्यापयीतेत्यध्ययनविधेस्तथोभयविचारयोः न प्रवृत्त्यसंभवः। सांगाध्ययनेनापाततः पदार्थमात्रप्रतीतेः समनंतरं ब्रह्मस्थूलोपासनाज्योतिष्टोमादिविधायकानां वाक्यानां सूक्ष्मोपासनाभूतदहरादिविद्याविधायकानां च परस्परविरोधाभासं पश्यंस्तद्विचारे पुरुषार्थाकांक्षी पुरुषः स्वयमेव प्रवर्तते। ततो नानिबंधनो विचारः। ननु श्रोतव्य इति वाक्ये वेदान्तश्रवणं साक्षाद्विधीयत इति चेन्न विधित्वप्रयोजकरूपसंपत्त्यभावात् तथाहि। वेदान्तश्रवणं नापूर्वविधिगो-

* बृहदारण्यके–६–४–२२ ‡ ईशावास्ये–११ × बृहदारण्यके–६–४–९ § मुंडके–३–१–५

चरं प्राप्तत्वात् प्राप्तिप्रकारश्चेत्थं वेदान्तश्रवणं सविषयोपात्तावगतिसाधनं शास्त्राश्रवणात् वैद्यशास्त्रश्रवणादितिवत्। नाप्ययं श्रवणविधिः नियमविधिः अवघातादिवत्। कस्य चिद्दृष्टफलस्य उपायांतरस्याप्राप्तेः न चायं श्रोतव्य इति परिसंख्याविधिः। एवं च वेदान्ताः श्रोतव्या एव नाध्येतव्या इति पर्यवस्येत। तथासत्यनधीतवेदान्तानां तत्प्रतिपाद्यब्रह्मविचारासंभवे न पुरुषार्थसंभवः। यदि वेदान्तश्रवणस्य परिसंख्यापरत्वं कर्मकांडश्रवणनिषेधत्वरूपमिति विचारस्तदा विचाराभावाद्धर्मानुष्ठानासंभवः। धर्मानुष्ठानाभावे चांतःकरणनैर्मल्यासंभवः। तदभावे च ज्ञानानुदयात्तस्मात्पूर्वोक्तमिव धर्मानंतर्यं समीचीनं। ततः सकलचिदचित्प्रपंचाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमागमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वरमहादेवशंभुलिंगप्रभृतिपर्यायवाचकशब्दसारप्रकाशिकपरममहिमविलासस्य स्वशेषीभूतनिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परस्य ब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीयं। तन्नियोगरूपचोदनालक्षणस्य तदाराधनविशेषस्यार्थरूपस्य तत्तदर्थवादप्रकाशितप्राशस्त्यविलासस्य श्रुत्यादिसंपादितसकलांगपुंखितस्य प्रमाणानुगुणस्मृतीतिहासपुराणाभियुक्तसूक्तिकामिकादिवातुलांतदिव्यागमसंदर्भकृतोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयादिमतो निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य भगवतो धर्मस्य विचारानंतरमिति प्रथमाधिकरणगताथशब्दार्थौ निर्णीतः। यत्तु धर्मविचाररूपसंपत्तिमधिकारिविशेषणं विहायास्मृतवेदगंधेन मदेन स्वभाष्ये लिखितं॥ अधिकारश्चोक्तो भागवततंत्रे इत्युपक्रम्य मंदमध्यमोत्तमत्वेन त्रिविधा ह्यधिकारिणः। "तत्र मंदा मनुष्येषु यदुत्तमगुणान्विताः॥ मध्यमा ऋषिगंधर्वदेवास्तत्रोत्तमा मताः" इति चातिकृते "भेदस्तथान्यो गुणपूर्वकः" "भक्तिमान् परमे विष्णौ यस्त्वध्यायनवान् नरः॥ अधमश्शमसंयुक्तो मध्यमः समुदाहृतः। आब्रह्मस्तंबपर्यंतमसारं चाप्यनित्यकम्। विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः। स उत्तमोऽधिकारी स्यात्सन्यस्ताखिलकर्मवान्"। अध्ययनमात्रवतो नाविशेषादिति चोपरि "शान्तो दान्तः उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति" "‡परीक्ष्य लोकान् कर्मचितान् ब्रह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" "¶ यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वां"। "§यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाश्यन्ते महात्मन" इति श्रुतिभ्यश्च व्योमसंहितायां। "अंत्यजा अपि ये भक्ता नामज्ञानाधिकारिणः। स्त्रीशूद्रब्रह्मबंधूनां तंत्रज्ञानेऽधिकारिता। एकदेशे परोक्ते तु न तु ग्रंथपुरःसरे॥ त्रैवर्णिकानां वेदोक्तः सम्यग् भक्तिमतां हरौ। आहुरप्युत्तमः स्त्रीणामधिकारं तु वैदिके। यथोर्वशी यमी चैव शच्याश्चैव तथा परा"। इति यथा नारायणप्रसादामृतेन मोक्षः न च ज्ञानं विनेत्यर्थः प्रसादः अतो ब्रह्मजिज्ञासा कर्तव्या॥ "यत्रानवसरोऽन्यत्र पदं तैऽतःप्रतिष्ठितं॥ वाक्यं चेति सतां गीतिः सावकाशो न तद्ववेदिति" बृहत्संहितायां च "† तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय"। "* प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः"। "§ यमेवैष वृणुते तेन लभ्यः" "×आत्मा वारे द्रष्टव्यः" इत्यादिश्रुतिस्मृतिभ्यः "कर्मणात्वधमः प्रोक्तः प्रसादश्रवणादिभिः॥ मध्यमो ज्ञानसंपत्त्या प्रसादस्तूत्तमो मतः। प्रसादात्त्वधमो विष्णोः स्वर्गलाभः प्रकीर्तितः। मध्यमा जनलोकादिरुत्तमं त्वेव मुक्तिदः। श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च। साधनं ज्ञानसंपत्तौ प्रधानं नान्यदिष्यते। न चैतानि विना कश्चिद्ज्ञान-

‡ मुंडके–१–२–१२ ¶ बृहदारण्यके–६–४–२३ § श्वेताश्वतरे–६–२३ † श्वेताश्वतरे–३–८
* भगवद्गीतायां–७–१७ § कठवल्ल्यां–१–२–२३ × बृहदारण्यके–६–५–६

मप कुतश्चनेति । नारदीये । ब्रह्मशब्दश्च विष्णावेव "* यमन्तःसमुद्रे कवयो वयन्ति" "† यदक्षरे परमे प्रजाः यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्यां" "× तदेवर्तं तदु सत्यमाहु" रित्युक्ता "‡तदेव ब्रह्म परमं कवीनामिति" श्रुतिः तमो विष्णुरिति वचनात् विष्णुरेव हि तत्रोच्यते न चेतरशब्दात् तत्प्राप्तिः "नामानि विश्वाभिनसन्ति लोके यदाविरासीदमृतस्य सर्वनामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्तीति भाल्लवेयश्रुतेः "यो देवानां नामधामानि "§ एक एव" संप्रश्नभुवनायेत्यन्यो इत्येवशब्दान् न चान्येषां सर्वनामता अजस्य नाभावस्यैकमर्पितं "यस्मिन् विश्वानि भुवनानि तस्थु" रिति विष्णोर्हि लिंगं न च प्रसिद्धार्थे विनाऽन्यार्थो युज्यते अजस्य नाभाविति "यस्य नाभेरभूच्छ्रुतः पुष्करलोकसारं तस्मै नमो व्यस्तसमस्तमूर्तये विभूतये विष्णवे लोकपित्र" इति स्कांदे "परो दिवापरएनापृथिव्येति समाख्या श्रुतौ "यं कामये तं तमुग्रं श्रुणोमि तं ब्रह्माणं तं ऋषिं सुमेधा" मित्युक्त्वा "मम योनिरप्स्वा अंतःसमुद्रा" इत्याह । उग्रो रुद्रः समुद्रेऽतर्नारायणः प्रसिद्धत्वात्सूचितत्वाच्च अस्यार्थस्य नचाविरोधे प्रसिद्धः परित्यज्यते । युक्तं न्यायेन श्रुतयस्तमेव वदन्ति । "वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयत" इति । हरिवंशेषु न चेतरग्रंथविरोधः । "एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि मोहयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु"। इति वराहवचनात् । शैवे स्कांदे । "श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः । तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुख" इति ब्राह्मे च । ब्रह्मवैवर्ते ॥ "नाहं न च शिवोऽन्ये च तच्छक्त्यैकांशभागिनः । बालक्रीडनकैर्यद्वा क्रीडतेऽस्माभिरच्युत" ॥ इति न च वैष्णवेषु तथा तच्चैष मोह इत्युक्त इत्यादिप्रलापः सर्वोऽप्ययं संकरजात्युत्पन्नब्राह्मणवेषधारिकलियुगानुगुणप्रच्छन्नबौद्धजल्पितं स्वकीयजन्मान्तरीयदुरदृष्टपरिपाकसमुन्मिषितहार्दतमो विशेषविजृंभितं च तथाहि अधिकारश्चोक्तो भागवततंत्र इति स्ववचनप्रकटितवैदिकमार्गाननुगुणभागवतत्वेनाभिमतस्वकपोलकल्पितवचने मंदमध्यमोत्तम इत्यादौ जातिकृतभेदं प्रतिपाद्य समनंतरं गुणकृतभेदस्य प्रतिपादनावसरे परमे विष्णाविति परमशब्दविशेषणस्वारस्येन । "शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेत्युदाहृतः । एवं ममाष्टकं पुण्यं शिवस्य परमात्मनः ॥ रहस्यं सर्वशास्त्रेभ्यः सारभूतं समुध्दतम्" ॥ इत्यादिना रहस्यागमेषु शिवादिनामाष्टकस्य वैशिष्ट्यप्रतिपादनात् परमशब्दपूर्वश्चेच्छिवमेवाभिधत्ते विष्णुशब्दः केवलश्चेदन्यं जीवकोटिप्रविष्टं देवकीकौसल्यादियोनिजननदोषदुष्टं शिवशक्त्या शिवलिंगप्रतिष्ठार्चनादिना महत्वं प्रत्यवतारं प्राप्नुवन्तम् जातो ब्रह्मन् इति प्रसिद्धजनिमंतं शिवभक्तिविशेषेणैव कांचित्प्रसिद्धिमभेदं च प्राप्तवन्तं विष्णुमभिधत्त इति न किंचिच्चोद्यमेतत् । अन्यथा भक्तरीत्या विष्णुशब्देनैवाभिमतदेवताप्रतीतेः परमशब्दोऽयं व्यर्थः स्यात् यदि चेत् । पारम्यप्रख्यापनार्थे परमशब्दप्रयोग इति विष्णुवाच्यस्य पारम्यं नास्तीति सिद्धमेवाभूत् । यदि विष्णुशब्दवाच्ये पारम्यप्रसिद्धः परमशब्दवैयर्थ्यापत्तिरिति परमाद्विष्णोरिति पारम्यविशिष्टं व्यापकं शिवशब्दवाच्यं ब्रह्म प्रतीयते "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त" इत्यादिश्रुत्या सायुज्यमुक्तेरपरोक्षज्ञाननिर्वर्त्यत्वेन ब्रह्मभावस्य मनुष्यर्षिगंधर्वेष्वविशेषात्साध्यवैचित्र्याभावेन साधनवैचित्र्यस्याप्यभावात्साधनवैचित्र्यकल्पितमधिकारितारतम्यमपि शशशृंगायमाणमिति प्रसादतारतम्यफलतारतम्यादिकुमतिकल्पनस्य तदनुगुणकोणांतर्वर्तितुलसी-

*महानारायणे–१–२ †महानारायणे–१ ×महानारायणे–१–२ ‡ महानारायणे–१–६ §बृहदारण्यके–३–४–१७

मणिभूषितबालविश्वस्ताश्रवणमात्ररमणीयत्वादनादरणीयमित्यास्तामयं दुष्पंथाः । यदपि गुणकृताधिकारितारतम्यं तत्तुच्छं । अध्ययनवतः क्रमिकयोर्धर्मब्रह्मणोरविरलोपस्थितस्य धर्मस्य विचारानंतरमेव ब्रह्मविचारस्य न्यायत्वेनांगांगित्वस्योपपादितत्वात्तदुभयसमुच्चयप्रतिपादकानामुक्तानां श्रुतीनां विरोधे स्मृतित्वेनाभिमतस्यास्याधमाधिकारित्वप्रतिपादकवचनस्यैव तूलायमानत्वाद्भक्तेर्विश्वासशब्दिताया अध्ययनकाल एवोपक्षीणत्वात्तदभावेऽध्ययनस्यैवासंभवेन गुरुविश्वासमूलस्य प्रतिपादकविश्वासस्य प्रतिपाद्यविश्वासपर्यवसायित्वादुक्तरीत्या प्रतिपाद्यप्रतिपादयितृविश्वासानामध्ययनादारभ्य यावद्वेदार्थपरिज्ञानमविच्छेदेनापेक्षितत्वेन सिद्धाया एव भक्तेर्ब्रह्मविचाराधिकारिविशेषणत्वेन प्रतिपादनं ब्रह्मविद्यासंप्रदायाज्ञानविजृंभितमिति । तत्रापि तस्याधमत्वप्रतिपादनधर्मविचारानुवर्तनाद्यकरणप्रयुक्तस्योपनयनकाल एव "§ सत्यान्न प्रमदितव्यं" इत्यादिना स्वाध्यायाचार्यादिविश्वासस्योपदिष्टत्वादन्यथासिद्धेः । विष्णुर्नाम भवन्मते वैकुंठादिवासीति तस्य ऋगादिवेदेष्वप्रतिपादनात् पूर्वोत्तरसंदर्भाननुगुणत्वेन क्वचिच्छ्रुतिवाक्योपलंभेऽपि तद्वदज्ञादीनामपि पारम्यप्रसिद्धे वैषम्ये प्रमाणाभावेन प्रतिपाद्य विश्वासस्यैव न्यायत्वात्तस्य कांडद्वयसाधारण्यादुत्तरकांडप्रतिपाद्यो विष्णुरित्येव । विष्णौ विश्वासप्रसक्तेर्मूढतांत्रिककुमतिकल्पनामात्रत्वाद्यदि विष्णुरित्येव निश्चयस्तदानीमथातो विष्णुजिज्ञासेत्येवं सर्वज्ञो व्यासः सूत्रयेदत एव ज्ञायते । सामन्यतो ब्रह्मशब्दवाच्यस्य श्रुतिप्रतिपाद्यस्य जिज्ञासोत्पत्तेर्भगवद्बादरायणतात्पर्यविषयत्वाद्वेदानधिकारिशूद्रादिसाधारणगुणमूर्तिविश्वासिभक्तजनविभजनपरस्यास्य वचनस्यात्र यावद्वेदवेदार्थनिश्चायकब्रह्मसूत्रव्याख्यानावसरे विलेखनप्रसक्तिः शास्त्रमर्यादातिलंघिनी कलिकल्मषाभिभूतग्रामसिंहाभिनीतसिंहरीतिः । वस्तुतस्तु यस्त्वध्ययनवानधीतवेदो ब्राह्मणः "त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युपधावामीति" छांदोग्यब्राह्मणार्थानुवादि ॥ "† त्वं ब्राह्मणस्त्वदुपधावनमेव कार्यं तद्ब्राह्मणैस्त्वदितरे न भवन्त्युपास्याः । न ब्राह्मणानवरवर्णनिषेवणेन संभावयेम यदि नः प्रपदं प्रमाणमिति" ॥ चतुर्वेदतात्पर्यसंग्रहप्रतिपादितार्थानुरोधेन शिव एवोपास्यः क्षत्रियैस्तु विष्णुराराधनीयः ब्राह्मणोऽध्येता यदि क्षत्रियवृत्तिं विष्णूपासनादिकमनुतिष्ठेत । तत्प्रयुक्तमधिकारिण आधम्यमिति युक्तमुत्पश्यामः । शमादिसहितस्य मध्यमत्वनिर्वचनमपि पूर्वाधिकारिवैलक्षण्येऽध्ययनमंतरा तंत्रमात्रप्रविष्टस्य वैदिकस्य मध्यमाधिकारित्वं विधर्मानुष्ठानपरब्राह्मणापेक्षया जातिशूद्रस्य स्वधर्मानुवर्तिन आधिक्यमिति शूद्रादेरवैदिकस्य तंत्रप्रविष्टस्य वैदिकधर्मच्युताद्विष्णुभक्तादाधिक्यप्रतिपादनौचित्येन सुवचमेवानुगृण्हीयुः । अन्यथा धर्माधिकारिणो वेदाध्ययनवतो मध्यमाधिकारिणश्च विशेषो न स्यात् । न चाधमाधिकारित्वे वेदाध्ययनविष्णुभक्तिप्रयोजकत्वं मध्यमाधिकारिण अध्ययनभक्तिशमादीनां प्रयोजकत्वमिति विशेष इति वाच्यं "अष्टमे वर्षे ब्राह्मणमुपनयीत पंचमे ब्रह्मवर्चसकाममिति" विधाय तमध्यापयीतेत्यध्ययनविध्युपजीविन उपनयनविधेरष्टवर्षादिगुणसहकृतत्वेनाष्टवर्षस्य पंचवर्षस्य वा गुरुकुलवासिनो बालस्य द्वादशवर्षाणीत्यनेन वेदे ब्रह्मचर्यमित्यादिश्रवणेन ब्रह्मचारिणः समिदाधानादियत्किंचिद्धर्मवतो विष्णुभक्त्यादेः क्वाप्यविधानात् ब्रह्मचारी वेदमधीत्योपन्याहृत्य दारान् कुर्वीतेति दारग्रहणादिना भविष्यत्काले गार्हस्थाश्रमस्य समनंतरम् । "¶ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" "* परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्ति अकृतः कृतेनेति" शमसंपत्तेर्विरागपूर्वकत्वेनोत्तमाधिकारिलक्षणप्रवेशादिहामुत्रफलभोगविरागमंतरा शमाद्यसंभवात्तत्पूर्वकालेऽ-

§ तैत्तिरीये–१–११–१ † तात्पर्यसंग्रहे–१२४ ¶ बृहदारण्यके–६–४–२२ * मुंडके–१–२–१२

ध्येतरि बाले विष्णुभक्तेर्गार्हस्थ्यानंतरं शमस्य च निरूपयितुमनुचितत्वादनुपपत्तेश्च । विरागपूर्वकत्वादस्मदुक्तरीत्याऽधमाधिकारेऽध्ययनशालित्वे सति क्षत्रवृत्तेर्विष्णुभक्तेरंगीकारः प्रयोजकः मध्यमाधिकारे च वेदाध्ययनराहित्येन शूद्रादेः शमसंपत्तिरिति श्रुतिसंप्रदायज्ञैरवलोकनीयः । तथा चाधमाधिकारिणोऽप्यतिशयितस्य मध्यमाधिकारिणः स्वधर्मे निरतस्याध्ययनराहित्यावश्यंभावात् । उक्तरीत्या विष्णुशब्दप्रतिपाद्यगुणमूर्तेः क्षत्रियदेवतायाः अधमाधिकारे प्रयोजकत्वेन छांदोग्यश्रुत्युपन्यासात्तद्वैलक्ष्यण्यस्योत्तमाधिकारे प्रतिपादनीयत्वेन तल्लक्षणस्थविष्णुशब्दस्योत्तमाधिकारित्वप्रयोजकहरसृडभवशर्वादिशब्दोपस्थितव्यापकब्रह्मपरत्वौचित्यात् । किंच सन्यस्ताखिलकर्मवानित्यत्र भवदुक्तरीत्या परीक्ष्य लोकानिति श्रुत्यनुसारेण च सकलकर्मपरित्यागौचित्येन बालविधवाभुजद्वयीमकरिकापत्रायमाणप्रचक्राचंकनतत्कर्णकुहरविन्यस्तस्त्रीशूद्रब्रह्मबंधूनां तत्र ज्ञानेऽधिकारितेत्युक्तसंदर्भादनुगुणवैदिकत्वेनाभिमतवैदिकनारायणाष्टाक्षर्याद्युपवर्णनतत्करसंस्पृष्टधनकनकवस्तुवाहनादिप्रतिग्रहैकादशीनिर्णायकमठविभजनपूर्वाश्रमपत्नीपरिपालनादीनामतिहेयानामस्सरणीयानामन्येषामधर्माणां चानुग्रहणपुरस्सरं परःसहस्रविदितसाक्षाद्ब्रह्मविद्यांगभूतस्थूलोपासनानामग्निष्टोमादिविश्वसृजामयनपर्यंतानां सूक्ष्मोपासनानां दहरादिविद्यानां वैराग्यभाग्योदयानां च तिरस्करणपूर्वकमौपासनादितिरस्कारस्यानेन वचनेनान्यैर्दुर्वचनैश्च प्रमाणयितुस्तव वेदशास्त्रपुराणेतिहाससिद्धान्तनिष्कर्षः शोभतेतरामभिनंदयश्चायमुरस्ताडनं बाल्यदारिद्र्यदुःखितविधवाभिरिति ब्रह्मेशानादीनामपकर्षप्रतिपादनफलमिदमुत्पश्यामः । तत्त्वतस्तु विरागस्य विषयदोषाधीनत्वेन ज्ञाते विषयदोषे विशिष्टधर्मानुवर्तनद्वारा चित्तनैर्मल्यं संपाद्य समनंतरं विषयाः परित्याज्या इति विषयेषु दोषनिश्चयाय धर्मानुवर्तनावश्यंभावात्सन्यस्ताखिलकर्मवानित्यत्रापि कर्मफलपरित्यागमात्रस्य विवक्षितत्त्वात् एतादृशवचनानां "गवां कंडूयमानेन कोटियज्ञफलं लभेत्" इत्यादिवत्प्रयोजनमात्रफलकत्वेन स्तावकत्वात् । एतादृशश्रुतिसंप्रदायविरुद्धवचनप्रतिवचनविलेखनं तु विद्वत्कृत्यमेव न भवतीत्युपेक्षामहे । वेदान्तशास्त्रव्याख्यानावसरे तंत्रवचनविलेखनं तु "अंत्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ॥ स्त्रीशूद्रब्रह्मबंधूनां तंत्रज्ञानेऽधिकारितेति" स्वलिखितवचनसिद्धस्वकीयतन्त्राधिकारमात्रोपाधिकशूद्रत्वप्रकटनायांत्यजत्वप्रकटनाय वेत्यन्यथा "अष्टमे वर्षे ब्राह्मणमुपनयीत तमध्यापयीते" त्यध्ययनविध्याक्षिप्तवेदार्थविचारावसरेऽत्यजस्याधिकारोऽस्ति न वेति संशयाभावाच्चोरो गच्छतीत्युक्तिभीतचोरपलायनवद्वैदिकानधिकारिणस्तव वैदिकास्सरणीयान्त्यजातिस्सरणमिति संधे भूयस्ताडितनितंबाः प्रहसेयुः कासांचिदुदाहृतश्रुतीनां फलत्यागमात्रविश्रांतत्वाच्च । परीक्ष्य लोकानित्यादौ चितानिति भूतार्थवाचिकक्तप्रत्ययेनानुष्ठितानामेव परीक्ष्यानुष्ठितानां न चान्यानुष्ठितकर्मणां जन्मान्तरानुष्ठितानां चापरीक्ष्यानिर्वेदौ संभवतः । न ह्यन्यदृष्टसुवर्णादेरन्यः परीक्षकः परीक्षणेन निर्वेदिता च । अंगिनमंतरांऽगानुष्ठानेन फलराहित्यवत्समुच्चितस्य फलसाधनत्वे नास्त्यकृतः कृतेनेति श्रुतेस्तात्पर्यात् । परित्यागश्च प्रसक्तस्येत्यप्रसक्तस्य परित्यागांगीकारे चैत्रपरिचितदोषेण भवन्तं राजानो द्विजराजाश्च शिक्षेयुः । अत उदाहृतश्रुत्यैव धर्मविचारानंतरं ब्रह्मविचार इति सिद्धेर्जातिकृतगुणकृतविभागस्यावैदिकादिविभाजकस्यात्र विलेखनासंभवादध्ययनविधाने स्त्रीशूद्राधिकारसंदेहतन्निर्णययोर्न्याय्यत्वेनाध्ययनविधिविचारपराभूतस्त्रीशूद्रादेर्वेदाध्ययनानंतरविभाविपूर्वकांडार्थसमनंतरभाविनः शिष्टार्थविचारस्य विधौ स्त्रीशूद्रादेः प्रसक्तिरपूपस्पर्शनताडितस्य शुनो घृतस्पर्शाय पुनरागमनमिति । अत एवोदाहृतश्रुतौ "§ समित्पाणिः श्रोत्रियं

§ मुंडके-१-२-१२

ब्रह्मनिष्ठमिति" समितपाणित्वं गुरुकृतकर्मोपयोगार्थमिति तद्विशेषणमेव ज्ञानकर्मसमुच्चयं व्याचष्टे। अन्यथा कर्मनिर्विण्णस्य गुरूपसर्पणावसरे पुनः समितपाणित्वासंभवात् "* यमेवैष वृणुत" इति श्रुतिरपि लिंगधारणं विधत्ते "× तस्यैष आत्मा विवृणुते तनूं स्वां" इति तनुवर्णस्य स्वरूपाभेदरूपस्य भेदपुरस्कृतस्य वक्ष्यमाणभेदाभेदसिद्धान्तानुस्मरणात्। "§ यस्य देवे" इत्यादि श्रुतिरपि देवशब्दिताद्यमूर्तिविलाससगुणमूर्तिभक्तिमतः परमेश्वरसायुज्यप्राप्तेर्गुरुभक्तिकृतत्वे तात्पर्यमौचित्यात्। अन्यथा वेदशब्दवैयर्थ्यापत्तेः गुराविति देव इति सप्तम्यंतपदप्रतिपाद्ययोर्यथाशब्देन साम्यप्रतिपादनात् सावयवश्च श्रवणं मननमित्यत्र श्रवणं नाम वेदान्तानामुत्तमाधिकारप्रयोजकविष्णुमाहात्म्यश्रवणं तस्य मध्यमाधिकारप्रयोजकत्वासंभवेनावैदिकपांचरात्रादितंत्रपूर्वकश्रवणपरत्वस्यैव वक्तव्यत्वात्। ज्ञानसंपत्त्येत्यत्र ज्ञानेनेति वक्तव्ये संपत्त्येति संपत्तिशब्दवैयर्थ्यभिया वेदान्तार्थज्ञानमेव ज्ञानसंपत्तिशब्दाभ्यामभिधीयत इति युक्तं प्रसादात्त्वधमा विष्णोरित्यत्र अधमत्वं विष्णौ विशेषणं क्षत्रियदेवतायाः विष्णोः प्रसादाद्वीरस्वर्गादिवत् कश्चन स्वर्गो वैकुंठादिसुखविशेषो नश्वरफलं तत्र श्रवणजन्यांतःकरणप्रसादाज्जनलोकः उक्तरीत्या "श्रोतव्यः श्रुतिवाक्येभ्यः" इति नियमविधिबोधितश्रवणजनितज्ञानं पाशविच्छेदकमिति ज्ञानसंपत्तौ श्रौतज्ञाने विशिष्टं किं साधनमित्याकांक्षायामश्रौतश्रवणमनननिदिध्यासनैर्भक्तिशब्दिततात्त्विकार्थविश्वासेन च जन्मांतरशिवप्रसादपूर्वकवेदान्तज्ञानमुत्पाद्यत इत्यर्थः अन्यथा "प्रधानं नान्यदिष्यत" इति प्रधानभूतवेदान्तज्ञानशब्दितज्ञानसंपत्तिरेव प्रधानं पाशविमोचने साक्षात्साधनमन्यत्सर्वं तांत्रिकज्ञानं भविष्यज्जन्मनि श्रौतज्ञानोत्पादकं तदेव परमत्वेन यदि ज्ञायेत तदेव नरकसाधनं भवेदिति सूचनाय नान्यदिति निषेधस्य सार्थक्यप्रतिपादनसंभवादत एवैतान्युक्तानि वैदिकज्ञानसाधनानि विहाय तांत्रिकः कुतोऽप्युपायादुत्कृष्टात् ज्ञानमपि प्राप्तः न प्राप्त इति काकूक्तिः। तस्मादवैदिकानां भावगतादितंत्रज्ञानद्वारा भविष्यज्जन्मनि शिवज्ञानेन मुक्तिरिति वैदिकज्ञानस्य सर्वोत्कृष्टता तांत्रिकाणामपि स्वमार्गस्थानां क्रमेण मुक्तिस्तद्विपरीतानां कुंभीपाकादिनरकनिवास इति स्पष्टं। यद्यपि ब्रह्मशब्दो विष्णावेवेति प्रमाणोपन्यासः। "† अंतःसमुद्रे कवयो वदन्तीति" तदपि छांदोग्याष्टमप्रपाठके "§§तदरश्च ह वै ण्यश्चार्णवावित्यारभ्य सोमसवनस्तदपराजिता पूः" इति दहराद्युपासनाविषयगुणविशेषविधानैदंपर्येण प्रवृत्तेः। न चायं हार्ददहरोपासनाविषयो नारायणः किंतु शिव एव नारायणस्योपासककोटिप्रवेशो तात्पर्यवर्णनौचित्यस्य दर्शितत्वात्। अथवा जीवसमष्टिरूपस्य हिरण्यगर्भस्य जगत्कारणत्वप्रतिपादनप्रस्तावे "‡ यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्व्यससर्ज भूम्यां। यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणीति" महोपनिषदि श्रूयते। अत्र सकलजगत्प्रसूत्यादिकारणत्वेन श्रूयमाणः पुरुषोऽन्यो नारायणः परमेश्वरो वेति विषये हिरण्यगर्भे इति वर्णयन्ति तथा च श्रूयते। "एकार्णवे हि त्रैलोक्ये ब्रह्मनारायणात्मकः॥ भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहित" इति एतेन ब्रह्मणः समुद्रशायित्वमवगम्यते तदिह श्रूयते तल्लिंगं "यमन्तःसमुद्रेऽस्य गुरोर्गुणमूर्तिभक्तिसाम्यसंपादनानंतरं निर्गुणब्रह्मशब्दितं लिंगतत्वं जिज्ञास्यमिति वक्तव्यत्वात् देवयजनं धर्मरूपं संपाद्य तदनंतरं ब्रह्मणि विश्वासलाभस्य क्रमनियमप्रतिपादनाल्लिखितश्रुतिस्मृत्यानुगुण्यमस्माकमिति विभावनीयो विद्वद्भिः भक्तिमतां हराविति त्रैवर्णिकानां वेदोक्त इति ब्रह्मक्षत्रियविशां वैदिकाधिकारं मुख्यतः प्राप्तमनूद्य हरौ सम्यग्भ-

* कठवल्ल्यां–२–२३ × कठवल्ल्यां–१–२–२३ § श्वेताश्वतरे–६–२३ † महानारायणे–१–३ §§ छां -८–५–३ ‡ महानारायणे च–१

क्तिमतामपि इत्यपिशब्दस्वारस्याद्धरिभक्तानां तंत्रमात्राधिकारिता । हरेर्जनिमतो अनेकश्रुतिभ्यः क्षत्रियजातीयोपास्यत्वेन क्षत्रियत्वेन च ब्राह्मण्याभावात् ब्रह्मकोटित्वं नेति तद्भक्तिप्रयुक्ततंत्रेष्वधिकारः केचिद्देतेषां नीचानामप्याहुरिति सम्यग्भक्तिमतामित्यस्यार्थः । तर्हि क्वादि? कारितस्त्रीणां शूद्राणामन्योक्तेकदेशे एव तथोत्तमस्त्रीणामूर्वश्यादीनां हरिभक्तिमतीनां शिवभक्तिविशेषेण प्रतिप्रदोषमिंद्रादिनियोगेन शिवसमीपवर्तिनीनां सामान्यस्त्रीवद्वैदिकानधिकारो वा अस्ति शिवसमीपवर्तित्वप्रयुक्तप्राशस्त्येन वैदिकज्ञानाधिकारित्वमिति संशये पूर्वस्माद्विशेषयति । उत्तमस्त्रीणामिति सुवचनत्वात् । तुशब्दस्य विशेषार्थद्योतकत्वादिति । यतो नारायणप्रसादामृतेन मोक्ष इति । तस्य वाक्यस्यायमप्यर्थो नेतुं शक्यः । नारायणस्य प्रसादो वरिवस्ययार्चनध्यानादिना वा योऽयं प्रसादः धनकनकादिप्रापंचिकसुखमर्पणरूपस्तत एव "पुनरपि जननं पुनरपि मरणमिति" जननमरणग्रस्तत्वेन नारायणप्रसादवतां संसारपाशान्न मोक्षः किंतु मरणमात्रं । पाशविच्छेदस्य पशुपतिवरेणैव लभ्यत्वात् नारायणप्रसादेन मृतानां कुतो मुक्तिर्नेत्यत्र । न च ज्ञानं विनाऽत्यर्थप्रसाद इत्याह । जीवब्रह्मैक्यशब्दितलिंगांगसामरस्यं विनाऽत्यर्थस्यार्थजातं विषयजातमतिक्रांतस्य शिवस्य प्रसादः पाशविच्छेदरूपः सामान्यदेवताप्रसादस्य नश्वरफलपर्यवसायित्वेन ज्ञानं विना पाशविमोचनाभावेन ज्ञानस्यात्यर्थप्रसादेन विष्णुप्रसादविलक्षणेन शिवप्रसादेनैवेत्यर्थः । ब्रह्मशब्दितं शिवस्वरूपं विचारणीयं " †† प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय " इति भवदुदाहृतवचनेनैव विष्णोः शिवभक्तत्वप्रतीतेः प्रियशब्देन सख्यं प्रतीयते । सख्यं च सतीत्यर्थादिना "विद्वानेव विजानाति विद्वज्जनपरिश्रममिति" न्यायेन ब्रह्मज्ञानित्वं नारायणस्यास्तीत्यन्योऽपि तस्य प्रियः स्यात् । यश्च नारदीयवचनोपन्यासः प्रसादत्रैविध्यविभजनपरः कर्मणा त्वधम इति कर्मशब्देनैकफलमात्रोद्देश्यककाम्यधर्मः न तु नित्यनैमित्तिकादिचित्तनैर्मल्यसाधनधर्मस्तस्योत्तमत्वादन्यथा " † यज्ञेन दानेन तपसाऽनाशकेनेत्यादि " श्रुतेर्ज्ञानकर्मसमुच्चयसिद्धान्तविरोधः स्यात् । अन्यथा विशिष्टधर्मानुवर्तनाभावे चित्तनैर्मल्याभावे श्रवणाद्यवभासानुदयात् । स्मृतिश्च श्रुतिविरोधिनीति स्मृत्यधिकरणविरोधे स्मृतेर्दुर्बलत्वात् " ‡ कवयो वदन्ति " " $ प्रजापतिश्चरति गर्भे अंतः स एव " " * विवेश भूतानि चराचराणीति " ह्युपक्रमे सर्वानुप्रविष्टतयावगम्यते तदुपसंहारे च " § धाता यथा पूर्वमकल्पयदित्यादि " श्रूयते अत एकस्य हिरण्यगर्भस्यैव कारणत्वमवगम्यते तस्मादुपक्रमोपसंहारसिद्धस्य हिरण्यगर्भस्यावांतरसिद्धधर्मोपपत्तिः किंच तत्प्रतिपादनप्रदेशान्तरोपसंहारश्च कृतः । "× अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टाविति" अद्भ्यः संभूत इत्यत्र प्रजापतिरेव प्रतिपाद्यः " ¶ प्रजापतिश्चरति गर्भे अंतः अजायमानो बहुधा विजायत " इत्यादिदर्शनात् " ‖ हिरण्यगर्भः समवर्ततताग्र " इत्यत्रापि प्रजापतिर्वै हिरण्यगर्भ इति श्रवणात् ततो हिरण्यगर्भ एव जगत्प्रसूतिहेतुत्वादिति नात्र प्रतिपाद्यत इति नारायणस्य भवदभिमतस्य यमंतः समुद्रइत्यादिमंत्रप्रतिपाद्यत्वं न संगच्छते । वस्तुतस्तु परमेश्वराल्लिंगशब्दवाच्यादितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्यः जगत्प्रसूतित्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः । तथा च "नेतरोऽनुपपत्तेरिति" सूत्रमस्मिन्नेवार्थे स्वरसवद्भवति । तथाहि " ‡‡ यतः प्रसूता जगतः प्रसूती " इत्यारभ्य जगत्प्रसूतिहेतोस्तस्य " §§ अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम् ॥ यदेकमव्यक्तमनंतरूपं विश्वं

†† भगवद्गीतायां–७–१७ † बृहदारण्यके–६–४–२२ ‡ महानारायणे–१ $ महानारायणे–१–
* महानारायणे–१ § महानारायणे–५–७ × महानारायणे–२ ¶ तैत्तिरीय्यारण्यक ब्रह्ममेधे पुरुषसूक्ते
–१३–१ ‖ तैत्तिरिये सं–४–१–८ ‡‡ महानारायणे–१–१ §§ महानारायणे–१–१

पुराणं तमसः परस्तात्" इत्यादिना सर्वोत्कृष्टत्वं तमसः प्रकृतिमंडलात् परत्वं चावगम्यते। तदंडान्तर्वर्तिनो न संभवति। किंच "¶ य एनं विदुरमृतास्ते भवन्ति" इत्यस्य ज्ञानादमृतत्वमवगम्यते न हिरण्यगर्भे संभवति। परमेश्वरस्य हि मुक्तिहेतुत्वमवधारणं लिंगं "* यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः॥ तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" इति श्रवणात् यदुक्तमुपक्रमोपसंहारासिद्ध इति तदप्रयोजकमनुपपत्त्या प्रजापतिधातृशब्दौ हिरण्यगर्भं विहाय प्रजानां पशूनां पतिं जगद्धातारं परमेश्वरमेव प्रतिपादयतः "× अद्भ्यः संभूतो हिरण्यगर्भ" इत्युभयत्रापि परमेश्वर एव प्रतिपाद्यः। "§ य ईशे अस्य द्विपदश्चतुष्पदः" "‖ आदित्यवर्णं तमसः परस्तात्" इति विश्वेश्वरत्वविश्वातीतत्वतल्लिंगात्। ततो जगत्कारणत्वादिना प्रजापतिशब्दवाच्यः परमेश्वरो न हिरण्यगर्भः परमेश्वरेण हिरण्यगर्भस्याभेदाज्जगत्कारणत्वमस्तीति चेन्न। अस्यामेव महोपनिषदि परमेश्वरहिरण्यगर्भयोर्भेदो व्यपदिश्यते। कारणकार्यत्वेन "† यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानं" इत्यतो हिरण्यगर्भादेः सर्वप्रपंचस्य कारणत्वमीश्वरस्येति युक्तं। ननु "‡ प्रजापतिरकामयत प्रजाः सृजेयेति" सर्वत्र श्रुतिषु संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयत इति चेन्नायं विद्वत्पंथाः। तस्य जगत्कारणत्वेऽनुमानापेक्षा युक्त्यपेक्षा च नास्ति। तस्य कामस्यावांतरसृष्टिविषयत्वात्परमेश्वरस्यैव हिरण्यगर्भात्मनाऽन्यस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणादनयोर्हिरण्यगर्भेश्वरयोरभेद एवाभ्युपेय इत्यपि अस्मिन्नुपनिषत्प्रकरण एव हिरण्यगर्भस्य तद्योगं तस्य परमेश्वरयोगं शेषत्वं संबंधं शास्तीत्यर्थके तु "अस्मिन्नस्य च तद्योगं शास्ति" इत्युत्तरसूत्रार्थपर्यालोचनया च "$ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरिति" ह्ययं मन्त्रस्ततः परमेश्वर एव जगत्कारणं तच्छेषभूतो हिरण्यगर्भ इति सिद्धं। ततो वक्ष्यमाणैरधिकरणन्यायैः सर्वज्ञं नित्यतृप्तमनादिभूतं स्वतंत्रमलुप्तशक्तिकमनंतशक्तिकं सकलजगदुभयकारणं समस्तोपनिषच्छास्त्रसमन्वयैकप्रतिपाद्यं स्वप्रकारनिखिलप्रपंचविशिष्टाद्वितीयस्वभावं सच्चिदानंदरूपं संसारपाशच्छेदकारणं चिदचिदर्थांतरं शिवतत्त्वं परंब्रह्मेति सिद्धं। तस्मात् "§§ अंतःसमुद्रे कवयो वयन्ति" इत्यादीनां न नारायणपरत्वमत एव "†† तदेव ब्रह्म परमं कवीनां" इत्यादिरपि शास्त्रदृष्ट्यान्तोपदेशो वामदेववदिति सूत्राभिप्रायेणेति यत्किंचिदेतदन्यथोदाहृतबहुश्रुतिविरोधात् तन्नो विष्णुरित्यादिरपि "$$ तन्नो रुद्रः प्रचोदयात्" इत्यर्थानुसारेण नेयः। भाल्लवेयश्रुतिरपि परमविष्णुशब्देनोक्तरीत्या शिववाचकेन शिवपरा भवितुमर्हति "नामानि तव गोविंद यानि लोके महान्ति च॥ तान्येव मम नामानि नात्र कार्या विचारणा" इति हरिवंशवचनेन सर्वनाम्नां शिवपरत्वनिश्चयात् तदुपबृंहितायाः श्रुतेरत्र शिवपरत्वौचित्यादजस्य नाभाविति लिंगमपि गुणमूर्तिपरस्परस्पर्धावतरणास्तुतिपरत्वेन वा जात इत्येवं "‡‡ कश्चिद्धीरुः प्रपद्यत" इत्यादिश्रुत्यंतरसिद्धजनिरहितपरमेश्वरशेषहिरण्यगर्भपरत्वेन वा नेयः। न चेदं जनिराहित्यलिंगं विष्णोः संभवति "जातो बृहन्" इत्यादिश्रुत्या देवकीकौसल्यादियोनिजननपुरुषवीर्यकणानुषंगादीनां भारतरामायणादिप्रसिद्धेः गरुडमांत्रिकयोरिवोपासककोटित्वेन वा नेयत्वाद्विष्णुशब्दस्य शिवपरत्वप्रसिद्धेश्च। यदपि "तंत्रमुग्रं कृणोम्युग्रो रुद्र" इत्यादि तदपि "°° ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इत्यादिश्रुत्यनुसंधानेन गुणमूर्तिपरमेवेत्यवश्यं वक्तव्यत्वात्। अन्यथा विश्वाधिकत्वप्रतिपादकश्रुतिविरोधापत्तेः। एतत्सर्वं ग्रन्थां-

¶ महानारायणे–१–३ * श्वेताश्वतरे–६–२० × महानारायणे–१–३ § तैत्तिरीयसंहितायां ४–१–८ ‖ तैत्तिरीयारण्यके–३–१३ † महानारायणे–१२ ‡ तैत्तिरीये सं–३–१–१ $ महानारायणे–२१ §§ महानारायणे–१–१ †† महानारायणे–१–२ $$ महानारायणे–१–५ ‡‡ श्वेताश्वतरे–४–२१ °° अथर्वशिखायाम्–३

तरे स्पष्टमेवेति नात्र विलिख्यते विस्तरापत्तेः । यदपि वेदे रामायण इत्यादि तदप्यस्माकमिष्टमेव। रामाद्यवतारकृतशिवलिंगप्रतिष्ठादेरगस्त्यकृतविरजादीक्षापुरस्कृतादित्यहृदयाद्युपदेशनिर्वर्तितजयप्रतिपादनेन । कृष्णाद्यवतारकृतशिवपूजातदनुग्रहसंपादनप्रभृतीनां वर्णनद्वारा शिवभक्तत्वेन प्रशस्तिरभ्यर्हिततरा स्यात् । वाराहवचने "एष मोहं सृजामीति" प्रतिज्ञाय सकलजनमोहकत्वं स्वस्य कथं स्यादिति विष्णुः स्वयमेवाशंक्य शिवमेव प्रार्थयति "अतथ्यानि वितथ्यानि मोहशास्त्राणि कारय" इति णिजन्तकृञ् । मां प्रेरयेति प्रेरकं परमात्मानं परमशिवं वृतवान् । एतेन विष्णुनिर्मितशास्त्राणि कानि चेन्मोहकशास्त्राणि वर्तन्त इति जगद्वंचकत्वं विष्णोः सिद्धं । ततः किमित्याशंक्य शिवंप्रति विष्णुवचनं ॥ "प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्विति" आत्मानं त्वद्भावनया त्वत्स्वरूपं प्रकाशं कुरु । मुमुक्षूपास्यत्वेन सकलजनाराधनीयत्वेन च प्रसिद्धिं देहि। त्वदाज्ञया जातसामर्थ्यविशेषः सन्नहं मोहशास्त्राणि विष्णुसर्वोत्कर्षप्रतिपादकानि श्रोतॄणां जनानां कुंभीपाकादिनरकप्रदानि दुष्टतंत्राणि कृतवानेवं दुष्टतंत्रनिर्मातर्यपि मयीव भगवदनुग्रहेणैव जनमोहकत्वदोषोऽपि निवृत्तोऽभवत् । ततः किमित्याकांक्षायां भगवतोऽगणितमहिमविलासस्य प्रकाशः स्यात् । त्वद्भावनारहितवास्तव्यत्वस्य स्वरूपस्य मदीयस्याप्रकाशः स्यात् । अतः अप्रकाशं कुर्विति प्रार्थनेति विष्णुकृतशिवस्वरूपस्य प्रकाशनस्य स्वस्वरूपस्य मोहकतायाः अप्रकाशस्य च प्रार्थनेन शिवः कर्तुमकर्तुमन्यथाकर्तुमपि समर्थ इति तदधीनत्वमितरेषां च सिध्यति। पशुपाशविमोचकः शिव इति श्रुतिसिद्धं । सत्यज्ञानानंदात्मकं त्वत्स्वरूपं प्रकटितं भवति । इयं ते लीला मोहशास्त्रनिर्मातुर्मम मोहिनीवेषादिना रक्ष । मोहयितुरपि अप्रकाशः प्रकाशशब्दवाच्यभवद्वैलक्षण्यं मम स्फुरत्विति विष्णुकृतशिववैलक्षण्यप्रार्थनापरोऽयं श्लोक इति । अथवा अप्रकाशमप्सु क्षीरसमुद्रादौ प्रकाशं कुर्विति प्रार्थनेति कर्तृत्वं नारायणस्य कारयितृत्वं शिवस्येति प्रेर्यप्रेरकभावस्फुटमेवाभाति । ततः शिवपारम्यं सिद्धं । श्वपचभाष्यनिश्चितश्वपचवचनस्याप्ययमर्थः । यदेव यस्मिन् काले ब्रह्महत्यादिवागोचरपापनिरतानां यावन्नरकभोगप्रथमपात्राणां महामोहान्धानां कुपितवीर्यनिष्पन्नानां किं लक्षणमिति पृष्टवन्तमच्युतं प्रति संबोधनं अच्युतेति च्युतः पाशच्युतः स न भवतीति अच्युतः लक्ष्मीपतिः संसारिदशावतारणशापग्रस्तः तस्य संबुद्धिः अच्युतेति विशेषतो जीवकोटिप्रविष्टः "पुनरपि जननं पुनरपि मरणं" देवक्यादियोनिद्वारे रे अच्युत तामसशास्त्रनिर्मातः त्वं पापिनो जनान् मोहयासि तेषां रक्षणसाधनमतिप्रदाता जीवकोटिप्रविष्टो महेश्वरभक्ताग्रेसरनंदीश्वरादिवेत्रताडितः स्वयमपि लोकानां प्राङ्मुखश्चेत् किं लक्षणं तेषां भवेदित्युक्ते ब्रह्मेशानादयः सुरगणादिगुणमूर्तयः सृष्टिस्थितिसंहारादिकृता अविश्वप्रचारादप्रकृष्टा इव भान्ति । गुणमूर्तिषु निकृष्टबुद्ध्यपेक्षया क्षरसाधनं किमन्यदपेक्षणीयं । तेन दोषेण नारकिणो विण्मूत्रादिनरकेषु तप्यत इति तापः केनापि वर्णितुमशक्यः । इदमत्राकूतं त्वं पराङ्मुखश्चेत् क्षरतां जनानामेवं बुद्धिरुदेति । अच्युत त्वं मोहकोऽपि पराङ्मुखश्चेदप्यन्ये अच्युता भवतोऽधिकाः ब्रह्मेशानादयः सुराः किं वाऽपि नोद्धरीयुरित्याशंक्य मोहकत्वं पराङ्मुखः सन् ब्रह्मादिदेवेषूत्कृष्टबुद्धिं न ददासि नीचत्वबुद्धिमेवार्पयसि । उत्कृष्टेषु देवेषु नीचबुद्धिं कृत्वाऽधोऽधो नयसीति पातित्यमेव तेषां नोद्धारः कल्पकोटिशतैरपि । इति दुष्टशिक्षार्थं स्वयमपि पराङ्मुखः सन्नन्यदेवताभक्तिमपि विनाशयतीति वाचः प्रशंसत्वे स्वेन कृतपुत्रादिच्छेत्पराजयमितिन्यायादेतेन विष्णुरभिमुखश्चेद्ब्रह्मादिषु कारणमूर्तिषूत्कृष्टबुद्धिसमर्पको भवति । तत उद्धरति लोके स्वयमशक्तोऽपि शक्तिविश्वासं विभावयन्तं भक्तमुद्धरतीति प्रसिद्धिः । स्वयं पराङ्मुखश्चेत्सर्वे दृढतरमतिपराङ्मुखा भवन्ति । तथा भेदबुद्धिं जनयन्तीति युक्तमे-

वेदं। देवतांतरदूषकस्य विष्णुप्रसादराहित्यमपीत्येतद्वचनार्थस्य स्कांदत्वेन प्रमाणयितुश्च पश्चादपकृष्टमित्यस्य श्लोकस्यार्थमविजानतस्तवैव विष्णुभक्तिरपि दूरायतेतरां। न परेण भ्रांतमिति स्वेनापि भ्रमितव्यं। न हिं पादरक्षा दंशतीति सा प्रतिदंशनीयेतिन्यायेन दुर्मतभाष्यपूर्वपक्षमेव परित्यजामः। स्पष्टं चेदमुत्तरसंदर्भेण। अहं न च शिव इति अनंतकल्याणगुणाभिरामसर्वज्ञतादिषाड्गुण्यैश्वर्यवान् शिवः अहं न तादृशमहिमविलासः सर्वं शिवशक्त्यंकांशभागिन इत्यर्थः। यदपि बालेति उक्तरीत्या च्युतःक्रीडनकैरस्माभिर्लोकवत्तु लीलाकैवल्यमिति सूत्रार्थानुसारेण ब्रह्माहंभावनया बालो यद्वद्वाल इव क्रीडत्ययमभिसंधिः। स्वाभिप्रायविषयाद्ब्रह्मादिषूत्कृष्टबुद्धिदानं स्वाभिप्रायविषयेषु देवान्तरनिकृष्टबुद्धिदानमेतावन्मात्रे स्वर्गनरकादिविधानलीलेति वैषम्यनैर्घृण्यादिकमपि विष्णुलीलेति बालसादृश्यमिति प्रकृतमनुसरामः। अतःशब्दोऽयं वृत्तस्य हेतुभावे वर्तते। यतोऽधीत वेदेन धर्मो विचारितः। अतः तदनुष्ठानसंपन्नचित्तशुद्धिमता तत्कालसंपन्नविवेकादिगुणसहकृतपरभक्तिसंभावितेनानेन ब्रह्मापि निरतिशयनिश्रेयसफलं विचारणीयमिति ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणिषष्ठी "§ परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" इत्यादिवाक्यं विषयः। ब्रह्मविचारार्हं भवति न वेति संदेहः। तत्र पूर्वपक्षः ब्रह्म विचारयोग्यं न भवति तस्मिन्संदेहाभावात् कथंवा संदेहाभावः। "× अयमात्मा ब्रह्म" इत्ययमिति प्रत्ययेन प्रत्यक्षसिद्धमेवात्मानं ब्रह्मेत्युपदिशति तत्र संदेहाभावात् कुतोऽत्र संदेहकलंकप्रसंगः। किंच विचारस्य किंचित्फलं वक्तव्यं। तच्च तद्विषयं ज्ञानमेवान्यत् ज्ञानं च ज्ञेयपरिच्छेदः। वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति न वेति विप्रतिपत्तिः। यदि परिच्छिनत्ति तस्य तदा परिच्छेदातीतत्वभंगप्रसंगः। यदि वा न परिच्छिनत्ति तदा यथावद्ब्रह्म न ब्रह्म न प्रकाशेत। अयमिति परिच्छिन्नो घटो ह्यवगम्यते। ततो ब्रह्मविषयं ज्ञानमपि न संभवत्यपिच प्रयोजनमपि न किंचित्पश्यामः। न मुक्तिः प्रयोजनम्। अनादिसिद्धसंसारस्य दुरपहतत्वादिति। अयमत्र सिद्धान्तः। सर्वथा समारंभणीयं वेदान्तशास्त्रं ब्रह्मणः संदिग्धतया विषयत्वसंभवात्तन्निर्णयस्य सप्रयोजनत्वात् यत् "*अयमात्मा ब्रह्म" इत्यादिश्रुतिरमुमेवाहंकारबद्धं संसारिणं ब्रह्मेत्यभिधत्ते। अत एव संदेहः निरस्तसमस्तोपप्लवकलंकनिरतिशयज्ञानानंदादिशक्तिमहिमातिशयत्वं हि ब्रह्मत्वं। अनाद्यज्ञानवासनावष्टंभविजृंभितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं तु जीवत्वं। कथमेतयोः परस्परविलक्षणयोरेकीभावमाहुरिति संशयः किं न स्यात्। अपिचैवमपि संदिह्यते "† अन्नं ब्रह्म" "$ मनो ब्रह्म" "‡ विज्ञानं ब्रह्म" "¶ आदित्यो ब्रह्म" "§§ नारायणपरं ब्रह्म" इत्यादयोऽन्यमन्यमर्थं ब्रह्मेत्युपदिशन्ति। तत्र किं वा ब्रह्मेति बहुधा संदिग्धं विचारार्हं ब्रह्म भवति। तत्र श्रवणमननादिनिश्चितस्य भक्तिज्ञानविशेषाभिमुखस्य परमकारुणिकस्य महादेशिकस्य सर्वानुग्राहकस्य सर्वान्तर्यामिणः शिवस्य परस्य ब्रह्मणः प्रसादातिशयेनास्याधिकारिणः प्रध्वस्तपाशपटला प्रत्यक्षीभूतनिरतिशयज्ञानानंदस्वरूपा तत्समानगुणसारकैवल्यलक्ष्मीः प्रयोजनं च भवति। ततः सविषयं सप्रयोजनं वेदान्तश्रवणमिति विषयसंशयपूर्वपक्षसिद्धान्तसंगतीनामाधारत्वमिहाधिकरणत्वमितीदमेकमधिकरणं। यदुक्तं ज्ञेयपरिच्छेदरूपत्वाद्ज्ञानस्य च तदपरिच्छिन्नब्रह्मविषयं न संभवतीति तदविचारविलसितमीदृग्विधर्मिति ब्रह्मणः परिच्छेदासंभवेऽपि लक्षणमुखेनेत-

§ मुंडके–१–२–१२ × मांडूक्ये––२ * बृहदारण्यके–४–५–१९ † छांदोग्ये––७–९–१
$ छांदोग्ये––७–३–२ ‡ छांदोग्ये––७–७–२ ¶ छांदोग्ये––३–१९–१ §§ महानारायणे–११–४

रव्यावृत्ततामात्रेण परिच्छेदसंभवात्। लक्षणेन परिच्छेदो हि लक्ष्यविषयमितरव्यावृत्ततया ज्ञानं उद्दिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यैर्निरूपिते परीक्षिते च तल्लक्षणशून्येभ्यः स्वगतसजातीयविजातीयेभ्यस्तदितरसकलपदार्थेभ्यो व्यावृत्तरूपं यत्तद्ब्रह्मेति विज्ञायते। तत्समीचीनोऽयं ब्रह्मविषयः शास्त्रारंभः। यदसंदिग्धमप्रयोजनं च तत्खलु न प्रेक्षावतां विचारकक्ष्यामारोहति। अस्य तु वेदान्तशास्त्रविचारस्य प्रमाणयुक्त्याभासः प्रतिभासवशात्संदेहास्पदं ब्रह्मविषयो भवति। "× ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनंतं ब्रह्म" "¶ ज्ञात्वा शिवं शांतिमत्यंतमेति" "§ ईशं तं ज्ञात्वा अमृता भवन्ति" "* तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं"॥ "‡ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्॥ ध्याननिर्मथनाभ्यासात् पाशं दहति पंडितः"। "† ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिश्रुत्यनुसारेण तदुपासनया अस्याधिकारिणः पाशविच्छेदलक्षणमुक्तिः प्रयोजनं चास्तीत्यादि अधिकारिणोऽर्थमात्मीयमतानुगुणयति॥

Moksa

मू०— ब्रह्मणो लिंगरूपित्वं न युक्तमिति चेच्छृणु॥
§§ आत्माय नम आरभ्य लिंगशब्दपरंपरा॥ ६१॥
प्रसिद्धतैत्तिरीयोपनिषद्येव प्रदृश्यते॥
लिंगशब्दस्य नान्योऽर्थः कल्प्यः स्वरसतः श्रुतेः॥ ६२॥

व्या०— लयगमनाधिष्ठानं परमशिवाभिव्यक्तिस्थानं रूपयते प्रेक्षावतामर्चनपूजनादिसगुणोपासनानिर्गुणोपासनाभ्यामभिमतफलं दत्वाऽऽस्ते परमशिव इति दार्ढ्यं संप्रयच्छतीत्यर्थः। लिंगरूपत्वमित्यंशस्य लीयन्ते विपदो गम्यन्ते प्राप्यन्ते संपदो यस्मात्परमात्मन इति लिंगं प्रतिपादकं चाचार्यकृता कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुताविति कर्मफलदातृत्वमपि ब्रह्मणो लक्षणमिति "रुद्र यत्ते जनिम चारु चित्रमिति"। श्रुत्युपबृंहणे "चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम्" इत्यादिपरस्मृतीतिहासादौ स्पष्टं। प्रणवस्य व्यष्टिसमष्टिरूपस्य वाच्यं परं ब्रह्मेति श्रुतिसिद्धं। तच्च लिंगपीठात्मकमिति प्रणवस्य वाचकस्य वाच्यस्य लिंगस्य चाभेदाध्यवसायात्। बिंदुनादात्मकं लिंगं ब्रह्मेति व्याससूत्रे विचारितं नात्र प्रमाणाभावः। व्यासीयशास्त्रस्य जगदभिन्ननिमित्तोपादानोभयकारणस्य विचार्यत्वेन तदेव लिंगशब्देन व्यवह्रियते। तथा च श्रुतिः "‡‡ आत्माय नमः आत्मलिंगाय नमः ज्वालाय नमः ज्वललिंगाय नम" इत्यादि। अत्र लिंगशब्दात्मशब्दयोः "भवाय भवलिंगाय शिवाय शिवलिंगाय" इत्यादिशिवभवादिपरब्रह्माभिधायकशब्दलिंगशब्दयोश्चैकीभावेनैकत्वसूचकस्य चतुर्थ्येकवचनायेत्यस्य श्रवणात्। न चात्र षष्ठीतत्पुरुषः संभवति। शिवस्य लिंगमितिसंबंधस्य षष्ठ्यर्थस्य संबंधिभ्यां भिन्नस्य कस्यचिद्राजपुरुष इत्यादौ राजपुरुषभिन्नस्य सेव्यसेवकभावसंबंधस्यैवात्राभावात्। संबंधे लक्षणागौरवाच्च निषादस्थपत्यधिकरणे तत्पुरुषात्कर्मधारयस्याभ्यर्हितत्वश्रवणात् कर्मधारय एवेति शिवाभिन्नलिंगमिति प्रतिपादनौचित्येन न भाल्लवेयादिकल्पितश्रुतिवदिति स्वरसेनान्योऽर्थो न युक्तः। तथाचैताद्दशलिंगविचारशास्त्रस्यादावथशब्दस्योक्तरीत्याऽध्ययनविध्याक्षिप्तवेदार्थविचारस्य प्रकृतत्वेन कर्मकांडविचारं

× तैत्तिरीयोपनिषदि–२–१–१ ¶ श्वेताश्वतरे–४–१४ § श्वेताश्वतरे–३–७ * श्वेताश्वतरे–३–२०
‡ कैवल्ये–११ † श्वेताश्वतरे–१–८ §§ तैत्तिरीयारण्यके–१०–१६ ‡‡ महानारायणोपनिषदि–१५–१

नियतपूर्ववर्तिनं विहाय प्रकृतेतरस्य मंगलस्य कस्यचित्कार्यविशेषस्यादौ साधारणत्वेन कर्तव्यस्य जिज्ञासायाश्च पूर्वकालभावित्वोत्तरकालभावित्वरूपान्वयविरोधादंगांगित्वविरोधाच्च "‡ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिज्ञानकर्मसमुच्चयवादिश्रुतिसिद्धफलैक्यरूपानंगित्वनिरूपणात्सौत्रामणिबृहस्पतिसवनादीनामग्निचयनवाजपेयाद्यंगत्ववदंगनिरूपणानंतरमंगिनो निरूपणमंतरेणानाकांक्षितस्यानंगस्य मंगलाद्यर्थस्य निरूपणमनुगततंत्रसिद्धमिति नेदं वेदवेदान्तार्थवित्कृत्यमिति। तत्त्वदृष्ट्या विभाव्योपनिषदेकसमधिगम्य ब्रह्मणो लिंगरूपत्वे प्रमाणमात्रं न भवति। प्रमाणपरंपरेति बहुमन्यमानोऽत्रैकश्चेल्लिंगशब्दोऽन्यथा नेतुं शक्यः। असकृत्पठितोऽयं तैत्तिरीये लिंगशब्दः। कोशसिद्धभवशिवशर्वादिशब्दसमभिव्याहृतः प्रकृतादन्यमलिंगशब्दवाच्यान्नाभिधत्त इति तदेतदनधीतवेदगंधभाल्लवेयकाठरायणमाठरायणश्रुतिव्योमसंहितार्थीनं न भवति। किंतु प्रसिद्ध एवोपनिषदि इति बहुजनानुकूल्यं मन्वानोऽगशब्दस्यासकृत्पठितस्यान्यमर्थं तिरस्कृत्य श्रुतिस्वारस्येनैव भवशर्वादिमूर्त्यष्टकसंबंधात् प्रसिद्धं। लिंगं ब्रह्मचैतन्यमिष्टलिंगस्वरूपमिति प्रसिद्धार्थपरित्यागप्रसक्तेरात्मचैतन्यं लिंगशब्दवाच्यमिति ह्यंगावबुद्धेष्टलिंगे लिंगशब्दप्रयोगेण चान्योऽर्थो नेत्याह ॥

मू०— आत्मत्वेन नमस्कारस्तदुत्कृष्टनमस्कृतिः ॥
तत इत्यर्थसांगत्यं ब्रह्मणो लिंगरूपतः ॥ ६३ ॥
अनंतरनमस्कारः कथं संगच्छतेऽन्यथा ॥
तस्माल्लिंगपदस्यार्थो ब्रह्म नित्यं निरंजनं ॥ ६४ ॥

व्या— आत्मशब्देनांतःकरणावच्छिन्नस्य नमस्कृतौ "*आत्मलिंगाय नम" इति समनंतरपठितात्मलिंगशब्देनेष्टलिंगमेव। गुरुणा दीक्षापुरःसरं दत्तमेवेति वक्तव्यं। माता त्वं पितेत्यतिदेशवदात्मानमात्मलिंगत्वेनेति वक्तव्यतया तथैव "*भवाय नमः भवलिंगाय नम" इत्यादिश्रवणात्। नन्वस्तु लिंगशब्दस्य ब्रह्मपरत्वं अस्य लिंगस्यैव जिज्ञासाविधायकमिदमथातो ब्रह्मजिज्ञासेत्यधिकरणं तथापीष्टलिंगधारणपंचाचाराद्यावरणानां पूर्वकांडप्रतिपाद्यत्वाभावात् तादृशवीरशैवधर्मविचारानंतर्यासंभवाच्च अभिमतलिंगशब्दितब्रह्मविचारस्य प्रतिपादकमपीदं शास्त्रं न भवतीत्याशंक्य समाधत्ते ॥

मू०— पूर्वकांडप्रसिद्धस्तु धर्मोऽग्निष्टोमपूर्वकः ॥
वीरशैवादिनैवेति चानंतर्यं कथं भवेत् ॥ ६५ ॥
वेदोक्तभूतिरुद्राक्षलिंगधारणकर्मठैः ॥
विचार्यं ब्रह्म लिंगाख्यं नानंतर्यं विरुध्यते ॥ ६६ ॥
पूर्वकांडविरुद्धोऽर्थः पूर्वकांडोक्त उच्यते ॥
पूर्वकांडीयधर्मश्च यावद्यत्किंचिदेव वा ॥ ६७ ॥
कृतोपनयनस्याशु वेदान्तेषु प्रवेशनात् ॥
यावतां कर्मणां केनाप्यनुष्ठानं न शक्यते ॥ ६८ ॥

‡ बृहदारण्यकोपनिषदि—६—४—२२ * महानारायणोपनिषदि—१०—१६

अतो यत्किंचिदेवात्र विवक्षितमुदीर्यते ॥
चतुर्णां साधनानां तु संपत्तेः समनंतरं ॥ ६९ ॥
इति केचिद्वर्णयन्ति तन्नातीवोपयुज्यते ॥

व्या— "* भूत्यै न प्रमदितव्यं" इति तैत्तिरीयश्रुतेः रुद्राक्षजाबालोपनिषदा वक्ष्यमाणरीत्या "×अमृतस्य देवधारणो भूयासं" इति लिंगधारणप्रतिपादनश्रुतेः श्रौतपंचाक्षरीरूपायाः लिंगांगसामरस्यप्रतिपादकश्रुतेश्च वीरशैवधर्माणां वैदिकत्वसिद्धिः। अत एव तादृशपूर्वकांडधर्मनिरतैः समनंतरकांडार्थविचारस्य विषयीभूतलिंगजिज्ञासेत्युक्तं। ननु केषांचिद्वीरशैवमतप्रतिपादकार्थानां श्रुतिप्रमाणमूलत्वेऽपि केषांचिन्निराभारसाभारविभागानां षट्स्थलांतर्गतलिंगविभजनादीनां हस्तभेदानामर्पितभेदानां च परिदृश्यमानपूर्वकांडीयप्रत्यक्षश्रुत्यलाभ इति न शंकनीयं। पूर्वकांडनिषेधशास्त्राविषयत्वात् पूर्वकांडप्रसिद्धत्वं वर्तते। तत्रागमाः प्रमाणं। केषां चागमवाक्यार्थानां पूर्वकांडाविरुद्धत्वमेव पूर्वकांडीयत्वमित्यर्थः। एकादश्यादिदृष्टान्तस्तूपवर्णितः। नन्वस्तु वीरशैवसमयाचाराणामविरुद्धरूपं वैदिकत्वमेकादश्यादिवदथापि वेदोक्ताग्निष्टोमाद्यनुष्ठानराहित्येनावैदिकत्वमेतेषामित्याशंक्य तत्र यावत्पूर्वकांडीयधर्मानुष्ठातृविषयं वा यत्किंचित्पूर्वकांडोक्तधर्मानुष्ठातृविषयं वेदं वेदवेदान्तशास्त्रमिति द्वेधा विकल्प्याद्ये अव्याप्तिः। कृतोपनयनस्याशु सनकादेश्च वेदान्तज्ञानदर्शनेऽप्यवैदिकत्वं यावत्कर्मानुष्ठानराहित्यकृतं स्यादित्यव्याप्तिः। "कर्मणो गहना गतिः" इति यावन्नित्यनैमित्तिकानुवर्तनं न कैरपि ब्रह्मादिभिः शक्यते। अतो यत्किंचित्पूर्वकांडीयधर्मानुवर्तनं वैदिकत्वे प्रयोजकमवशिष्यते। न च वैपरीत्या शंकनीयं। कृताधानस्य कंचित्कालमग्निहोत्रादिकर्मानुवर्तनेऽपि कंचित्कालमन्यत्वप्रसंगयति कर्मणां संकल्पाधीनत्वेन। संकल्पविरोधे प्रायश्चित्तविधानादसंकल्पिताश्रमेणाश्रमधर्मोऽनुष्ठेयः। यथा ब्रह्मचारी गृहाश्रमस्वीकाराभावे तद्धर्मानपि नार्हति गृही वनस्थधर्मान् वनस्थो यतिधर्मानिति तद्वदत्याश्रमी वीरशैवो नाश्रमधर्मानर्हति अत्याश्रमधर्मान् विभूत्यादींस्तु। धर्माननुतिष्ठेदिति स्वस्वाश्रमविहितधर्मानुष्ठातृत्वमेव चित्तनैर्मल्यसंपादकत्वे ब्रह्मविचारार्हत्वमर्पयतीति नोपनयनाद्यग्निष्टोमादिधर्मानुवर्तनापेक्षेति सर्वं विचारविलसितमेव केवलाद्वैतिमतं। साधनचतुष्टयसंपत्तिमन्यथायति ॥

सू०— इहामुत्र फले भोगविरागः शमशालिता ॥ ७० ॥
वेदान्तार्थविचारैकलभ्यत्वादधिकारिताम् ॥
न संपादयतीत्यत्र धर्मानंतर्यमुच्यते ॥ ७१ ॥
चतुःसाधनसंपत्तिसमनंतरमेव चेत् ॥
वृत्तत्वाच्छास्त्रलब्धस्य जिज्ञासा न भवेत्क्वचित् ॥ ७२ ॥
धर्मानंतर्यमेवातो वाच्यं धर्मो द्विधा मतः ॥
पशुधर्मः प्राथमिकः पतिधर्मो द्वितीयकः ॥ ७३ ॥
अनुतिष्ठन् पशोर्धर्मान् पतिधर्मान् स चार्हति ॥

* तैत्तिरीयोपनिषदि–१–१० × तैत्तिरीयोपनिषदि–१–४–१

यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम् ॥ ७४ ॥
आरुह्य लभते तद्वत्पतिधर्मैकतत्परः ॥
यथा विहंगः पक्षाभ्यां फलितं वृक्षमागतः ॥ ७५ ॥
पश्यन् फलमवाप्नोति तद्वच्छीघ्रं तदर्हति ॥

व्या०— वेदान्तशास्त्रविचारानंतरभाविनां चतुःसाधनसंपत्तीनाम् वेदान्तशास्त्रविचारात्पूर्वमिदं नित्यमिदमनित्यमिति निश्चितुमशक्यत्वात्तन्निश्चयाय शास्त्रविचारेऽभ्यर्हिते तत्पूर्वमेव तन्निश्चये तद्वैयर्थ्यापत्तेः तथाहि नित्यानित्यवस्तुविवेकाभावः इहामुत्र फलभोगविरागः शमदमशब्दितांतरिंद्रियबहिरिंद्रियाद्यनिग्रहः बुभुक्षुत्वमित्यादीनां दुःखसाधनानामनर्थानां निवृत्तिर्मोक्षशरीरमानंदावाप्तिश्च तदनंतरभावीत्यनर्थनिवृत्त्यानंदावाप्त्यात्मकमोक्षसाधनीभूतविचारसाधकतासामानाधिकरण्यस्य मुक्तानां चतुःसाधनान्येति स्पष्टं प्रतीयते न च साधनानां दुःखजनकत्वे दुःखित्वं नेति साधके दुःखसाधनाभावः विचाराद्दुःखाभाव इति वाच्यं । साधनाभावे साध्याभावस्य न्यायत्वाद्दुःखाभावे तन्निवर्तकविचारे प्रवृत्तिरेव न स्यादित्यर्थः । नन्वेवमपि साधनचतुष्टयाभावस्य दुःखसाधनत्वे मुक्तस्य दुःखोदयः स्यात् । साधनचतुष्टयाभावस्य तदानीं सत्वादिति चेन्न । बीजस्यांकुरोत्पादकत्वेऽपि भर्जितबीजे तदभाववत् बीजनिष्ठविशेषस्यांकुरोत्पादकत्वात् स च संबंध उत्पाद्योत्पादकभावः । संबंध इति प्रकृतेऽपि साधनचतुष्टयाभावदुःखयोरुत्पाद्योत्पादकतालक्षणसंबंधः । न चाविद्याकृत इति तस्याविद्याया नष्टत्वान्न काचिदनुपपत्तिः । नापि कर्तव्यत्वेन साधनचतुष्टयसंपत्तिः । साध्यरूपासाधके विवक्षिता न सिद्धरूपेत्यदोष इति वाच्यं । साध्यरूपा साधनसंपत्तिर्वेदाध्ययनोपक्रम एव कर्तव्यत्वेन ज्ञाता । धर्मविचारानंतरकालीनधर्मानुष्ठानकाले यावच्छक्तिसंपादिता ब्रह्मविचारानंतरमनाद्यनंतसत्यज्ञानानंदस्वरूपापरोक्षानंतरभावी विवेकः सिद्ध एव भवतीति साधनचतुष्टयसंपत्त्यनंतरभावित्वं विरुद्धमिति पर्यवसितोऽर्थः । ननु तर्हि धर्मानंतर्ये विवक्षिते किंरूपस्य धर्मस्यानंतर्यमित्याशंक्य पशुकर्मपतिकर्मभेदेन द्वैविध्यमुपपाद्याद्यस्य पशुधर्मस्य पतिधर्मसमर्पकत्वेन परंपरया ज्ञानसाधनत्वं पतिकर्मस्य तु साक्षादेव ज्ञानेन सह युक्तौ कारणत्वं प्रतिपाद्य तत्र दृष्टान्तत्वेनायाससाध्यपिपीलिकाज्ञानं सुलभसाध्यविहंगज्ञानं च प्रदर्श्य विशिष्टपतिधर्मस्य ज्ञानसमुच्चयं निश्चित्य पतिधर्मानुवर्तनलभ्यज्ञानं च स्वस्वरूपापरोक्षमिति प्रदर्श्य तत्रैव मुक्तिसाधनत्वं काम्यकर्मणां फलानपेक्षयाऽनुष्ठितानां पतिधर्मत्वं पतिधर्माणां कामनयाऽनुष्ठितानामपि विघ्नत्वं साधूतभस्मनां विघ्नध्वंसद्वारा मुक्तिसाधनत्वमपीति पशुधर्मापेक्षया वैशिष्ट्यं प्रदर्श्य तानेव विशिष्टपतिधर्मानाह ॥

मू०— यन्नित्यमपरोक्षं च ज्ञानं मोक्षैकसाधनम् ॥ ७६ ॥
पशुधर्म इति प्राहुर्यस्तु काम्यफलप्रदः ॥
निष्कामेन स्वपापस्य विच्छित्त्यै समनुष्ठितः ॥ ७७ ॥
यो धर्मस्तंत्रशास्त्रज्ञः ( शास्त्रेषु ) पतिधर्मं प्रचक्षते ॥
दग्धेंद्रियाणि विहितो धर्मः काम्यः स एव हि ॥ ७८ ॥
निष्कामसमनुष्ठानात्पतिधर्मत्वमप्ययेत् ॥

तत्रापि सर्वकर्मादावधिकारप्रदायकम् ॥ ७९ ॥
भस्मधारणमुख्यं हि कालाग्न्युपनिषन्मुखैः ॥
बृहज्जाबालमुख्यैश्च विहितं तत्पदे पदे ॥ ८० ॥
रुद्राक्षधारणं चैव दहरोपासनादिकम् ॥
कालयोः शिवपूजा च त्रिषु कालेषु वा सदा ॥ ८१ ॥
विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ॥
तत्र पंचाक्षरो मंत्रः शिव इत्यक्षरद्वयम् ॥ ८२ ॥

व्या०— दहरोपासना नाम हार्दाकाशमध्यवर्तिनः परब्रह्मणोऽनुसंधानं। तद्वीरशैवानामिष्टलिंगपूजार्चनादिरूपं वस्त्वेकमपि बहिर्लक्ष्यांतरलक्षभेदेन द्विधेति स्वेष्टलिंगभजनमंगावबुद्धिरूपमिति। तदपि सायंप्रातस्त्रिषु वा कालेष्विति कालनियमं विजानीयात्। तत्र च सर्वोत्कृष्टवाचकप्रणवव्यष्टेर्वाच्योत्कर्षं विभावयेदित्याह ॥

मू०— इति श्रुतिशिरोरत्नशिरोरत्नमनोर्जपः ॥
आचार्यो देव इत्युक्तमंत्रदेशिकपूजनम् ॥ ८३ ॥
प्रसादग्रहणं तस्येत्याद्याः पाशविमोचकाः ॥
पतिधर्मा इमे ज्ञेयास्तदानंतर्यमत्र च ॥ ८४ ॥
अतःशब्दोऽत्र हेत्वर्थः सर्वेषां न विशिष्यते ॥

व्या०— वैदिकोत्तमोऽयं पंचाक्षरोपासनाप्रकारः "† आचार्यदेवो भव" इति श्रुत्युक्तमंत्रदेशिकः मंत्रोपदेष्टा दीक्षागुरुः एतदुपलक्षणमन्येषामदीक्षागुरूणां जंगमलिंगानामप्यतिशयेन पूज्यत्वात् एवमेव प्रसादग्रहणमाचार्यवदेवाचार्यपुत्रे वर्तितव्यं अन्यत्रोच्छिष्टाशनपादोपसंग्रहणादिति व्याकरणमहाभाष्यमूलश्रुतितः स्मृतेः श्रुतिमूलत्वात् तथैवोपनयनकालीनमातृभोजनादेर्दर्शनेन चेति प्रसादग्रहणपादोदकाभिषेकादीनां वैदिकत्वं "‡ चरणं पवित्रं" इति पादोदकोपदेशगतश्रुतिमूलत्वादिरनुसंधेयः। तथा च पंचाचाराष्टावरणानां वेदाविरुद्धरूपं वेदविधिर्वाऽस्तीति मन्तव्यं। अतःशब्दोऽपि वृत्तस्य धर्मविचारस्यानंतर्यं ब्रह्मविचारस्येत्याह अत एवाकारस्य विष्णुवाचकत्वाभिधानपुरःसरं विष्णुप्रसादादित्यादिवर्णनं प्रत्युक्तं। विष्णुवाचकत्वेऽपि प्रसादवाचकशब्दाभावेन विष्णुसकाशाद्ब्रह्मजिज्ञासा कर्तव्येति विष्णोर्बोधकत्वेन प्राशस्त्यं बोध्यस्य ब्रह्मणस्तदन्यत्वं च प्रतीयते। इति विष्णोर्जीवकोटिप्रवेशद्वारा बोधकत्वमात्रमित्युपासककोटिनिवेशो नारायणोपनिषत्सिद्ध इति हरदत्ताचार्योक्तिः संगच्छतेतरां। अन्यथा विष्णोरेव ब्रह्मत्वेऽगीकृते तस्माद्ब्रह्मजिज्ञासेति सिद्ध्यंजनौषधीमूलं "खनताऽऽसादितो निधिः" इति न्यायेन विचारस्य लाभाद्विचारो व्यर्थः स्यादिति शास्त्रमनारंभणीयं स्यात्। अपिच शब्दार्थस्य प्रसादस्य विवक्षितत्वेऽपि विष्णुप्रसादस्यार्चनपूजनादिना लाभे शास्त्रमनारंभणीयमेव बकबंधनप्रयासापत्तेः। प्रसादो नाम तत्स्वरूपप्रत्यक्षीभावस्तन्निर्णयो वाऽन्यो वा वक्तव्यः। तावल्लाभे तादृशमहापुरुषप्रसादादेव

† तैत्तिरीयोपनिषदि–१–११–२ ‡ महानारायणोपनिषदि–१–११

मुक्तिः स्यादित्यपि शास्त्रवैयर्थ्यं सुदृढं श्रूयते च "मुच्यते सर्वलोकेभ्यो विष्णुलोकं स गच्छति" इति विष्णुप्रसादेनेत्यपि शास्त्रविचारमंतरा यदि मुक्तिर्न स्याच्छास्त्रनिर्माणात् पूर्वं न केऽपि मुक्ता इति ह्यापद्येत। तदा शास्त्राभावात् "ज्ञानं कृतयुगे स्थितम्" इत्यादिप्रतिपादितवचनविरोधाच्च। अपि च विष्णोरपि नित्यमुक्तत्वाभावप्रसंगः। स्वप्रसादस्य स्वार्चनापूजादेर्वक्रुमशक्यत्वात् प्रसादस्वरूपाविर्भाव इति भवदभिमतत्वात्। अभिमतौ शास्त्रवैयर्थ्याभावात् शास्त्रविचारलब्धोहि प्रसादः। अत एव "*धातुः प्रसादान्महिमानमीशं" इति संगच्छते। गुरुप्रसादादितिवत्सौमुख्यविवक्षायां प्रसादयितुर्भिन्नफलं ब्रह्मीभाव इति स्यात्। न भेदरूपा मुक्तिः श्रुतिविरोधात्। सत्यपि विष्णुप्रसादे शास्त्रविचारमंतरा मुक्तिर्नेति विष्णुप्रसादस्याकिंचित्करत्वप्रसंगात्। तस्माद्धर्मविचारस्य वृत्तत्वादिति वक्तव्यमिति सिद्धान्तस्थितिः। अद्वैतिमतमुपपादयति ॥

मू०— विषयस्तु द्वयोरैक्यं जीवस्य ब्रह्मणस्तथा ॥ ८५ ॥
विरुद्धयोः स्वभावेन तमस्तेजःसमानयोः ॥
युष्मदस्मद्गोचरयोः कथमन्योन्यता भवेत् ॥ ८६ ॥
किंचिज्ज्ञत्वं च जीवत्वं सर्वज्ञत्वं तदन्यता ॥
अनित्यत्वं च नित्यत्वं कथमेकत्र युज्यते ॥ ८७ ॥
इति चेदीयतां दृष्टिस्तत्वेऽर्थे सावधानतः ॥
इदं रजतमित्येतज्ज्ञाने शुक्तौ भ्रमात्मके ॥ ८८ ॥
इदंत्वांशेन शुक्तित्वं रजतत्वमनंतरम् ॥
उभयं च यथात्रास्ते विरुद्धं च परस्परम् ॥ ८९ ॥
शुक्तित्वे च प्रकारे तु रजतत्वं निवर्तते ॥
तद्वदेवात्र सर्वज्ञे किंचिज्ज्ञत्वं विशिष्यते ॥ ९० ॥
सर्वज्ञत्वे प्रकारे तु किंचिज्ज्ञत्व निवर्तते ॥
तज्जीवब्रह्मणोरैक्यं शास्त्रस्य विषयं विदुः ॥ ९१ ॥
मुक्तिः साधारणत्वेन प्रयोजनमुदीर्यते ॥

व्या०— अद्वैतमतनिरूपणं एभिरद्वैतमतं प्रतिपाद्यते। एकजीववादे अविद्याप्रतिबिंबो जीवः। अनेकजीववादे अंतःकरणावच्छिन्नो जीवः। मायाप्रतिबिंब ईश्वरः अयं बिंबप्रतिबिंबभावपक्षः। अवच्छिन्नपक्षे अन्तःकरणावच्छिन्नो जीवः। मायावच्छिन्न ईश्वरः। रोचतेतरामयं पक्षः। अवच्छेदकदोषाणां घटावच्छिन्नाकाशसंबंधाभावो घटगतरूपादेरितिवदवच्छेद्ये चैतन्ये नास्तीति देहत्रयदोषाणामुपाधिकत्वमेवेति। तदुक्तं "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इत्यवच्छिन्नयोरैक्यं न संभवति। विषयावरणविषयप्रकाशनरूपविरुद्धस्वभावयोस्तमस्तेजसोः परस्परोपमर्दासंभवेन तद्वद्विषयाधीनस्वतंत्रयोः किंचिज्ज्ञसर्वज्ञयोः स्वस्वामिनोर्बद्धमुक्तयोरनित्यनित्ययोरन्तःकरणोपहितमायोपहितयोर्जीवब्रह्मणोरितरेतरभावो नामैक्यं

* महानारायणोपनिषदि—१२

न संघटते। तथापि किलान्यथावादिनो वयमेवमामनामः प्रतिभासिकालजोपाधिकाविद्यारजतनिष्ठरजतत्वमधिष्ठाने शुक्ताविदमाकारप्रतीतिगोचरायामध्यस्यन्ति आचक्षन्ते च भेदावरणमध्यास इति संप्रदायविदः। रजतत्वेदंत्वांशयोः प्रतिभासकाले भेदो नाभिप्रायविषयो भवतीत्यर्थः। तथाचेदमंशावच्छेदकं शुक्तित्वमावृतं भवतीति आवारकं चाविद्यादोषजन्यं रजतत्वं प्रतिभासकालेऽपि शुक्तित्वमावृतं सदस्त्येवावारकाविद्यानाशे प्रतिबंधकाभावादुज्जृंभतेतरां। आवरणकाले च चोरभीतधनिकपुरुषवदंधकारनिवृत्तिगूहके आवरणनिवृत्तौ सूर्योदय इव प्रकाशते। तथासति जीवोऽप्यौपाधिकाविद्याव्यापारदोषजनितकिंचिज्ज्ञत्वाज्ञानित्वदुःखित्वसुखित्वाद्यशेषसंसारधर्मैरध्यस्तनिजबोधनित्यत्वाद्यखिलब्रह्मधर्मैस्तदानीमंधकारस्थानीयाज्ञानावरणजोऽतीव परितपति। तादृश एवायं जीवो नित्यनैमित्तिकाद्यखिलनिजधर्मपरिपाकेन वा शमदमादिसंपत्त्या जातवैराग्यभाग्योदयः पुरुषसिंहः कश्चन एवानुग्रहीतारं ज्ञानबोधकं संसारतारकं ज्ञानगुरुमुपसर्पति। तदुपदिष्टवेदान्तशास्त्रश्रवणमनननिदिध्यासनाद्यखिलसाधनपुंखानुपुंखितज्ञानधारावैशद्यसद्यःसंजातानुस्यूतमहस्तोमसंस्रवश्रमस्तोमस्य "परस्ताद्वैद्युतः पुरुष" इत्यादिछान्दोग्यश्रुतिसिद्धान्तरीत्या दहराकाशमध्यमध्यासीनमध्यासापगमेन निदिध्यासनमहिम्नाम्नायार्थमनुसंदधानो "§ यो वै भूमा तत्सुखम्" इत्यादिद्वदादित्यभिन्नमखिलघटीजलप्रतिबिंबसमर्पकबिंबादित्याभेदमुपमयन्नयति ब्रह्मीभावं। जीवन्मुक्तोऽयमानंदकंदममन्दभाग्यलभ्यमभ्यस्यमानोऽखिलदोषं निरस्यमानो निखिलानपि जीवभावान् विहस्य रहस्यनिधानो निजारब्धसंरब्धदेहपातं "* न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयन्ते" इति श्रुतिसिद्धा सच्चिदानंदगुणनिबद्धा अखिलनिगमान्तसुरधेनुदुग्धा देहस्थितिरूरणिरियमाचार्याणामनुस्यूतब्रह्मचर्याणामद्वैतमतमाधुर्यधुर्याणां इति जीवब्रह्मैक्यं शास्त्रस्य विषय इति पक्षमनूद्यानवद्यमखिलसूरिहृद्यमात्मीयसिद्धान्तं द्योतयति ॥

मू०— न जीवब्रह्मणोरैक्यं सूत्रं स्वरसतः स्फुरेत् ॥ ९२ ॥
इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति ॥
यथा घट इति ज्ञाने घटत्वं स्याद्विशेषणम् ॥ ९३ ॥
तथा ब्रह्मणि वैशिष्ट्यं शक्तेरित्यवधार्यतां ॥
अग्निस्फुलिंगयोर्नास्ति यथा भेदः स्वरूपतः ॥ ९४ ॥
अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित् ॥
यथाऽहिकुंडलमिति भेदाभेदौ तथात्र च ॥ ९५ ॥
तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटं ॥
षट्स्थलज्ञानमप्यत्र मोक्षसाधनमुच्यते ॥ ९६ ॥
लिंगमेव यतः शास्त्रे ब्रह्मेति सुविचार्यते ॥
सर्वत्र लिंगसंबंधं कुर्वन्ति प्रतिपत्तये ॥ ९७ ॥
सर्वं ब्रह्मेति वेदार्थमनुसंधाय शांभवाः ॥

§ छांदोग्योपनिषदि—७—२३—१ * सुबालोपनिषदि—२

ब्रह्म लिंगं जनिम चेत्याद्या येन समार्थकाः ॥ ९८ ॥
माध्वबौद्धादिचार्वाकमताध्वाध्वन्यतामयत् ॥
गणाचारविरुद्धं स्यात् नास्मार्षमिति तन्मतम् ॥ ९९ ॥
नीलकंठशिवाचार्यभाष्यार्थमनुसंदधन् ॥
वीरशैवैरभिमतमभिधास्ये श्रुतेर्मतम् ॥ १०० ॥
तस्माद्धर्मविचारस्य पश्चाद्ब्रह्मैव केवलं ॥
विचार्यं श्रवणाद्यैश्च शांतिमद्भिर्जनैः सदा ॥ १०१ ॥

व्या०— बादरायणशास्त्रादथातो ब्रह्मजिज्ञासेत्यारभ्यानावृत्तिः शब्दादित्यन्तादर्थतात्पर्यपरिभाविताञ्चोक्तरीत्या शास्त्रस्य विषयो जीवब्रह्मैक्यं भवितुमर्हति । किं तर्हि शास्त्रस्य विषयः क्रियासारसमुचितं शक्तिविशिष्टं ब्रह्म क्रियासारसमुच्चयप्रकारस्तु धर्मविचारप्रतिपादकादथशब्दादेव विचारितप्रायः वक्तव्यार्थस्तु शक्तिवैशिष्ट्यं ब्रह्मण इति तमेवार्थमुपपादयामः । तथाहि अयं घट इति ज्ञानं नाम बुद्धिवृत्तिपृथुबुध्नोदराद्याकारस्तस्या बुद्धेर्विषयो घटादिः पृथिव्यादिनामरूपात्मकं तदेव नश्वरं प्रपंचानित्यत्वप्रतिपादकानि श्रुतिस्मृतीतिहासपुराणान्यपि बुद्धिविषयानेव निंदन्ति । दृश्यते च दंडप्रहारादिना बुद्धिविषयस्य नाशः न तावताऽन्तरस्य पृथुबुध्नाद्याकारस्य बुद्धिशक्तेर्नाशः । अनुभवविरोधादत एव छिन्ने शत्रुशिरसि शत्रुकृतभयकारिणी भूतापदानादियावज्जीवमनुभूयते अत एषा बुद्धिशब्दितात्मसाक्षिणी शक्तिः बुद्धिसाक्षी चात्मा भवितुमर्हति । उक्तं च दीक्षितचरणैः “ × परस्परतपस्संपत्फलायितपरस्परौ ॥ प्रपंचमातापितरौ प्राञ्चौ जायापती स्तुम ”-इति न च बुद्धेरविद्यापरिणामाया नामरूपात्मकबाह्यनामरूपघ्राणरसनाचक्षुःश्रोत्रत्वगादींद्रियसंबंधाधीनत्वेन तज्जन्यायास्तत्संबंधनाशनाश्यत्वेन बुद्धेरनित्यत्वेन तद्वैशिष्ट्यनियमे प्रत्यगात्मनोऽप्यनित्यत्वप्रसंग इति वाच्यं । घटादिबाह्यप्रत्यक्षे तावदंधकारावरणाभिभवार्थमिंद्रियविषययोः संबंधार्थं वा सोमसूर्याग्न्यन्यतमप्रकाशोऽगीकार्यः । आलोकनसहकृतस्यैव चक्षुषः चाक्षुषप्रत्यक्षजनकत्वात्त्वगादिप्रत्यक्षे तु बुद्धिसावृतकेंद्रियसंबंधसप्रकाशत्रयान्यतमापेक्षा बुद्धिः । संबंधस्तु सर्वेंद्रियप्रत्यक्षसाधारणः । तत्रेयान् विशेषः विषयाकारबुद्धिवृत्तिरिंद्रियसंबंधजन्येति बुद्धेर्जन्यत्ववादिनः खल्वद्वैतिनः । नेयमनुभवारूढा तात्त्विकी पद्धतिः । इंद्रियसंबंधस्तु विषयाकारबुद्ध्यावरणायमानाया अविद्यायास्तमसो अभिभवार्थत्वात् अविद्यानामानादिः ध्वंसप्रतियोगिनी बुद्धावुन्मिषत्तामसी शक्तिः । तस्या विद्याशक्तेर्विषयावरणस्वभावायास्तमसो निःसरणं नाम दीपानयनेन तमसो निःसरणापसरणवत् । अथ वा तमसो मूलशक्त्युन्मेषरूपानुकूलाविद्याया नाशोऽभिभवः । दंडव्यापारमात्रेण मृद्धटगतनामरूपनाशेऽपि मृदो दंडव्यापारानाश्यत्ववत् नैतावन्मात्रेण बुध्युन्मिषिताविद्याशक्तिरूपकालुष्यनाशेऽपि बुद्धेरपि नित्यत्वं व्याहन्येत । उक्तानुभवविरोधात् तस्मादावरणनाशायाभिभवाय वा इंद्रियवृत्तिरिति बुद्धेर्नित्यत्वं तद्वैशिष्ट्यमात्मचैतन्यस्येति यच्च वदन्त्यद्वैतिनः जीवो नामावस्थाशब्दितजाग्रत्स्वप्नसुषुप्तिशाली । तत्र जाग्रदवस्था नाम इंद्रियजन्यज्ञानावस्था । अवस्थान्तरयोः स्वप्नसुषुप्त्योरिंद्रियजन्यत्वाभावात् न जाग्रल्लक्षणानुपदेशः । इंद्रियजन्यज्ञानं च सहकार्यंतरसहकृतविषयेंद्रियज्ञानजन्या बुद्धिवृत्तिरिति तद-

---

× कुवलयानंदे—१—

नेन प्रत्युक्तं बुद्धिवृत्तेरिंद्रियजन्यत्वाभावात् इंद्रियसंबंधस्य बुद्ध्यावरणनाशहेतुत्वस्य प्रतिपादनात् । अन्यथा सोमसूर्याग्न्यालोकानामपि चाक्षुषविषयजनकत्वप्रसंगः । आलोकनाशे च विषयस्य घटादेर्नाश-प्रसंगः । न चेष्टापत्तिरनुभवविरोधात् । किंच इंद्रियजन्यज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणे स्वरूपज्ञानस्य मनोजन्यत्वात् । न च जन्यप्रत्यक्षत्वेनेंद्रियजन्यत्वेन लक्ष्यलक्षणसंगतिः । पर्वतो वन्हिमान् नीलधूमादि-तिवद्गौरवदोषात् प्रत्यक्षसामान्यत्वेन लक्षणाननुगमाच्च । अजन्यत्वस्य प्रत्यक्षसामान्यधर्मत्वे लाघवादि-कस्य स्वरूपज्ञानस्यात्मनः प्रत्यक्षस्यानादित्वमन्यस्य जन्यत्वमिति वैषम्ये विनिगमनाविरहात् । न च जन्यत्वे घटादिप्रत्यक्षस्य सदातनत्वप्रसंगः । भवन्मते आत्मनो नित्यज्ञानस्य प्रत्यक्षस्य सदातनत्वेना-त्मसाक्षात्काराय प्रत्ययमानानां श्रवणमननिदिध्यासानामकर्तव्यत्वेन शास्त्रमनारंभणीयमिति महान् दोषः । तन्निर्वहणायाज्ञानाश्रयत्वेन ब्रह्मणस्तदज्ञाननाशायाभिभवाय वा श्रवणादिसाफल्यस्य वक्तव्यत्वात् । न च ब्रह्मणः अज्ञानाश्रयत्वे अंगीकृते अज्ञानाश्रयाज्जीवादविशेषाद्दुःखित्वं प्रसज्येत स्थाणुशुक्तिरज्ज्वाद्यधिष्ठा-नस्याज्ञानस्य कर्ताऽन्य एव पुरुषः ज्ञानफलं भयकंपादि भवतीति तथैव स्थाण्वादेरज्ञानफलं दुःखादि पश्यामः । न च जडत्वान्न दुःखादिति संगतिरिति ललनावेषधारिणि नाटकीये पुरुषे ललनाधिष्ठा-नोऽयं पुरुषान्तरस्यैव भ्रामको भवति न नाटकीयपुरुषस्य ललनाभ्रमाधिष्ठानस्य अज्ञानस्य कर्ता किंतु तदनुष्ठानाज्ज्ञानस्यान्यः पुरुषः कर्तेति ब्रह्मणः अज्ञानाधिष्ठानस्यान्यभ्रामकत्वमेव न भ्रांतत्वमिति । "*लोक-वत्तु लीलाकैवल्यं" इति सूत्रेण "‡ऐतदात्म्यं" इति मूलश्रुत्या च निश्चिनुमः । उक्तं च केवलाद्वैतिभिः । "ब्रह्मण्य-ज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते" ॥ इति व्याख्यातश्चायं श्लोकस्तदीयैः प्रत्यग्ब्रह्मणोरेकत्वस्याज्ञानावृतत्वात्तस्य अज्ञानस्य निवृत्तये तत्त्वमस्यादिवाक्यजन्यया अयमहं ब्रह्मा-स्मीत्येवमाकारया धीवृत्त्या व्याप्तिरपेक्ष्यत इति । न च स्वयं स्फुरणरूपस्य ब्रह्मणो बुद्धिधर्मापेक्षावरणाभि-भवार्था निरूपिता चेद्बुद्धिवृत्तिजन्यत्वेनात्मस्फुरणस्यापि जन्यत्वापत्त्या नित्यत्वापत्तिः स्वप्रकाशभंगश्चेति वाच्यं । परप्रकाशत्वस्वप्रकाशत्वनिरूपणस्य नित्यत्वात् स्वस्मादभिन्नादिंद्रियालोकरूपादावरणाभिभवापे-क्षाया विवक्षितत्वेन तद्वैलक्षण्येन सूर्यचंद्राग्नीनां प्रत्यक्षे चक्षुर्मात्रापेक्षया घटादाविव चक्षुरालोको-भयापेक्षामात्रेण सूर्यादेः स्वप्रकाशत्ववदात्मनो ब्रह्माभेदस्य अज्ञानावरणस्य नाशाय अस्याः बुद्धिवृत्ते-रवश्यं वक्तव्यत्वेन तावन्मात्रेण सूर्यादेः स्वप्रकाशत्ववत् स्वरूपज्ञानस्य ब्रह्मणः स्वप्रकाशत्वाविरोधात् । तथा च बुद्धिवृत्तिरावरणाभिभवार्थेत्येकं मतं । संबंधार्थेत्यपरं मतं । आद्ये अविद्योपहितचैतन्यस्य जीव-त्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवस्वरूपतया तस्य जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यधि-ष्ठानचैतन्यस्यावारकमज्ञानं मूलविद्यापरतंत्रमवस्थापरवाच्यमभ्युपगंतव्यं । एवं सति घटादेरभानप्रसंगः अनावृत्तिचैतन्यसंबंधस्यैव भानप्रयोजकत्वात् । तस्य चावरणस्य सदातनत्वे कदाचिदपि घटादिभानं न स्यादिति तस्य भंगे वक्तव्ये तादृशावरणं जगज्जनकं न चैतन्यमात्रं अधिष्ठानत्वेनावरणभासकस्य चैतन्यस्यावरणनिवर्तकत्वायोगात् चैतन्यस्य सर्वाधिष्ठानत्वस्वीकारात् । न च विषयाकारबुद्धिवृत्त्युपहि-तचैतन्यमावारकाज्ञानभंजकमिति वाच्यं । पर्वतो वन्हिमान् धूमवत्त्वादित्यादिपरोक्षस्थले वन्ह्याद्याकार-वृत्त्युपहितचैतन्यस्य विद्यमानत्वेन वन्हिस्वरूपावरणशक्तेर्नाशात् वन्हिज्ञानस्य परोक्षस्यापि प्रत्यक्षता-पत्त्या परोक्षज्ञानमात्रोच्छेदापत्तिः । न च पुरोवृत्तित्वेनेदं शब्दार्थरूपवन्ह्याद्याकारवृत्त्युपहितचैतन्यस्य प्रत्यक्षज्ञानघटकीभूतवन्ह्याद्यावरणभंगजनकत्वेनेदमाकृतिरहितवन्ह्याद्याकारबुद्धिमात्रोपहितचैतन्यस्य परो-

* ब्र. सू.–३३–अ.–२–पा.–१ ‡ छांदोग्योपनिषदि–६–८–७–

क्षावरणभंगजनकत्वेऽपि प्रत्यक्षावरणभंजकत्वं नास्तीति परोक्षज्ञानोच्छित्तिर्न भवतीति वाच्यं। इदमाकारबुद्धिवृत्त्युपहितचैतन्यत्वेन प्रत्यक्षावरणभंजकत्वेन कार्यकारणभावापेक्षया लाघवात् इदमाकारबुद्धिवृत्तित्वेन प्रत्यक्षावरणीभूताज्ञानभंजकत्वेन कार्यकारणभावो लाघवादभ्यर्हिततर इत्युपहितपर्यंतधावनस्य गौरवात् व्यर्थत्वाच्च। तथा चावरणाभिभवार्थो तत्तद्विषयाकारबुद्धिवृत्तिर्विषयेंद्रियसंबंधजन्येति केवलाद्वैतिनः। अत्रेदं वक्तव्यं चैतन्यस्य तदभिन्नशक्तेर्बुद्धेश्च नित्यसंबंधित्वेन बाह्यचाक्षुषः प्रत्यक्षे चक्षुर्दीपोभयापेक्षावदन्तश्चाक्षुषप्रत्यक्षविषये चक्षुरादिपंचेंद्रियगतान्ध्यमांद्यपटुत्वादिप्रत्यक्षे बुद्धिचैतन्ययोरुभयोरावश्यकत्वेऽपि बुद्धितद्धर्माणां चैतन्यवेद्यत्ववच्चैतन्यस्यापि बुद्धिविषयत्वस्यात्मचैतन्यावरणभंगायावश्यकत्वेन परस्परविषयविषयीभावादात्मविषयिणी बुद्धिः शास्त्रश्रवणादिना व्यक्ता यावद्देहपातमनुभवसिद्धा पुरुषार्थसमर्पिणी सर्वैरभ्यर्थनीया यावन्नित्यनैमित्तिकाद्यनुवर्तनसमर्पितवैराग्यादिकोट्यंतरायाससाध्या देहपातानंतरं यदि नष्टा स्याच्छ्रवणादिरहिता ज्ञानकालापेक्षया विशेषाभावादात्मसुखस्य निरतिशयस्यापि कामिनीरहितविधुरकेलीगृहालंकारवदुन्मत्तजनस्य वैराग्योपदेशवद्बधिरबुद्धिगृहीतसंगीतरसवदंधगृहीतलावण्यसंपत्तिवदकिंचित्करत्वप्रसंगात्। अत एवात्मविषयकबुद्धिनैरंतर्याय साधनानामनुवर्तनमात्मविषयबुद्धेर्विघ्नबाहुल्येन नाशे पुनः सांसारिकदुःखस्फूर्तिश्चानुभवसिद्धेति शरीरपातानंतरमप्यात्मविषयिणी बुद्धिर्यदि नष्टा स्यादकृतश्रवणपुरुषवद्धर्मानुवृत्तिस्तत्कृतसुखदुःखानुवृत्तिश्च स्यादेवेति सर्वातिशायिन्यात्मविषयिण्या बुद्धेर्नित्यसंबंधात् "§आत्मरतिरात्मक्रीड आत्मैवेदं सर्वं" इत्युपनिषदभिहितात्मविषयिणी रतिः क्रीडा आनंद इत्यादिस्वरूपगुणाः पुष्पगंधवज्जलशैत्यवदग्नितदीयौष्ण्यवत् दीपदीप्तिवदहिकुंडलवत्संगच्छतेतरां। न च बुद्धेर्नित्यत्वे तत्कृतावरणभंगस्यापि नित्यत्वापत्त्या सर्वदा सकलवस्तुप्रत्यक्षापत्तेर्भवदुक्तरीत्या वृत्त्युपहितचैतन्यस्यावरणभंजकत्वे गौरवात् वृत्तेरेवावरणभंजकता लाघववर्णनात्ततोऽप्यतिलाघवाद्विषयेंद्रियसंबंधस्यैवं विषयावरणभंजकत्वस्यैव न्याय्यतरत्वात्। अभिमतश्चायं पंथा नैय्यायिकादीनामन्येषां बहूनां विदुषामनुभवानुकूल्यं च। न च तदानीमेकदा चक्षुःसंबंधेनावरणे भग्ने तत्तद्वस्तुविषयाकारबुद्धेर्नित्यसिद्धायाः सत्वे अंधस्यापि दृष्टसकलवस्तुप्रत्यक्षापत्तिः। तूलावरणानामाविद्यकानां बहूनां विद्यमानत्वेन कस्यचिदावरणस्य नाशेऽपि कालान्तरे तथैवावरणानां विद्यमानत्वात्। न चांतरस्य बुद्धिविकाररूपस्य प्रपंचस्य नित्यत्वापत्त्या प्रपंचानित्यत्वबोधकश्रुतिविरोध इति वाच्यं। बाह्यानां रूपात्मकव्यक्तिनाशप्रतिपादनमात्रपरत्वेन श्रुतीनां तत्पर्यायौचित्येन श्रुतिविरोधाभावादांतरस्य प्रपंचस्य बुद्धिविकारस्वरूपस्य नित्यत्ववर्णने चेष्टापत्तेरत एवानुभवोऽप्येवमेव दृश्यते। कुंभकारादेरांतरघटाद्यनुसंधानद्वारा जन्यस्य मूर्तिकस्य स्वव्यापारसाध्यस्य दंडादिप्रहारेण नाशेऽपि नष्टद्रव्यानुगतसंस्थानव्यंजनायानुभूयमानत्वेन तस्याप्यनित्यत्वकल्पने पुनः कुलालव्यापारेण घटादिनिर्माणासंगतेर्निर्माणस्यानुसंधानपूर्वकत्वादनुसंधानस्याप्युत्पत्तिविनाशकल्पने मानाभावात्तद्विस्मरणस्याप्यावरणकृतत्वाच्चोक्तरीत्यांतरप्रपंचस्य नित्यत्ववर्णनौचित्यत्वात्। न च कैवल्योपनिषदि "†स एव मायापरिमोहितात्मा शरीरमास्थाय करोति विश्वं॥ स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके॥ सुषुप्तिकाले सकले विलीने" इत्यादिना जाग्रत्प्रपंचस्यानित्यत्वं प्रतिपाद्य तद्वदेव तैजसिनानुभूयमानस्य बुद्धिधर्मस्य प्रपंचस्याप्यनित्यत्वं प्रतिपाद्यत इति तद्विरोध इति वाच्यं। तत्रापि जाग्रदादीनामवस्थापदवाच्यानामनित्यत्वप्रतिपादनं च

§ छांदोग्योपनिषदि प्र-७ खं-२५ मं-२ † कैवल्योपनिषदि खं-१ मं-१२

बुद्धिवृत्तीनां न भवति किंतु बुद्धिवृत्त्यावरणानां निद्रासुषुप्त्यादिरूपाणामत एव "× जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥ तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥" इति वाक्येन न बुद्धिवृत्तिसंबंधस्य कल्पितत्वेनानित्यत्वप्रतिपादनद्वारा संबंधराहित्यमात्मनः प्रतिपाद्यते। किंतु नित्यसंबंधाया बुद्धेरावरणस्थ नश्वरत्वेनावरणत्रयस्य जाग्रदावरणस्य स्वाप्निकावरणस्य सुषुप्त्यावरणस्य च प्रज्ञानावरणस्य नाशः प्रतिपाद्यत इति तनुत्रयस्याविद्यावृत्तिविशेषस्य नाशेनाधिष्ठानस्यात्मनः प्रकाशस्य स्वाभिन्नशक्तेरात्मायमेवेति निश्चयरूपाया इतरदात्मस्वरूपं नेति चातद्व्यावृत्तिपुरस्कृतायाश्च परस्परविषयविषयीभावोऽभिधीयत इति न कश्चन श्रुतिविरोधः। अन्यथा बुद्धेरपि नाशांगीकारे "‡ चिन्मात्रोऽहं सदाशिव" इति वाक्येनात्मविषयिण्या बुद्धेश्चिन्मात्रः सदाशिवोऽहं इत्याकाराया बुद्धेरभिनयपुरस्सरमुपदेशायोगात् "† अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच" इत्युपक्रमानुरोधेन मुख्याधिकारिणोऽश्वलायनर्षेरुपदेष्टुः परमेष्ठिनो ब्रह्मज्ञानिनो जाग्रदाद्यवस्थापदवाच्यप्रतिबंधकरहितस्याहं चिन्मात्रः सदाशिव इत्यभिनयासंभवात्। भवन्मतेऽहं सदाशिव इत्याकाराया बुद्धेः साक्षिण्या एव केवलायाश्चित आत्मत्वात्प्रतिबंधकगंधरहितस्य परमेष्ठिनोऽपि प्रतिबंधकत्वेन स्वीकृताया बुद्धेर्भवन्मतरीत्या असंभवात्। किंच बोध्यत्वमेव नास्तीति बोधसुखस्याबोध्यत्वाच्छुद्धः पूर्णो नित्यः एकः शिवोऽहमित्याद्यनुभवसुखानामनित्यत्वापत्तिः। प्रारब्धक्षयानंतरं बुद्धेर्नाशस्वीकारादात्मसुखानामतिवेदभाग्योदयासाध्यानां ग्राहकबुद्ध्यभावेनाकिंचित्करत्वापत्तेश्च। अस्मिन्मते चात्मसुखाद्याकाराया बुद्धेर्नित्यत्वेनाहं सदाशिव इत्यादेरभिनेयत्वेन चिन्मात्रोऽहं सदाशिव इत्यभिनीय परमेष्ठिना प्रदर्शनात्पूर्वमगृहीतामात्मस्वरूपावरणेनावृतां बुद्धिमात्मशक्तिं नित्यसंबध्दां परमेष्ठिकृतोपदेशेनावरणाविद्यानिवृत्त्यनंतरं गृण्हातीति "* सत्यं ज्ञानमनंतं ब्रह्म" इति श्रुतिसिद्धज्ञानानंतत्वस्वारस्येन वृत्तिज्ञानं स्वरूपज्ञानमिति शिवशक्त्योर्द्वयोरपि दृग्दृश्यभावस्य विद्यमानत्वेन निद्रादोषेण कल्पितस्य पुरोवर्तिनो बाह्यत्वेनानुभूयमानप्रपंचस्यैव नाशप्रतिपादनौचित्यात्। जाग्रति बुध्दावाकलय्य स्वर्णकारादिभिर्यथा वाऽऽभरणं क्रियते तद्वत्स्वप्ने कंचिदर्थं बुध्दावाकलयन् निर्मोति पश्यति जिघ्रति वेत्त्यनुभवानुरोधेन कल्पितप्रपंचस्यैव नाशौचित्यानात्मशक्तेर्बुध्देर्नाशः संभवति। अयमेवार्थः श्वेताश्वरशाखिभिः श्रूयते च। "§ देवात्मशक्तिं स्वगुणैर्निरूढां" इति देहेंद्रियादिवैलक्षण्येनायमात्मेति निश्चयबुध्दि स्वात्माभिन्नशक्तिं मूलावरणैर्निरूढां मित्यादिव्यवधाने दीपदीपप्रकाशयोरस्फुरणवन्मेघावरणे सूर्यसूर्यालोकानामदर्शनवदनाद्यविद्यातमोऽवकुंठनेनायमात्मेत्याकारा बुध्दिरगृहीता कालस्वभावो वा नियतिर्वान्यो वेति सम्यगेव वेदान्तश्रवणादिना निश्चयकारिणी भूतावरणनाशे सति मेघापायेंऽशुमानिव बुध्दिरात्मा शक्तिराविरासीत्. सा च बुध्दिरात्मस्वरूपावरणं विनाश्य स्वसाक्षिणमभिन्नमात्मानं निश्चिनुत इति। न च द्रष्टा दृश्याद्भिन्नः घटघटद्रष्ट्रोर्भेदवदिति वाच्यं। स्वस्वरूपापरोक्षं स्वभिन्नापरोक्षमित्यपरोक्षं द्विविधं। स्वभिन्नापरोक्षे घटादौ द्रष्टा दृश्याद्भिन्नो भवितुमर्हति। स्वस्वरूपापरोक्षे द्रष्टृदृश्ययोर्भेदाभावस्यापि स्पष्टत्वात् द्रष्टा दृश्याद्भिन्न इत्यनुमानस्य स्वभिन्नापरोक्षविषयत्वेन प्रयोजकत्वात् स्वस्वरूपापरोक्षद्रष्टृदृश्ययोर्भेदानुमाने दृष्टान्तविरहाद्व्याप्तिज्ञानानुदयात्। न चैवमप्यज्ञानमावृतिर्विक्षेपः परोक्षमतिरपरोक्षमतिः रनर्थनिवृत्तिरानंदावाप्तिरिति सत्तावस्थाबुध्दिधर्मैर्बुध्दिप्रतिबिंबचिदाभासस्येति वाच्यं। चिदचिद्विशिष्ट

× कैवल्योपनिषदि खं—१ मं—१७ ‡ कैवल्योपनिषदि खं—१ मं—१८ † कैवल्योपनिषदि खं—१ मं—१
* तैत्तिरीयोपनिषदि आ—२ अनु—१ मं—१ § श्वेताश्वतरोपनिषदि अ—१ मं—३

ब्रह्मेत्यंगीकारात् अद्वैतिमते कूटस्थशब्दवाच्यस्तत्त्वमसिवाक्यार्थस्वरूपघटक एव ब्रह्मेति नास्माकं विवादः। अपि च बुद्धिर्झडिति तत्प्रतिबिंबचेतनमिति बुद्धितदाभासौ चिदचितावेव। शक्तिस्तदभिन्नत्वे सति ब्रह्मणस्तद्वैशिष्ट्यं वक्तव्यं। तदेव चिदचिद्विशिष्टमिति। एवमेवेश्वरसाक्षी कूटस्थाभिन्नो ब्रह्मेत्युचितं। मायातत्प्रतिबिंबश्च चिदचितौ। ताभ्यां चिदचिद्भ्यां वैशिष्ट्यं ब्रह्मण इति चिद्विशिष्टं ब्रह्म जगत्कारणं न कुंठितेयं सरणिः। इत्याचार्याणामप्यांतराशयविषयः। अस्माकं तु शक्तिविशिष्टं ब्रह्मेति शक्तिशब्देन सामान्यतो व्यवहार इति चिदचिद्वैशिष्ट्याच्च कश्चिद्भेदः। ब्रह्मण ईश्वरसाक्षित्वेन व्यवहृतस्य मायातत्प्रतिबिंबरूपचिदचिद्विशिष्टस्य तद्वदेव कूटस्थसंज्ञितस्यात्मनो बुद्धितदाभासचिदचिद्विशिष्टस्य च न भेदो नाप्यभेदः किंतु भेदाभेदः यथा अग्नित्वेन कणत्वेन भेदः दाहकत्वेन रोहितत्वेन चाभेदः। यदि चिद्भेद एवेति तर्हि तूलादिषु लग्नस्य दाहकत्वगंधो न स्यात्तूलादिष्वग्निकणे लग्ने चार्द्रीभवेत् रोहितत्वं "§ यदग्ने रोहितं रूपम्" इति छांदोग्यश्रुतिसिद्धमंतरा शुक्लरूपादि प्रतीयात्। तथा न प्रतीयते तथा चानुभवविरोधाद्भेदानुपपत्त्या चाभेदोऽगीकार्यः। अभेदे च विवक्षिते वन्हेः पाकादिसाधनत्वव-च्छीतनिवर्तकत्वतत्काष्ठान्तरदाहवदग्निधर्माः सर्वे कणेऽपि संभवेयुः। न च काष्ठावयवबाहुल्याल्पीयस्त्वाभ्यामग्निकणयोर्वैचित्र्यमिति वाच्यं। तद्वन्मायाबुद्ध्योर्बाहुल्याल्पीयस्त्वोपाध्योर्विद्यमानत्वात्। न चोपाधिनाशे अग्निकणयोः केवलाभेद एवेति वाच्यं। प्रकृते मायाबुद्ध्योर्नित्यत्वात् मायाबुद्धिश्चात्मशक्तिर्ब्रह्मशक्तिरिति च व्यवन्हियते। उक्तं च रत्नत्रयपरीक्षायां "योऽसौ धर्मी स शंभुः शिव इति च परं ब्रह्म चेति प्रसिद्धो यो भोक्ता धर्मिणोऽस्याविघटितमहिषी सांबिकोमेति विद्या ॥ तच्चोपादानभूतः पर इह पुरुषः सैषनारायणोक्त्या ख्यातः श्रीकूर्मवाक्यैरधिगमितामिदं नारदस्यापि वाक्यैः ॥ नित्यं निर्दोषगंधं निरतिशयसुखं ब्रह्म चैतन्यमेकं धर्मो धर्मीति भेदद्वयमयति पृथग् भूयमायावशेन ॥ धर्मः सत्तानुभूतिः सकलविषयिणी सर्वकार्यानुकूला शक्तिश्चेच्छादिरूपा भवति गुणगणश्चाश्रयस्त्वेक एव ॥" इत्यादि तत्रैव स्पष्टं। अत्रोक्ताभेदोऽपि न युज्यते तस्माद्भेदाभेदो व्यवस्थीयते। अन्योन्याभावाधिकरणे चाभेदस्य साधनप्रकारस्तु मूल एवाग्रे स्फुटीभविष्यति। ननु स्वात्मसाक्षात्कारः करणविशेषनिबंधनो वा विषयविशेषनिबंधनो वा आद्ये तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदीयपुराणवचनात् "‡ अभयं वैजनकप्राप्तोऽसि" "† तदात्मानमेवावैदहं ब्रह्मास्मि" इति श्रुतेश्चापरोक्षज्ञानं भवितव्यं। न च शब्दस्य परोक्षज्ञानजनकत्वं स्वाभाव्यमिति वाच्यं। विचारसहकृताच्छब्दादपरोक्षज्ञानदर्शनात्। यथा वा दशमस्त्वमसीत्यादौ स्वयं दशम् इत्यपरोक्षेणानुभूयते। एवमेव स्वस्वरूपापरोक्षे शब्दादेव विचारसहकृतात् "$ अयमात्मा ब्रह्म" इत्यनुभूयते स्वभिन्नस्वर्गाद्यपरोक्षमेवेति व्यवस्थीयते अयमेवं वदतामाशयः। संविदपरोक्षं करणविशेषोत्पत्तिनिबंधनं न भवति। अपि तु प्रमेयविषयोत्पत्तिनिबंधनं। तथाच ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यमपि ज्ञानमपरोक्षं। शब्दप्रमाणमत्र तत्त्वमस्यादिरूपं तद्विशेषितं ज्ञानं शास्त्रजन्यं ज्ञानं वाक्यार्थे वाक्यं विशेषणमिति तत्त्वमस्यादिवाक्यजन्यं ज्ञानं प्रमाणावच्छिन्नचैतन्यं ब्रह्मचैतन्यं तदेव प्रमातृचैतन्यमंतःकरणावच्छिन्नचैतन्यं त्रयाणामेकदेशवर्तित्वेनाभेदः। अत एव मठान्तर्वर्ती घटाकाशो न मठाकाशाद्भिद्यते अनेकेषामुपाधीनामेकदेशस्थत्वं विषयाभेदप्रयोजकं। अपरोक्षं नाम वेदान्तिनां मते प्रमातृचैतन्यप्रमाणचैतन्यविषयचैतन्यानाम-

---

§ छांदोग्योपनिषदि प्र–६ खं–४ मं–१ ‡ बृहदारण्यकोपनिषदि अ–६ ब्रा–२ मं–४

† बृहदारण्यकोपनिषदि अ–३ ब्रा–४ मं–१० $ मांडूक्योपनिषदि मं–२

भेदः न स्वात्मनो निरवयवत्वेन तदभिन्नशक्तेर्बुद्धेरपि निरवयवत्वान्निरवयवतांतःकरणस्य परिणामात्मिका वृत्तिः कथमिति वाच्यं। ब्रह्मणोऽपि परिणामवादिनो वयमिति तदभिन्नशक्तेरपि परिणामश्चतुर्थोपदेशे स्पष्टीभवेत् न च "* समनोऽसृजत" इति श्रुत्या मनसः सादित्वश्रवणान्न निरवयवत्वे सत्यनादित्वं किंतु सादित्वे सति सावयवत्वमिति वाच्यं। तादृशश्रुतेस्तदंतःकरणावरणस्य तमसः अविद्यायाः सावयवत्वेन सादित्वप्रतिपादनपरत्वौचित्यावृत्तिर्मनोधर्मत्वे च "§ कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः पूर्वत्वात् अस्यां श्रुतौ धीशब्देन बुद्धिरभिधीयते॥ अतः कामादेर्मनोधर्मत्वं अत एव कामादेरपि बुद्धिधर्मत्वं। तथा च बुद्धिधर्माः सर्वे बुद्ध्यभिन्नात्मधर्माः आत्मधर्माश्च बुद्धिधर्माः "नित्यं निर्दोषगंधं निरतिशयसुखं ब्रह्म चैतन्यमेकं धर्मो धर्मीति भेदद्वयमयति पृथग्भूय" इति किलैकस्यैव ब्रह्मणो धर्मधर्मिभावः। अत एवानुभवोऽपि तथैव दृश्यते अहमिच्छाम्यहं जानाम्यहं करोमीति ज्ञानेच्छाकृतीनामात्मधर्मत्वेनाभेदः। अत्राध्यासवादिनः अयो दहतीति व्यवहारे दाहकत्वात्यंताभावाधिकरणेऽन्नायसि दग्धृत्वाश्रयवन्हितादात्म्याध्यासः। अध्यासो नाम भेदावरणवर्तुलत्वाद्ययोधर्माणामत्यंताभावाधिकरणे वह्नावध्यासः अयमितरेतरगुणाध्यासः। इमे दग्धृत्वादयो वन्हिधर्माः इमे वर्तुलत्वादयो अयोधर्मा इति भेदो न गृह्यत इति तस्यार्थः। अयमयःपिंडः अयं वन्हिरिति परस्परभेदोऽपि न गृह्यत इत्यर्थः प्रकृते च सत्यज्ञानानंदादय आत्मधर्माः, कामः संकल्पः श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीः सुखं दुःखमित्यादिजडबुद्धिधर्माः, उक्तानां धर्माणामितरेतरभेदो न गृह्यते। तथैव सत्यज्ञानानंदाः ब्रह्मधर्माः, सत्वरजस्तमांसि बुद्धिधर्मास्तेषां च भेदो न ज्ञायते। एवमेव जडचेतनयोर्मायाचैतन्ययोरंतःकरणजीवयोश्च भेदो न गृह्यते। इतीतरेतराध्यास इति। अत्रेदं तत्त्वं क्षीरनीरयोः प्रत्येकं प्रत्यक्षेणानुभूतयोरेकीभावानंतरं पूर्वगृहीतभेदो न गृह्यत इति। तत्र भेदावरणमध्यासो युक्तः भेदस्यावरणेऽप्यभेदनिश्चयो नानुभूयते शुद्धक्षीरापेक्षयेदं विजातीयजलादिसंयुक्तं पूर्वानुभूतशुद्धक्षीरविलक्षणत्वादित्यनुमानेनाभेदोऽपि नानुभूयत इति। प्रत्यक्षानुमानादिषट्प्रमाणसिद्धोऽध्यासः। तथैवायःपिंडोऽपि स्वेनैवापणादिना विक्रीय्यानयनकाले वर्तुलाद्याकारेणानुभूतः "‡ यदग्ने रोहितं रूपं" इत्यादिश्रुत्या प्रत्यक्षादिना च वन्हौ रोहितोष्णस्पर्शादयो गृहीताः। एकैकस्मिन्ननुभवसिद्धानां प्रत्यक्षेण वन्हिसंयोगानंतरं भेदो न ज्ञायते अभेदोऽपि नानुभूयते वन्हिरुष्ण एवायो नीलवृत्तमेवेति पूर्वमनुभूतमनुभविष्यति च। तत्रावरणदोषेणायो दहति क्षीरममधुरमिति ज्ञानेऽपि तस्याः प्रामाणिकत्वमनुभूयते। भेदस्य प्रामाणिकत्वमपि प्रमाणेनानुभूयते। तद्वत्प्रकृते चेतनमंतरा कामसंकल्पाद्याश्रयत्वेन न केनापि पुरुषेणानुभूयते सत्यज्ञानानंदाश्च बुद्धिमंतरा केवलचिदात्मनि केनापि नानुभूयते किंतु सुषुप्त्यादौ बुद्धिनाशे भवदुक्तरीत्या सत्यज्ञानानंदाभावाश्च न किंचिदवेदिषमित्यनुभूयते कदाचिदध्यासेति केनापि शास्त्रविचारादिसाधनसंपादनेन केवलबुद्धिधर्माः कामादयः केवलं चिद्धर्मा अकामादय इति ह्यनुभूयते स। नानुभूयते अपितु स्वात्मज्ञानावरणमूलाविद्यानिवृत्त्यर्थं बुद्धिव्याप्तिरपेक्ष्यते च। तथा च नीरक्षीरवदयःपिंडवन्हिवदध्यासापगमानंतरभावी भेदनिश्चयः प्रत्यक्षादिप्रमाणेनानुभूयते। तद्वन्नात्र जडाजडयोर्बुद्धितत्साक्षिणोर्भेदो निश्चीयत इति दृष्टान्तवैषम्यात्प्रत्यक्षादिप्रमाणाविरुद्धत्वादहं सुखीत्याद्यनुभवविरोधाच्च विचार्योऽयमध्यासोऽन्यैरेव। किंच मायाया जडाजडत्वप्रतिपादनमध्यासायत्तमिति तस्या-

* तैत्तिरीयब्राह्मणे कां-२ प्र-३ अनु-२ § बृहदारण्यकोपनिषदि अ-३ ब्रा-५ मं-३
‡ छांदोग्योपनिषदि प्र-६ खं-४ मं-१

ध्यासस्यैव विचार्यत्वादजडत्वं ब्रह्माभेदो भेदश्चेति शक्तिविशिष्टं ब्रह्म जगत्कारणं। एवमात्मनो बुद्धेश्च नित्यसंबंधः उच्यत इति कामादीनां बुद्धिधर्मत्वेऽपि तदभिन्नत्वादात्मन अहं करिष्यामि ज्ञास्यामी- च्छामीति ज्ञानेच्छाकृतिसंकल्पादीनामात्मधर्मत्वेनानुभवोऽपि वास्तवः। न त्वध्यासकृत इति। न चांतःक- रणस्यैंद्रियत्वेन ज्ञानकरणमतींद्रियमिंद्रियमित्यादिलक्षणरटनं। न तावदंतःकरणमिंद्रियमित्यत्र प्रमाणमस्ति। "§ मनःषष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति" इत्यादि भगवद्गीतावाक्यमपि "यजमानपंचम ईडां भक्ष- यन्ति" इति वाक्येऽध्वर्युहोतृब्रह्माग्नींद्राणां चतुर्णामृत्विजामनृत्विजा यजमानेन पंचमा ईडामिति पंच- त्वसंख्यापूरणवच्चक्षुःश्रोत्रजिव्हाघ्राणत्वचामिंद्रियाणामनिंद्रियेण मनसा षट्संख्यापूरणमिति मनस इंद्रि- यत्वानुपपत्तेर्नहींद्रियगतसंख्यापूरणमिंद्रियेणैव भवितव्यमिति नियमो दृश्यते। अत एव "वेदानध्याप- यामास महाभारतपंचमान्" इत्यादौ वेदगतसंख्याया अवेदेन भारतेन पूरणमिति युक्तमुत्पश्यामः। अपि च "† इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इति मनस इंद्रियात्परत्वेन पृथग् गृहणादनिं- द्रियत्वं सिद्धं। न च मनस इंद्रियत्वाभावे सुखादीनां मनोवेद्यानां प्रत्यक्षत्वं न स्यात् इंद्रियजन्यत्वा- भावादिति वाच्यं इंद्रियजन्यत्वेन साक्षात्वेन न लक्ष्यलक्षणभावासंभवादन्यथा मनोजन्यतयाऽनुमित्या- देरपि प्रत्यक्षत्वापत्तेरीश्वरीयज्ञानस्य प्रत्यक्षत्वानापत्तेश्च। सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत्प्र- माणचैतन्यस्य विषयचैतन्याभेदो ज्ञानगतं प्रत्यक्षत्वं। विषयस्य प्रत्यक्षत्वं तु स्वाकारवृत्त्युपहितप्रमातृ- चैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वं। सा चात्मशक्तिवृत्तिश्चतुर्धा भवति संशयनिश्चयगर्वस्मरणैर्वृत्तिभिर्मनोबुद्धिरहंकारश्चित्तमित्येकैवात्माभिन्नशक्तिर्व्यवन्हियते। तदयं निर्ग- लितोऽर्थः। ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यमपि ज्ञानमपरोक्षमिति प्रमीयाविषयविशे- षनिबंधनोऽयं प्रत्यक्षव्यवहारः। प्रमेयविशेषश्च शास्त्रश्रवणाद्युक्तप्रकारेण ब्रह्मस्वरूपावरणभंगः। अत एव प्रातर्दर्शनादिकरणे प्रदर्शनं प्रति "‡ प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृत मित्युपास्व" इति इन्द्रप्रोक्त- वाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते मामुपास्वेत्यस्मच्छब्दानुपपत्तिमाशंक्य तदुपपादकत्वेन प्रकृतेः "* शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रे शास्त्रतो दृष्टिरपरोक्षज्ञानं शास्त्रदृष्टिरिति तत्त्वमस्यादिवे- दान्तवाक्यजन्यमहं ब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति ज्ञानस्य बुद्धेरत्र जन्यत्वानुपपत्त्याऽऽवरणभंगानंत- रमभिव्यक्तत्वमिति। यथाऽद्वैतिमोक्षस्योत्कृष्टज्ञाननिवर्त्यत्वेऽपि "कंठचामीकरन्यायेन" प्रतिपादनवदनादि सिद्धाया बुद्धेः शास्त्रनिर्वर्त्यत्वमेवेति नष्टद्रव्यस्य चोरैरपहृतस्य वा पुनः प्राप्तवदिति बुद्धिवैशिष्ट्यमा- त्मनो न्याय्यं। अपि च करणविशेषनिबंधनमेव ज्ञानानां प्रत्यक्षत्वमित्येवमुपवर्णयन्ति। तेषामयमाशयः एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षाप्रत्यक्षव्यवहारदर्शनात् संवित्साक्षात्कारत्वे इंद्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वं। ब्रह्मसाक्षात्कारे तु मनननिदिध्यासनसं- स्कृतं "मन एव करणं मन एवानुद्रष्टव्यम्" इति श्रुतेः। "* अप्रमेयमनाद्यं च" इति मनोगम्यत्वश्रुति- श्चासंस्कृतमनोविषया नैतावता मनोवेद्यत्वप्रतिपादनमात्रेणौपनिषदत्वानुपपत्तिः। अस्मदुक्तस्य संस्कार- विशेषविशिष्टस्य मननो वेदान्तशास्त्रश्रवणमननादिसमवधानानंतरमेव वक्तव्यतया वेदोपजीवित्वेनौ- पनिषदत्वोपपत्तेः। अत एव "× शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रं तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमित्यादिस्मृतिरपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रैकप्रयोज्यत्वादुपपद्यते। तदुक्तं च

§ भगवद्गीतायां अ.–१५ श्लो.–७. † कठवल्ल्युपनिषदि वल्ली–३ मं.–१०. ‡ कौषीतकी- ब्राह्मणोपनिषदि अ.–३ मं.–१. * ब्रह्मबिंदूपनिषदि मं.–९. × ब्रह्मसूत्र–३१ अ.–१ पा.–१.

"।अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा॥ शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः पर" इति सम्यग्राधनं सिद्धिः "राधसाधसंसिद्धौ" इति व्याकरणानुशासनात् संसिद्धिर्ब्रह्मापरोक्षकालस्तस्मिन्काले शास्त्रार्थजा प्रमेति बुद्धिविषयत्वं वाचस्पतिर्वेत्तीति तस्य वाक्यस्यार्थः। तच्च ज्ञानं पापक्षयात् पापक्षयश्च कर्मानुष्ठानादिति मोक्षे समुच्चीयते। बृहस्पतिसवसौत्रामण्यादीनामपि वाजपेयाग्निचयनाद्यंगत्वमिति। अत एव श्रूयते "* तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति स्मर्यते च "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायत" इति कर्मसमुच्चयोऽप्यंतःकरणनैर्मल्यद्वारा परमसाधनत्वं नैर्मल्यं चावरणाविद्यानाश इति समाहितमानसैरनुसंधेयोऽयं पन्थाः। आवरणं च माया शक्तिः माया च न सदसद्विलक्षणा किंत्वसद्विलक्षणा परब्रह्मशक्तिरभिन्नाभिन्नात् अजडत्वमध्यासकल्पितमित्यध्यासे मानाभावस्य प्रतिपादितत्वादजडत्वमवशिष्यते। जडाजडप्रपंचोन्मेषस्तु जडाजडसकाशादित्यौचित्येऽपि भवन्मतरीत्या ब्रह्मणो निर्गुणस्य चिन्मात्रस्य जडमयोपादानत्वे वक्तव्ये विशेषेण जडत्वमंगीकार्यं स्यात्। न च पुष्पपुष्पगंधवन्न जडरूपा। जडाजडत्वस्य वैरूप्यांगीकार्या यदि चेत् "§ सत्यं ज्ञानमनंतं ब्रह्म" इति श्रुतिविरोधात् ब्रह्म चिदेव चित्सकाशाज्जडमयोन्मेषस्तदानीमजडाख्याभ्यां शिवशक्तिभ्यामभिन्नोपादानभूताभ्यां जडाजडजगदुन्मेष इति युक्तिसहोऽपि श्रूयते चायमर्थः ॥ वेदज्ञा धर्ममेतं प्रविततमखिलाधारमाकाशमाहुः किंचानंदं मनो वागविषयमधिकं धर्मिणो वर्णयन्ति ॥ "सत्तास्फूर्ति सुखं च त्रयमपि जगतां संगिरन्ते तदंशं प्राणाकाशाद्युपास्तं कतिचिदपि तदालंबनास्ते वदन्ति"। बृहदारण्यकोपनिषदि "‡ यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति गार्ग्यापृष्टेन याज्ञवल्क्येन आकाश एव तदोतश्च प्रोतश्चेत्यभिहिते कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति पुनस्तया पृष्टेन तेन एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति इत्यादिनाऽक्षरशब्दितं सर्वज्ञत्वादिविशिष्टं ब्रह्म प्रतिपाद्य एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च" इत्युत्तरमभिहितं तत्राकाशो न भूताकाशः तस्य परिच्छिन्नस्य प्रतिकल्पं भिन्नस्य च सर्वदेशकालवर्तिसकलप्रपंचाधारत्वायोगात् अतो धर्मज्ञानरूपा चिदंबरशक्तिरेव आकाश इत्यवशीयते ॥ तत्र आसमंतात्काशयति प्रपंचं सर्वं प्रकाशयत्यवभासयतीति च परब्रह्मणः सर्वविषयज्ञानरूपे तस्मिन्नवयवार्थानुगतिसद्भावात् "यस्य सा परमा देवी शक्तिराकाशसंज्ञिता॥ अनंतैश्वर्ययोगात्मा महेशो दृश्यते हि स" इति कूर्मसूक्त्या तस्याकाशशब्दवाच्यत्वावगमाच्च। एवं छान्दोग्योपनिषद्यपि मंत्रभागे "ऋतं सत्ये प्रतिष्ठितं भूतं भविष्यता सह" इति भूतभविष्यद्वर्तमानात्मकसकलप्रपंचाधारत्वेन प्रकृते सत्ये आकाश उपनिरज्जतु मह्यमन्नमथो श्रियमित्याकाशशब्दप्रयोगेनाक्षरधर्मके बृहदारण्यकोक्त आकाश एवायं जगदाधार इत्यवसितं। अत्र ऋतशब्देनापि तथावाचिना दृग्विषयतया निश्चितत्वात्पारिशेष्याच्च वर्तमानत्वमुक्तमयं चाकाशो भूताकाशादन्य इति स्पष्टीकृतं आकाशस्य "एष आकाशो यदेतद्भाति मंडलं" इत्यत्र प्रकृतवाचिनैतच्छब्देन प्रकृतमाकाशं परामृश्य प्रसिद्धाकाशस्याप्याकाश इत्युक्त्या मन्मथस्यापि मन्मथ इत्युक्त्या मन्मथान्तरवदाकाशान्तरं प्रतीयते। तत्रैव "$ आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स

† ब्रह्मसूत्र—२३ अ.—३ पा.—२.
* बृहदारण्यकोपनिषदि अ.—६ ब्रा.—४ मं.—२२.
§ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—१.
‡ बृहदारण्यकोपनिषदि अ.—५ ब्रा.—८ मं.—६.
$ छांदोग्योपनिषदि प्र.—८ खं.—१४ मं.—१.

आत्मा" इति निर्विकारतया नामरूपास्पृष्टत्वाद्ब्रह्मणो वैलक्षण्येन नामरूपनिर्वोढृतया प्रतिपादिताकाशोऽपि यद्धर्मभूता चिदंबरशक्तिरेव तत आकाशनामरूढ्यवगमात्। एवं तावद्वाजसनेयिनः छान्दोगाश्च धर्मज्ञानरूपां चिदंबरशक्तिं सर्वाधारं सर्वकारणमाकाशमाहुरिति स्थितं। तैत्तिरीयास्तामेव वाङ्मानसातीतं परब्रह्मणो निरतिशयमानंदमाहुः। "× यतो वाचो निवर्तन्ते अप्राप्यमनसा सह॥ आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्यत्र ब्रह्मगते परमानंदे "* यदेष आकाश आनंदो न स्यात्" इत्याकाशशब्दसामानाधिकरण्यादस्य चिदंबरशक्तित्वमवगम्यते। न च तत्र यदेष इति प्रकृतानंदमयपरैतच्छब्दसामानाधिकरण्यतः कश्चिद्दोषः। आनंदमयोऽपि सैव चिदंबरशक्तिरित्यंगीकारादानंदमयशब्दो हि प्रचुरानंदमाचष्टे न तु प्रचुरानंदविशिष्टं धर्मिणं तत्प्रकृतवचने मयडिति सूत्रस्यापि "अन्नमयं वर्तते यवागूमयं वर्तते" इत्युदाहरणानां प्रचुरमन्नं प्रचुरा यवागूर्वर्तते इत्यादिरेवार्थः शाब्दिकैरंगीकृतः। अन्नमयो यज्ञ इत्याद्युदाहरणानां तु सूत्रस्यार्थांतरमाश्रित्यांगीकृतानां प्रकृतं प्रस्तुतमन्नमस्मिन्यज्ञ इत्यादिरेवार्थः तैरंगीकृतः। न तु तस्मिन्नर्थे प्राचुर्यानुप्रवेशस्तैरभिमतः इह चावश्यं प्राचुर्यविवक्षया भाव्यं। अयमर्थः प्राचुर्यविवरणार्थतयैवाग्रिमानंदमीमांसाप्रवृत्तेः स चानंदमयशब्दोक्तः प्रचुरानंदः परब्रह्मधर्मिकः इत्येतदग्रिमं "§ स एको ब्रह्मण आनंदः" आनंदं ब्रह्मणो विद्वानित्यतः सिध्यते न च "† सत्यं ज्ञानमनंतं ब्रह्म" इति प्रकृते ब्रह्मणि निरूपणीये तद्धर्मरूपस्य प्रचुरानंदस्य प्राधान्येन निरूपणं प्रकृतासंगतमिति वाच्यं सत्यज्ञानादिमंत्रोदितगुणरूपतया अन्नमयादिकोशचतुष्टयनिरूपणं तदंतर्गतपरमव्योमरूपत्वेनानंदमयनिरूपणं "‡ ब्रह्मपुच्छं प्रतिष्ठा" इति तत्स्थब्रह्मनिरूपणमित्यादिप्रकारेण सर्वस्याप्यग्रिमसंदर्भस्य सत्यज्ञानादिमंत्रार्थविवरणतया संगतेः तथा "¶ सदेव सौम्येदमग्र आसीत्" इत्यधीयानाः छान्दोगाः घटः सन् पटः सन्निति प्रतीयमानां प्रपंचसत्तां चिच्छक्त्यात्मकब्रह्मसत्तांशरूपामावेदयन्ति। इदं हि वाक्यं घटशरावादिकमिदं हि मृदेवासीदिति लौकिकवाक्यतुल्यच्छायं ततश्च यथा घटशरावादिषु मृत्त्वप्रतीतिः पूर्वाण्हदृष्टमृत्कूटगतमृदेकदेशानुस्यूतालंबना तेन लौकिकवाक्येन सिध्यति एवं घटपटादिसत्ताप्रतीतिरपि ब्रह्मसत्तांशानुस्यूतालंबना सदेवेत्यादिवाक्येन सिध्यति एवमाथर्वाः "$ तस्य भासा सर्वमिदं विभाति" इत्यामनंतो घटः स्फुरतीति प्रतीयमानं प्रपंचस्फुरणं ब्रह्मभावरूपतदीयशक्त्यंशमावेदयति। न च ततः स्फुरतीत्यस्य स्फुरणविषयत्वमर्थः सविता स्फुरति भाति प्रकाशत इत्यादिप्रयोगे स्फुरणवत्तार्थकस्य तस्य घटः स्फुरतीत्यादिप्रयोगे अर्थान्तरकल्पनायोगात्। न च ब्रह्मभावस्य सर्वसाधारण्यान्मनः स्फुरति मम मनसि स्फुरतीति व्यवहारानुपपत्तेः तत्तत्पुरुषचाक्षुषज्ञानाभिव्यक्तस्य ब्रह्मभावस्वरूपस्य स्फुरणस्य प्रतिनियतव्यवहारविषयत्वोपपत्तेः। तथा "§§ एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति पठन्तो वाजसनेयिनो वैषयिकादिसुखवृत्तिषु विषयविशेषादिसंपर्ककारणवशात् तारतम्येनाभिव्यक्तः परब्रह्मरूपचिच्छक्त्यंश एव जीवैरास्वाद्यत इत्यावेदयन्ति। तथा तैत्तिरीया अस्यानंदमीमांसायां "‡‡ यदेष

× तैत्तिरीयोपनिषदि वल्ली–२ अनु.–४ मं.–१. * तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१.
§ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–८ मं.–४. † तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१.
‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–३. ¶ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१.
$ कठवल्ल्युपनिषदि वल्ली–५ मं.–१५. §§ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–३२.
‡‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१.

आकाश आनंदो न स्यात्" इति प्रकृतमेव ब्रह्मानंदं स एको मानुष आनंद इत्यादि संदर्भे तारतम्यापन्ना मानुषाद्यानंदत्वेनाधीयमाना उत्कमानंदमावेदयन्ति। तथा छान्दोगादयः प्राणाकाशादिविषयोद्गीथादिविद्याश्चिच्छक्तिविषया निबध्नन्ति। तासु विद्यासु "† सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" "§ सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति" इति सकलभूतोत्पत्तिलयाधारत्वेन तदुपादानत्वप्रतीतेः कूटस्थे ब्रह्मणि तदयोगात् "¶ को ह्येवान्यत्कः प्राण्यात्" इत्यादिश्रुत्यनुसारेण सकलप्राणनहेतौ चिदंबरशक्तिरूपे ब्रह्मधर्मे प्राणाकाशादिशब्दयोरुपपत्तेश्च एवं धर्मस्य महान्तं महिमानं प्रदर्श्य धर्मस्य धर्मिणश्च कृत्यविभागः प्रदर्शितः। कर्तृत्वं तस्य धर्मी कलयति जगतां पंचसृष्टिप्रपूर्वे "धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावं बिभर्ति स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः॥ प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिवद्ब्रह्मकोटी" विस्तरभीतेरुपरम्यते तथाच "* मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" इति मायाशब्देन ब्रह्मधर्मरूपिणी शक्तिरिति सिद्धं। तथा च तस्य मायायाः शक्तिद्वयं काचिद्विक्षेपरूपिणी अन्या चावृत्तिरूपिणीति। आद्या जगल्लिंगादिब्रह्मांडांतं अब्धौ फेनवत्प्रकाशिकी न तावन्मात्रेणात्र जगतः अनित्यत्वं। ध्वंसस्य जन्यत्वेऽप्यनित्यत्वाभावात् किंतु जगत्सत्यमेव मायायाः अनित्यत्वप्रतिपादनात्। अपरा मायागता शक्तिरावरणरूपा अंतर्दृशः दुःखाद्यखिलांतरविषयस्य दृश्यस्य च भेदमावृणोति न तावताध्यासः पुनरापतेत। बुद्धितदाभासयोर्जडाजडत्वविभजनपुरस्सरमध्यासानंगीकारात् बुद्धेश्चेतनत्वप्रतिपादनाच्च सत्तास्फूर्तिः सुखं चेत्युदाहृतग्रन्थे स्फूर्तेरात्मशक्तित्ववर्णनात्। अतस्तमसि अविद्याशक्तेर्ब्रह्मधर्ममायागुणत्वेनांगीकृताया अपगमे सति मोक्षः। सति बंध। इति किमधिकविलेखनेन सूत्रस्वारस्यमपि अथातःशब्दार्थाभ्यां धर्मविचारानंतरं धर्मिविचारस्य वृत्तत्वात्किं कर्तव्यमिति प्रकृतत्वाद्वेदार्थविचारस्य तत्प्रतिपाद्यं ब्रह्म तदभिन्ना तद्विषयिणी जिज्ञासेति शक्तिश्चेच्छादिरूपेत्युदाहृतश्लोकार्थरीत्या जिज्ञासाशब्देन शक्तिरभिधीयते। तदुक्तं विद्यारण्यैः "ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्ष्यत" इति अज्ञानं च ब्रह्मणोऽधिष्ठानत्वेनेति ब्रह्मावरणभंगाय ब्रह्माभिन्नशक्तिरंशेनाशेषजीवावरणनाशाय चाक्षुषप्रत्यक्षे चक्षुर्दीपौ जडस्य घटादेः सूर्यादेश्चाक्षुषप्रत्यक्षे चक्षुरितिवदात्मना साक्षात्कारे बुद्धिः शक्त्यंशीभूताभ्यर्हिततरेति ब्रह्मजिज्ञासाशब्दाभ्यां प्रथमैकवचनेन सुप्प्रत्ययेन शिवशक्त्योरैक्यं शब्दार्थभेदवैचित्र्याद्भेदश्चेति वन्ह्युष्णस्पर्शयोरभेदवद्भेदाभेदावपि सूत्रस्वारस्येनैव सिध्यतः। ब्रह्मविषयिण्या जिज्ञासायाः शास्त्रविचारसिद्धायाः अनित्यत्वकथनमेव युक्तिसहं न भवति। अन्यथा अथातो ब्रह्मेति सूत्रयेत् अथ कर्माण्याचाराद्यानि गृह्यन्ते "अथातो गृह्यकर्माणि अथातो दर्शपूर्णमासौ" व्याख्यास्यामः इतिवत्प्रतिपाद्यमेव शास्त्रादौ प्रतिज्ञातव्यं। जिज्ञासायाः शास्त्रप्रतिपाद्यत्वेन प्रतिज्ञेति शक्तिवैशिष्ट्यस्य शास्त्रप्रतिपाद्यत्वमित्यनेकसूत्रस्वारस्यान्न जीवब्रह्मैक्यं शास्त्रस्य विषयः किंतु शक्तिवैशिष्ट्यमेवेति सिद्धान्तस्थितिः॥

मू०— अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम्॥
नराणां क्षीणपापानां शिवे भक्तिः प्रजायते॥ १०२॥

† छांदोग्योपनिषदि प्र.–१ खं.–११ मं.–५. § छांदोग्योपनिषदि प्र.–१ खं.–९ मं.–१.
¶ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१. * श्वेताश्वतरोपनिषदि अ.–४ मं.–१.

अग्निष्टोमादयो यज्ञा अश्वमेधावसानकाः ॥
सर्वे ते शिवभक्त्यर्थं निश्चिता वेदशास्त्रयोः ॥ १०३ ॥
कृतपुण्यजनाः सर्वे भक्तिं प्राप्य महेश्वरे ॥
प्राप्नुवन्ति परं धाम जीवन्मुक्ताश्च ते बुधाः ॥ १०४ ॥
" ‡ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ॥
तदा शिवमविज्ञाय दुःखस्यांतो भविष्यति " ॥ १०५ ॥
शिव एव परं ब्रह्म सच्चिदानंदलक्षणम् ॥
तदन्यन्न परं किंचित्तदतो ध्येयमास्तिकैः ॥ १०६ ॥
" † सर्वमन्यत्परित्यज्य " शिवादन्यत्तु दैवतं ॥
शिव एव सदा पूज्यो मुमुक्षुभिरहर्निशं ॥ १०७ ॥
अयमेव हि सिद्धांतः सर्ववेदेषु नान्यथा ॥
तस्माल्लिंगं ब्रह्म शैवमुपास्यं च मुमुक्षुभिः ॥ १०८ ॥
लिंगांगसामरस्येन जीवब्रह्मैक्यलक्षणम् ॥ mokṣa
कैवल्यमेव सर्वेषां जायते न पुनर्भवः ॥ १०९ ॥
ततो ह्युपनिषच्छास्त्रं विचार्य शुद्धमानसैः ॥
" $ लिंगे सुषुप्तिरित्येतैः सुखं लिंगवतां परम् ॥ ११० ॥
आलस्यादि तथान्यत्र प्रतिपादितमित्यथ ॥
" § नमो ब्रह्मण " इत्याद्यैस्तदेव हि दृढीकृतम् ॥ १११ ॥
लिंगस्थापनमित्यादौ शतशः प्रतिपादितम् ॥
सर्वं ह्युपनिषच्छास्त्रं प्रवृत्तं वर्णितुं शिवम् ॥ ११२ ॥
तथापि मानवा मूर्खास्तत्यजुर्लिंगधारणम् ॥
आचारो विपरीतो हि युगधर्मानुसारतः ॥ ११३ ॥
धनी ह्युदररोगस्थो न भुंक्ते ह्यन्नमुत्तमम् ॥
तद्वत्तात्त्विकशास्त्रार्थे मतिर्नोदेति कस्यचित् ॥ ११४ ॥
शिवप्रसादसिद्धार्थाः कृतकृत्यास्तु ये नराः ॥
धृतलिंगांगभावाश्च भविष्यंति गतज्वराः ॥ ११५ ॥
अथातो ब्रह्मजिज्ञासेत्यारभ्य व्याससूत्रके ॥

---

‡ श्वेताश्वतरोपनिषदि अ.–६ मं.–२०. † अथर्वशिखोपनिषदि मं.–३. $ हंसोपनिषदि मं.–२.
§ महानारायणोपनिषदि अनु.–९.

अनावृत्तिरिति ह्येतदन्तं ब्रह्मविचारितं ॥ ११६ ॥
धार्यं निश्चित्य विद्वद्भिर्गुरुविश्वासतत्परैः ॥
रहस्योपनिषद्वाक्यैर्वर्णितं ब्रह्म केवलम् ॥ ११७ ॥
अपरिच्छिन्नविभवमवाङ्मानसगोचरम् ॥
निष्कलं निर्मलं शुद्धं निर्विकल्पं निरंजनम् ॥ ११८ ॥
ज्ञात्वा कथमुपास्यं हि निरस्तद्वैतलक्षणम् ॥
लक्षणेन प्रमाणेन वस्तुसिद्धिरुदाहृता ॥ ११९ ॥
जन्मादिकारणत्वं हि जगतां ब्रह्मलक्षणम् ॥
सर्ववेदान्तवाक्यानि प्रमाणानि न संशयः ॥ १२० ॥
एतैरापाततो ब्रह्म निश्चित्य श्रवणादिभिः ॥
§ब्रह्मैव सन् ब्रह्माप्येति *य एवं वेद मानवः ॥ १२१ ॥

व्या०— ननु केषांचिदग्निष्टोमादिब्रह्मस्थूलोपासनानां पशुधर्मत्वेन वीरशैवानुपयोग इति तत्रेदंतत्वं पशुधर्मसमनुष्ठानेनैव जन्मान्तरीयसंस्कारविशेषेणैव जन्मप्रभृतिशिवभक्तिरविच्छिन्ना भवेदिदमेव पशुकर्मणां फलमिति वेदोक्तधर्माणामविशेषेण चित्तनैर्मल्यद्वारा मोक्षरूपे फले समुच्चयः। स्थूलोपासनानामात्यंतिकाभावे शिवभक्तिरसाध्या भक्तिं विना मोक्षस्तु चर्मकटाहादेर्वेष्टनवदपरिच्छिन्नस्याकाशस्य वेष्टनवत्केनाप्यशक्यमिति शिवभक्तिं विना मुक्तिसंभावनैवोदाहृतश्रुत्या निरस्यते। अत एव "×सर्वमन्यत्परित्यज्य समाप्ताथर्वणी शिखा" इति श्रुत्या शिवभक्तिव्यतिरिक्तदेवतांतरोपासनानां परित्यागः कथितः समाप्ताथर्वणी शिखेतिऋगारभ्य वेदचतुष्टयोपसंहारकाले सकलवेदसिद्धान्तभूतस्यार्थस्य कथनादयमेवार्थस्तात्पर्यविषय इति शिव एव मुमुक्षूपास्यत्वेनाभिधीयते। शिवभक्तिरपि न भस्मधारणादिसामान्यरूपा किंतु यावद्धर्मविशिष्टलिंगधारणतत्पूजनादिरूपा। महाभारते अश्वत्थामानं प्रति वेदव्यासवचनं "जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः। आभ्यां लिंगेऽर्चितो देवस्त्वयार्च्योऽयं युगे युगे" ॥ इति लिंगार्चनायाः सर्वातिशयफलसाधनत्वेनार्चाशब्दितबिंबार्चनादेरितरदेवतोपासनापेक्षयाऽतिशायितत्वेऽपि लिंगार्चनापेक्षया न्यूनत्वप्रतिपादनाल्लिंगधारणपूर्वकपूजनादेः कैमुतिकन्यायेन सर्वोत्तरत्वं स्पष्टमेव लिंगस्वरूपपरिज्ञानायैव वेदान्तशास्त्रं विचार्यमित्यवसितोऽर्थः। हंसोपनिषदि हार्दाष्टदलकमलमध्यवर्तिनि लिंगे मनःप्रवेशे सुषुप्तिशब्दितमोक्षापरपर्यायपरमसुखप्राप्तेरनुभवसिद्धत्वेनाभिधानात् ज्ञानपुरःसरं हार्दलिंगस्वरूपेण ग्राह्येष्टलिंगधारणे तत्स्वरूपज्ञाने तदर्चनपूजनादौ च फलं मोक्ष एव इति सिद्धमेव। वेदान्तसारोपनिषदि तैत्तिरीयादौ च "$ सर्वलिंगं स्थापयति" इति वाक्येन लिंगस्य ब्रह्मणः स्थापनं नाम तद्विषयकमनोनैरंतर्यमिति लिंगनिदिध्यासनमेव संपादनीयमिति निश्चितं। तर्हि लिंगधारणादेर्वैदिकत्वे किमिति वैदिकैरविशेषेण नानुष्ठितः तत्र तेषां जन्मांतरीयविघ्नबाहुल्यं कलियुगशापानुगुण्यं वाऽनुसंधेयं। दृष्टान्तश्च धनी स्वयमुदररोगग्रस्तः शाल्यन्नं न भुंक्ते तद्वद्वैदिकः स्वयं ब्राह्मणदेवतात्वेन

§ बृहदारण्यकोपनिषदि अ.-६ ब्रा.-४ मं.-६. * नृसिंहपूर्वतापिन्युपनिषदि खं.-१ मं.-५.
× अथर्वशिखोपनिषदि मं.-३. $ महानारायणोपनिषदि अनु.-१६.

प्रपदब्राह्मणप्रसिद्धं शिवलिंगधारणादिविशिष्टधर्मानुवर्तनेन कंचित्कालमुपेक्षते। स्वकर्मपरिपाके तल्लिंगधारणाद्यनुवर्तत इति बुद्धिमद्भिर्विभावनीयं। वैदिकपरिग्रहदार्ढ्यं अत्रायं निष्कर्षः। अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिः शब्दादनावृत्तिः शब्दादित्यंतं यत्स्वरूपं विचारितं तदेव ब्रह्म लिंगं धार्यं ध्येयं पूजनीयमिति रहस्यैरुपनिषद्वाक्यैर्गूढतरमयमेवार्थोऽभिधीयते। सर्वज्ञताद्यपरिमितविभवशालिनं वाङ्मानसातीतं निवृत्तिप्रतिष्ठादिकलातीतं अविद्यासंबंधरहितं एवमित्यनिश्चेयं दुःखाद्यसंभिन्नमेतादृशं ब्रह्म कथमुपास्यं। उपसना चार्चनरूपा। उपास्यज्ञानाधीनेति। ज्ञेयप्रपंचविलक्षणं कथं ज्ञेयं स्यान्न शक्यते। ततो लिंगविचारो न शक्य इत्याशंक्य लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन ब्रह्मबोधनसाधनमाद्यमुपायं व्यासेनोदितं जगज्जन्मस्थितिलयकारणत्वं विजानीयाद्ब्रह्मबोधद्वितीयोपायः प्रमाणानि छांदोग्यबृहदारण्यरूपाणि समाप्ताथर्वणीशिखेति वेदोपसंहरणकाले "शिव एको ध्येय" इत्याद्युपवर्णनात् संशयो नास्तीत्यर्थः। शब्दानां परोक्षज्ञानजनकत्वस्वाभाव्यात् परोक्षरूपेण प्रथममवधार्य विचाररूपसहकार्यंतरसमवधानेन तत अपरोक्ष्यं संपादनीयं। सति चापरोक्षे "¶ ब्रह्मैव सन् ब्रह्माप्येति" इति "† य एवं वेदेति वेत्ता वेद्यस्वरूपमयति" इति प्रमाणानि कोऽयं पंथाः तदतो ब्रह्मलक्षणप्रतिपादकं द्वितीयं सूत्रमवश्यकमिति- तमेवाधिकरणार्थमारभते ॥

मू०— द्वितीयसूत्रं व्यासेन ह्यस्मिन्नर्थे समर्थितं ॥
§ जन्माद्यस्य यतः सूत्रं विष्णोराद्यस्य जन्म यत् ॥ १२२ ॥
तच्छंभोर्ब्रह्मणः साक्षाज्जगत्कर्तृत्वमिष्यते ॥

व्या०— जन्म आद्यस्य यत इति त्रेधा विभज्य आद्यं पुरुषमीशानमिति भारतादिश्लोकोक्तरीत्याद्यस्य "पुरुसंज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरिः" इति । श्रवणात्पुरुषस्याद्यस्य जन्म यतः सकाशात् जातो ब्रह्मन्निति श्रुतेः "‡ ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इति श्रुतेश्च विष्णुजनकत्वं ब्रह्मणो लिंगरूपिणो लक्षणमिति प्रथमः कल्पः। आद्यं पुरुषमीशानमितीशानशब्देन योगरूढ्या शिवासाधारण्येन किलाद्यपुरुषत्वं शिवस्यैव "$ पुरुषो वै रुद्र" इति श्रुतेः श्रुतिस्मृत्योर्विरोधे श्रुतिरेव बलीयसीति पुरुषसंज्ञ इति स्मृत्यपेक्षया भारतादौ पुरुषमीशानमिति शिवस्याद्यपुरुषत्वप्रसिद्धिरित्यस्वरसात्पक्षान्तरमाह ॥

मू०— अथ वा कारवाच्यस्य विष्णोर्जन्मादियच्छिवात् ॥ १२३ ॥
सर्वप्रपंचहेतुत्वं लक्षणं ब्रह्मणो विदुः ॥

व्या— "अकारो वै सर्वा वाक्" इत्यकारस्य सर्ववाक्पतित्वश्रवणात्तथा च। अकारो विष्णुवाचक इत्येवं स्मरणाच्च। जन्मादि जन्मस्थितिलया अस्य अकारवाच्यस्य विष्णोर्यतः सकाशादित्यन्वयः। "× ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इति वाक्यं विषयः। ननु प्रसिद्धेन ह्यप्रसिद्धं बोधयेदिति न्यायेन विष्णुजनकत्वेन ब्रह्मशब्दितं लिंगं बोध्दुं न शक्यते। विष्णुर्नाम जीवो वाऽन्यो वा आद्ये जीवकोटिप्रविष्टस्य जनकोऽपि देवदत्तादिजन्यजनकभाववज्जीव एव स्यादथान्य इति वक्तव्ये

¶ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–६. † नृसिंहपूर्वतापिन्युपनिषदि खं.–५.
$ महानारायणोपनिषदि अनु.–२४ मं.–१.
§ ब्रह्मसूत्र २ अ.–१ पा.–१. ‡ अथर्वशिखोपनिषदि मं.–३.
× अथर्वशिखोपनिषदि मं.–३.

जीवराशीनां परिपालको विष्णुरिति प्रसिद्ध्या जीवोपाधेर्लिंगादितनोः स्रष्टारं परमशिवं ज्ञातुं जगद्विलक्षणविष्णुपरिज्ञानानंतरं तज्जनकत्वेन ब्रह्मपरिज्ञाने गौरवात् । लाघवेनानुभूयमानजगत्कारणत्वेन ब्रह्म परिज्ञेयमिति जगज्जन्मस्थितिलयकारणत्वेन ब्रह्मसिद्धिरिति तृतीयं पक्षं साधु मन्वानस्तत्र विषयवाक्यमुपपादयति ॥

मू०— यतो वेत्यादि वाक्यानां विषयत्वमुदाहृतं ॥ १२४ ॥
वाक्यस्वारस्य योगेन निश्चितं ब्रह्मधारणं ॥
यस्मात्सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रपूर्वकं ॥ १२५ ॥
सहभूतेंद्रियैः सर्वैः प्रथमं संप्रसूयते ॥
✓ एष देवो महादेवो विज्ञेयः स महेश्वरः ॥ १२६ ॥
✓ न तस्य परमं किंचित्पदं समधिगम्यते ॥
अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् ॥ १२७ ॥
अंत्यकाले पुनश्चैवमस्मिन्प्रलयमेष्याति ॥
कारणानां च यो ध्याता धाता परमकारणं ॥ १२८ ॥
न संप्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ॥
स सर्वैश्वर्यसंपूर्णो नाम्ना सर्वेश्वरः स्वयम् ॥ १२९ ॥
सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः ॥
अयमेव शिवः (जगत्) कर्ता पुरुषः कारणं परं ॥ १३० ॥
विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ॥
सृज्यते ग्रसते चैव तमोभूतमिदं जगत् ॥ १३१ ॥
अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः ॥
यदा तमस्तदा देव अध्यास्ते परमेश्वरः ॥ १३२ ॥
ब्रह्मविष्ण्वादिकान् सर्वान् सृष्ट्वादौ परमेश्वरः ॥
चकार दीक्षां तेषां च वीरशैवक्रमाच्छिवः (वीरशैवागमाच्छिवः) ॥१३३॥
लिंगांगसामरस्येन कृतकृत्याश्च ते बभुः ॥
तदाप्रभृति विष्ण्वाद्याः शिवस्य परमात्मनः ॥ १३४ ॥
आज्ञया शक्तिमंतश्च लोकेषु ख्यातिमाप्नुयुः ॥
यस्याज्ञया जगत्स्रष्टा विरिंचिः पालको हरिः ॥ १३५ ॥
संहर्ता कालरुद्राख्यः शिवः सांवः सनातनः ॥
✓ घृतरीतिघनीभूतः सच्चिदानंदलक्षणः ॥ १३६ ॥

अणोरणीयान्सर्वात्मा महीयान्महतः प्रभुः ॥
कर्ता पाता च संहर्ता ब्रह्मविष्णुहरः प्रभुः ॥ १३७ ॥
अविनाभूतचिच्छक्तिर्विस्फुलिंगाग्निवत्स्मृतः ॥
नात्यंतभेदभावो हि न चाभेदो न चोभयं ॥ १३८ ॥
भेदाभेदौ किंतु जीवब्रह्मणोर्मिश्रितौ पुरा ॥
श्रुतिस्मृतिपुराणानि कामिकाद्यास्तथागमाः ॥ १३९ ॥
उपासनाभिगम्यं हि भेदाभेदस्वरूपकं ॥
शिवमेव सदा सांबं हृदि कृत्वा ब्रुवंति हि ॥ १४० ॥
एतज्जगत्कारणत्वे हेतुः शास्त्रं प्रधानतः ॥

व्या०— "* यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति तैत्तिरीये श्रूयते । जन्म आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभंगं समासार्थः अस्येति प्रत्यक्षादिप्रमाणसन्निधापितं जगत्परामृशति । यत इति कारणनिर्देशः अस्य जगतो नामरूपाभ्यां व्याकृतस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्यान्यैर्मनसाप्यचिंत्यरचनारूपस्य जन्मस्थितिभंगं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः । जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं युक्तं न वेति संदेहः । न युक्तं प्रधानादावतिव्याप्तेरिति पूर्वः पक्षः । सिद्धान्तस्तु, प्रधानादेस्तस्य जगत्कारणतयाऽस्य मानविधुरत्वाद्युक्तमेवेदं लक्षणं । ज्ञाते लक्ष्ये लक्षणवैयर्थ्यात् अज्ञाते लक्ष्ये लक्षणाकांक्षाया एवानुपपत्तेः कथमत्र ब्रह्मणो लक्षणकथनप्रसंग इति न शंकनीयं । आध्ययनादापातज्ञाते ब्रह्मणि तद्योगाज्जन्मादि अस्य यत इति सूत्रपदच्छेदः । जन्मादिकं जन्मस्थितिप्रलयतिरोभावानुग्रहरूपं कृत्यं यस्य चेतनाचेतनसंमेलनसमरसीभूतस्य प्रपंचविलासस्य यतो यस्मात्तद्ब्रह्मेति शेषः । "× यतो वा इमानि भूतानि" "$ प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबंधहेतुः" "† सत्यं ज्ञानमनंतं ब्रह्म" "§ ऋतं सत्यं परं ब्रह्म पुरुषं" इत्यादिवाक्यं विषयः । अत्र जगतो जन्मादिकं ब्रह्मणि लक्षणतया संभवति न वेति संदेहः । न संभवति संबंधाभावात् । किंच "‡ आनंदो ब्रह्मेति व्यजानात्" इत्यत्रानंदस्य जगत्कारणत्वलक्षणं पर्यवस्यति । अन्यत्र "¶ सदेव सौम्येदमग्र आसीत्" इति, सतो जगत्कारणत्वमवगम्यते । "£ सत्यं ज्ञानमनंतं ब्रह्म" इति, ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते । अपरत्र च "# यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल" इति, शिवशब्दवाच्यं वस्तु कारणत्वेन सकलपूर्वभावि ब्रह्मेति विज्ञायते । अत्रानंदादीनां ब्रह्मत्वे विकल्पो वा, समुच्चयो वा, विकल्पे श्रुतहान्यादिदोषप्रसंगः । आद्य-

* तैत्तिरीयोपनिषदि वल्ली–३ अनु.–१ मं.–१. × तैत्तिरीयोपनिषदि वल्ली–३ अनु.–१ मं.–१.
$ श्वेताश्वतरोपनिषदि अ.–६ मं.–१६. † तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१.
§ महानारायणोपनिषदि अनु.–१२ मं.–१. ‡ तैत्तिरीयोपनिषदि वल्ली–३ अनु.–६ मं.–१.
¶ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१. £ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१.
# श्वेताश्वतरोपनिषदि अ.–४ मं.–१८.

वस्था च व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसंगः। समुच्चयपक्षे तेषां धर्मरूपत्वान्निखिलजगन्निर्माणोपायज्ञानविशेषविशिष्टब्रह्मत्वासंभवः। अपि च ॥ " ×× मायां तु प्रकृतिं विन्द्यात् " इति श्रुतिः मायाया अचेतनाया जगत्कारणत्वमभिधत्ते। तदेव युक्तं ब्रह्मणो ज्ञानरूपस्य जगत्कारणत्वे तस्य विकारापत्त्या " ** निष्कलं निष्क्रियं शांतम् " इत्यादिश्रुतिभंगप्रसंगादतः सर्वथापि ब्रह्मणो जगत्कारणत्वादिलक्षणमभिधातुमशक्यमित्येवमादौ पूर्वपक्षविक्षेपे प्राप्ते ब्रूमः। यद्यपि जन्मादेर्जगन्निष्ठत्वे ब्रह्मण्यसंबंधः तथापि तादवस्थ्येन लक्षणत्वं युज्यते। यत्सर्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते। आनंदादीनामत्रैव धर्माणां पर्यवसानं भवति। सर्वज्ञत्वं, नित्यतृप्तत्वं, अनादिबोधत्वं, स्वतंत्रत्वं, अलुप्तशक्तित्वं, अनंतशक्तित्वं चेत्येतानि सर्वज्ञतादीनि नित्यापरोक्षानपेक्षितबाह्यकरणनिष्कलंकानुभवविषयनिखिलवस्तुत्वं। इह सर्वज्ञत्वं, " ॐ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप " इत्यादिभिरिदं ब्रह्मणः सिद्धं। अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणोपायसामग्रीविशेषज्ञं ब्रह्म निमित्तं भवति। निरस्तसमस्तोपप्लवकलंकनिरतिशयानंदपरिपूर्णत्वमिह नित्यतृप्तत्वं। अत एव " * आनंदो ब्रह्म " इति श्रूयते यः खलु " § अन्योऽतर आत्मानंदमय " इति प्रस्तुत्य " † सैषाऽऽनंदस्य मीमांसा भवति " इत्यभ्यासान्निरतिशयशिरस्कत्वेन, " ‡ स एको ब्रह्मण आनंद " इति निरूपितः परब्रह्मधर्मत्वेन। " स एवानंदो ब्रह्म " इति प्रचुरत्वाद्ब्रह्मत्वेनोपचर्यते। तादृशानंदभोगरसिकं ब्रह्म नित्यतृप्तमित्युच्यते। ब्रह्मणो मनसैव महानंदानुभावः। स बाह्यकरणद्वारा तथा हि श्रुतिः " $ आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनंदं शान्तिसमृद्धममृतं " इति आकाशत इत्याकाशः प्रकाशश्चिदंबरमुच्यते। निखिलजगदंडषंडबुद्बुदनिकुरुंबजलधिस्थानीया परप्रकृतिरूपा परमशक्तिर्हि चिदंबरमुच्यते। न भूताकाशो विशेषाभावात्। तत्स्वरूपं ब्रह्माकाशशरीरं परप्रकृतित्वं चिदाकाशस्य "¶ सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" "†† आकाशो वै नामरूपयोर्निर्वहिता" इति श्रुतिसिद्धं। सत्यात्मसत्तारूपं प्राणारामं, प्राणः सकलाधारभूता चिदंबरशक्तिरुच्यते। स्वरूपभूतायां तस्यामेव आरामो यस्य तत्प्राणारामं मन आनंदं मनस्यानंदो यस्य न बाह्यकरणे तन्मन आनंदं अत्राप्यानंद इति चिदंबरप्रकृतिरुच्यते। तथा च श्रूयते " × को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनंदो न स्यात् " इति " @ शांतिसमृद्धं " इति शिवतापन्नममृतमनादिमुक्तं। अत्र सच्चिदानंदरूपंप्रकाशरूपं ब्रह्म स्वरूपानंदं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धं। मन आनंदमित्यनेन इदमेव ज्ञापकं ब्रह्मभावमुपपन्नानां मुक्तात्मनां निरतिशयस्वरूपानंदानुभवसाधनं बाह्यकरणनिरपेक्षमन्तःकरणमस्तीत्यतो बाह्यकरणनिरपेक्षेण श्रद्धाबोधशक्तिरूपेण मनसा स्वरूपानंदमनंतमनुभवत् ब्रह्म नित्यतृप्तं न तस्य कदापि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः। स्वतःसिद्धनिरतिशयज्ञानवत्त्वमनादिबोधत्वं यत्स्वरूपानंदानुभव-

** श्वेताश्वतरोपनिषदि अ.—६ मं.—१९.
ॐ मुंडकोपनिषदि मुं.—१ खं.—१ मं—९.
* तैत्तिरीयोपनिषदि वल्ली—३ अनु.—६ मं.—१.
§ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—५ मं.—२.
† तैत्तिरीयोपनिषदि वल्ली—२ अनु.—८ मं.—१.
‡ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—८ मं.—४
$ तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.—२.
¶ छांदोग्योपनिषदि प्र.—१ खं.—९ मं.—१.
× तैत्तिरीयोपनिषदि वल्ली—२ अनु.—७ मं.—१.
@ तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.—१.
×× श्वेताश्वतरोपनिषदि अ.—४ मं.—२.
†† छांदोग्योपनिषदि प्र.—८ खं.—१४ मं.—१

साधनमंतःकरणं ज्ञानं, तदनादिसिद्धमेवातोऽनादिबोधं ब्रह्म संसारनिवर्तकस्यानादिसिद्धत्वान्नित्यनिवृत्तसंसारदोषं "§§ शांतिसमृद्धममृतं" इति श्रूयते। अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वातंत्र्यं। "‡‡ ज्ञाज्ञौ द्वावजावीशानीशौ" "†† भोक्ता भोज्यं प्रेरितारं च मत्वा" "$$ विद्याविद्ये ईशते यस्तु सोऽन्य" इत्यादिषु ब्रह्मणो जडाजडप्रपंचप्रेरकत्वेन स्वतंत्रत्वं सिद्धं। सर्वविषयस्वातंत्र्येण ब्रह्मणः सर्वकर्तृत्वसिद्धिः। स्वाभाविकशक्तिमत्वमलुप्तशक्तिमत्वं तथाहि श्रवणं "** परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि चिदचित्प्रपंचरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः कदाचिदपि न निर्विशेषत्वमित्यनेन सिद्धं। अपरिच्छिन्नशक्तिविशिष्टत्वमनंतशक्तित्वमनंताभिरेव शक्तिभिर्जगतो जनकं शासकं च ब्रह्म भवति। तथाहि श्रूयते "§ एक एव रुद्रो न द्वितीयाय तस्थुः य इमांल्लोकानीशत ईशनीयुर्जननीयुः यः सर्वान् लोकान् ईशत ईशिनीभिर्जननीभिः परमशक्तिभिः" इत्याद्यनंतशक्तिमत्वाद्ब्रह्मणोऽपरिच्छिन्नप्रपंचसमवायिकारणत्वं सिध्यति। अष्टाभिधानाधिकरणमिति भव, शर्व, ईशान, पशुपति, रुद्र, उग्र, भीम, महादेवाभिधानाष्टकस्याधिकरणं वाच्यं परं ब्रह्म। तस्य सकलशब्दवाच्यत्वेऽपि परभावबोधकत्वेन मुख्यतया भवादिशब्दाभिधेयत्वेन नान्यशब्दाभिधेयत्वाभावप्रसंगः। सर्वत्र सदा भवतीति भवशब्दवाच्यं ब्रह्म। भूधातोः सत्तार्थकत्वात्सर्वत्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते। तथाहि श्रुतिः "ॐ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं" "† सत्यं ज्ञानमनंतं ब्रह्म" "* सत्यात्मप्राणारामं मन आनंदं" "¶ सन्मह" इत्यादि सन् घटः सन् पट इति सर्ववस्तुष्वनुगतवृत्त्या सद्रूपस्य ब्रह्मणः सर्वोपादानत्वं सिध्यति। मृदु सरक्तं हि घटादिकं मृदुपादानत्वमिष्यते। ततः सद्रूपं ब्रह्म भवशब्दवाच्यं भवति। शर्वशब्देन श्रुहिंसायामिति धात्वर्थवशात्सकलसंहर्तृ ब्रह्म प्रतिपाद्यते। "‡ तस्मादुपसंहर्त्रे महाग्रासाय वै नमः यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन" इति सर्वसंहर्तृ ब्रह्म श्रूयते। निरुपाधिकपरमैश्वर्यविशिष्टत्वादीशानशब्दवाच्यं ब्रह्म "× य इमानि लोकानि ईशत ईशानीभिः" इति श्रवणादीश्वरस्येशितव्यापेक्षतया पशुपतिशब्दवाच्यं ब्रह्म तथाहि श्रूयते "$ येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदां" इत्यादिपाशसंबंधेन पशुत्वव्यवहारात् पशुग्रहणात्पशुपाशद्वयं च गृहीतं भवत्यनेन चिदचिन्नियामकं ब्रह्मेति विज्ञायते संसाररुग्द्रावकत्वाद्रुद्रशब्दवाच्यं ब्रह्म "‖ तरति शोकमात्मवित्" इति श्रवणात्परतेजोभिरनभिभवनीयत्वादुग्रशब्दवाच्यत्वं ब्रह्मणः। "§§ न तत्र सूर्यो भाति न चंद्रतारकं" इति श्रवणान्नियामकत्वेन निखिलचेतनभयहेतुतया भीमशब्दाभिधेयं ब्रह्म "†‡ भीषास्माद्वातः पवत" इत्यादिश्रुतेः। महत्वेन दीप्यमानतया महादेव इत्युच्यते शिवः। तथा अथर्वशिरसि "$$ अथ कस्मादुच्यते महादेवः यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मा-

---

§§ तैत्तिरीयोपनिषदि वल्ली–१ अनु.–६ मं.–२. ‡‡ श्वेताश्वतरोपनिषदि अ.–१ मं.–९.
†† श्वेताश्वतरोपनिषदि अ.–१ मं.–१२. $$ श्वेताश्वतरोपनिषदि अ.–५ मं.–१.
** श्वेताश्वतरोपनिषदि अ.–६ मं.–८. § अथर्वशिरसि ॐ छांदोग्योपनिपदि प्र.–६ खं.–२ मं.–१.
† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१. * तैत्तिरीयोपनिषदि वल्ली–१ अनु.–६ मं.–२.
¶ महानारायणोपनिषदि अनु.–२४. ‡ अथर्वशिरः × अथर्वशिरसि
$ तैत्तिरीयसंहितायां कां.–३ प्र.–१ अनु.–४. ‖ छांदोग्योपनिषदि प्र–७ ख.–१ मं.–३.
§§ श्वेताश्वतरोपनिषदि अ.–६ मं.–१४. †‡ तैत्तिरीयोपनिषदि व.–२ अनु.–८ मं–१. $$ अथर्वशिरसि

दुच्यते महादेव" इति। निरस्तसमस्तसंसारकलंकतया निखिलमंगलाधारतया शिवतत्त्वं यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति तत्र तादृशमहिम्नि जगदुभयकारणत्वसंभवात्। तदेतादृशमहत्वाद्ब्रह्मेत्युच्यते तदेव शिवशब्दवाच्यं आनंदादिधर्माश्रयतया सिद्धं। अत एवानंदादीनां विकल्पादिचिंता निरर्थिका "‡ मायां तु प्रकृतिं विद्यात्" इति मायायाः प्रकृतित्वमीश्वरात्मिकाया एव "मायिनं तु महेश्वरं" इति वाक्यशेषात्सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं। स्थूलचिदचिद्विशिष्टं तत्कार्यं भवति। अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः। वस्तुतस्तु चिच्छक्तिविशिष्टं ब्रह्म जगत्कारणमिति निपुणतरं समर्थितं। लक्षणप्रमाणादिना हि वस्तुसिद्धिरिति जगत्कारणं ब्रह्म किंप्रमाणमित्याकांक्षायामाह॥

मू०— शास्त्रं योनिर्यस्यतस्य शास्त्रयोनित्वमिष्यते॥ १४१॥

व्या०— ब्रह्मसद्भावे शास्त्रं प्रमाणं शास्त्रं चाप्तवाक्यत्वेन परमविश्वासविषयमिति शास्त्रस्य प्रामाण्यसाधनाय परमाप्तः साधनीयः एवं चान्योन्याश्रय इत्यस्वरसात्पक्षांतरमाह।

मू०— शास्त्राणामथ वा योनिरिति तत्त्वविदां स्थितिः॥
ब्रह्मणः "$ शास्त्रयोनित्वात्" तत्रोपनिषदां गणः॥ १४२॥
विषयत्वेन निर्णीतो विषयो ब्रह्मधारणं॥

व्या०— ब्रह्मणि जगत्कारणत्वे चानुमानं प्रमाणमुत शास्त्रमिति संदेहः। क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानादेव ब्रह्मणस्तस्य जगत्कारणतया च सिद्धत्वात्। शास्त्रमनुवादकमेव न प्रमाणमिति पूर्वः पक्षः क्षित्यादिकमकर्तृकं शतराजन्यत्वात्। क्षित्यादिकं नानाकर्तृकं विचित्रकार्यत्वात्। प्रासादादिवदित्याद्यनुमानसंभवेन सामन्यतो दृष्टस्यानुमानस्य स्वतः साधकत्वात् "§ यतो वा" इतिवाक्येन "† सत्यं ज्ञानं" इत्यादि शास्त्रमेव ब्रह्मणि तस्य जगत्कारणत्वे च प्रमाणमिति सिद्धान्तः। नैलकंठीयस्तु यतः शास्त्रं योनिः प्रमाणमत एव जगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः। अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यमुत प्रमाणान्तरेण गम्यमिति संदेहः। जगदिदं सावयवं कार्यमेव तच्च वैचित्र्यगर्भितत्वेन सोचितकर्तृकमिति कश्चित्कल्पनीयः सर्वज्ञत्वादिमानसौ शास्त्रैकगम्य इति नास्मिन् शास्त्रस्य प्रामाण्यं शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वादिति पूर्वः पक्षः। सिद्धान्तस्तु, जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यं "* नावेदविन्मनुते बृहन्तं" इत्यादिषु वेदान्तशास्त्रमंतरेण ब्रह्मणो बोधासंभवश्रवणात्। यदुक्तं सावयववत्त्वात्कार्यत्वसिद्धौ प्रपंचस्य कर्ता समुचितः कल्प्य एक इति तदसत्। विचित्ररचनस्य गोपुरप्रासादादेर्बहुकर्तृकत्वदर्शनात् तथा च नानुमानेन एककर्तृत्वसिद्धिः व्याप्तिबलेन तस्य कर्मपारवश्यादिप्रसंगश्च। हेतोः पक्षधर्मताबलादनुमानेन जगतो विलक्षणैककर्तृत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धिर्नास्ति। अतो वेदान्तशास्त्रैकगम्यं तत्प्रमाणकं ब्रह्मेति सिद्धं। अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वसिध्द्युपयोगिसर्वज्ञत्वं ब्रह्मणः शास्त्राणां वेदानां योनित्वात् कारणत्वात्सिध्यतीत्यपि प्रतिपाद्यत इति केचिदाहुः। सूत्रस्य सूचनात्मकस्य अर्थद्वयाभिधाने श्लेषकाव्यवद्वाक्यभेदादिदोषाभावात् पुनरधिकरणांतरप्रस्तावः "¶ अरेऽस्य

‡ श्वेताश्वतरोपनिषदि अ.—४ मं—१०. $ ब्र. सू. ३ अ.—१ पा.—१.
§ तैत्तिरीयोपनिषदि वल्ली—३ अनु.—१ मं.—१ † तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—१.
* तैत्तिरीयब्राह्मणे कां.—३ प्र.—१२ अनु.—९. ¶ बृहदारण्यकोपनिषदि अ.—४ ब्रा.—४ मं—१०.

महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद" इत्यादि श्रूयतेऽस्य विषयः ब्रह्मणो वेदकर्तृत्वं युज्यते न वेति संदेहः। न युक्तमिति पूर्वः पक्षः। "वाचा विरूपनित्यमेत्यादेर्वाचो नित्यत्वप्रतिपादिकायाः श्रुतेर्विरोधात् वेदानां ब्रह्मकार्यत्वे पौरुषेयत्वादप्रामाण्यप्रसंगाच्च। तस्माद्ब्रह्मणो वेदकर्तृता कथं" इति प्राप्ते ब्रूमः। युक्तमेव ब्रह्मणो वेदकर्तृत्वं "‡ अस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेद" इत्यादिश्रुतेर्निश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात् "× अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्। आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः" इति परमेश्वरस्य सकलविद्याकर्तृत्वप्रतिपादनाच्च सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनः कर्ता भवति सर्वज्ञः परमेश्वरः। अत एव वेदानामपौरुषेयत्वमीश्वरकार्यत्वं च। एषां रागद्वेषादयस्तेषां वचनं प्रमाणमप्रमाणमपि भवति। निरस्तसमस्तदोषकलंकस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुविलासस्य स्वतःप्रमाणस्य परमेश्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य शिवस्य ब्रह्मणो वचनं तु प्रमाणमेव भवति। "§ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां" "† स नो देवः शुभया स्मृत्या संयुनक्त्विति" हि परमेश्वरस्य सर्वविद्याप्रवर्तकत्वं शुभस्मृतिहेतुत्वं च श्रूयते। अतः सर्ववस्त्ववभासकानां वेदानां परमेश्वरकर्तृकतया परमेश्वरस्य सर्वज्ञता निश्चीयते अज्ञातस्य वक्तुमशक्यत्वात्। यद्यपि सर्वगतस्य परमेश्वरस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिध्यति। तथापि सर्ववस्त्ववभासकानां वेदानां प्रणेतृताविशेषं दर्शयति। यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति न रसादि तथा न परमेश्वरः किंतु स्वशक्तिसंयुक्तं सकलमपि प्रकाशयतीति। ननु परमेश्वरस्य सर्वज्ञत्वं नाम, वेदोक्तसकलपदार्थाभिज्ञत्वं। तर्हि महर्षीणामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धं किमत्र वैषम्यमिति चेन्न। तत्कर्तुरीश्वरस्याधिकं ज्ञानमस्ति व्याकरणादेरधिकार्थविदां हि पाणिनिप्रभृतीनां प्रणेतृत्वं दृश्यते। वेदश्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतः प्रकाशयति किंतु किमपि लक्षणया किमपि सामान्येन किमपि विशेषेण परमेश्वरः सर्वसाक्षी सर्वं प्रत्यक्षयतीति वेदेश्वरयोरेतावद्वैषम्यमिष्यते। ननु परमेश्वरस्यैव वेदकर्तृत्वमिति न नियमः "§‡ षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत ऋचो यजूंषि सामानि" इत्यादिश्रवणाद्धिरण्यगर्भादेरपि तत्कर्तृत्वावगमादिति चेन्न। हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावाच्छ्रूयते हि "$ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति यः सर्वदेवानामादिमस्य हिरण्यगर्भस्यापि कर्ता तस्मै सर्वान् वेदानुपदिशति। स एव सर्वाधिको वेदकर्ता परमदेशिकः तथाहि श्रुत्याभिव्यज्यते "¶ यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु" इति महर्षिर्वेदकर्ता यः सर्वज्ञत्वादिना विश्वस्माच्चिदचित्प्रपंचादधिको रुद्रः परब्रह्मभूतः सर्वेषां देवानामिन्द्रादीनां प्रथममादिमं हिरण्यगर्भं ब्रह्माणं स्वसंकल्पेन प्रकृतेरुपादानात्मनो जायमानं सृष्टिकाले सर्वज्ञानोपायसकलवेदोपदेशरूपयानुग्रहदृष्ट्या अपश्यत्। सः परमदेशिकः नः अस्मानपि सकलसंसारपाशमहानर्थनिवृत्तिहेतुभूतया परमामृ-

---

‡ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–१० × शिवपुराणे वायवीयसंहितायां पूर्वभागे अ.–१ श्लो.–२४

§ महानारायणोपनिषदि अनु.–२१. † महानारायणोपनिषदि अनु.–१२.

§‡ तैत्तिरीयब्राह्मणे कां.–२ प्र.–३ अनु.–२. $ श्वेताश्वतरोपनिषदि अ.–६ मं.–१८.

¶ महानारायणोपनिषदि अनु.–१२

तलक्ष्मीसमावेशपरानंदप्राप्तिकारिण्या अत एव परममंगलरूपया वेदान्तसारसामरस्यसिद्ध्या स्मृत्या बोधकलया स्वविषयया संयोजयत्विति तात्पर्यं । ततः सकलवेदकर्तृत्वमीश्वरस्य सिद्धं । वाचो नित्यत्वश्रुतिरीश्वरेण पूर्वसत्तानुवृत्या विहितत्वाद्वेदानामविरुद्धा ततो वेदानामीश्वरप्रणीतत्वं नित्यत्वं चाविरुद्धमेव । प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणः शिवस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणे न लक्षणं जगज्जन्मादिरूपमभिहितं । तस्मिन् किं प्रमाणमित्याकांक्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलकत्वं च निरूपितं । येन यदव्यभिचारेण सिध्यति तद्वि तस्य प्रमाणमुच्यते । वेदान्तवाक्यानां कथं वा ब्रह्मसाधकत्वमित्याकांक्षायां चतुर्थाधिकरणमवतार्यते ॥

मू०— एतेषां ब्रह्मवाक्यानामन्वयो ब्रह्मणि स्मृतः ॥ १४३ ॥
*समन्वयात्तद्ब्रह्मैव धार्यं पूज्यं मुमुक्षुभिः ॥
वैषम्यद्योतनार्थाय तुशब्दोऽयं प्रकाशितः ॥ १४४ ॥
तस्माद्विषयवाक्यानि बव्हर्थानि न संशयः ॥
तत्रैकार्थमुदाहृत्य स्वस्वबुध्यनुसारतः ॥ १४५ ॥
लोका मुह्यन्ति सततं विवदन्तः परस्परम् ॥
पुनः संसारचक्रेऽस्मिन् भ्रमन्ति परिमोहिताः ॥ १४६ ॥
कण्वादिकृतशापाश्च परतंत्रा जना भुवि ॥
साधुमार्गं परित्यज्य मार्गान्तरमुपासते ॥ १४७ ॥
ते सर्वे तप्तनरके पतन्ति सततं ध्रुवम् ॥
किमस्ति बहुनोक्तेन मानुषं जन्म दुर्लभम् ॥ १४८ ॥
तत्रापि दुर्लभं जन्म कुले शैवस्य कस्यचित् ॥
वीरशैवान्वये जन्म परमं दुर्लभं स्मृतम् ॥ १४९ ॥
तत्र जाता नराः सर्वे वीरशैवा नरोत्तमाः ॥
विष्ण्वादिदेवसंघानां रक्षकत्वात्सदाशिवः ॥ १५० ॥
वीरः शंभुः ( स तु ) समाख्यातस्तल्लिंगं शिव उच्यते ॥
वीरलिंगं समभ्यर्च्य तत्स्वरूपं प्रयांति ते ॥ १५१ ॥
ये वीरशैवा लोकानां नित्यं क्षेमाभिलाषिणः ॥
त्रिपुंड्रावलिभिर्दीप्ताः रुद्राक्षस्रगलंकृताः ॥ १५२ ॥
शिवलिंगार्चनपराः शिवभक्तप्रपूजकाः ॥
पंचाक्षररता नित्यं गुर्वाराधनतत्पराः ॥ १५३ ॥

* ब्रह्मसूत्र—४ अ.—१ पा.—१.

कीर्तनीयाश्च वंद्याश्च दर्शनीयाः प्रयत्नतः ॥
शिवलोकाच्च गलितास्ते शिवा नात्र संशयः ॥ १५४ ॥
लिंगांगसामरस्येन जीवन्मुक्ताः समाहिताः ॥
तस्मात्सर्वप्रयत्नेन लिंगं धार्यं मनीषिभिः ॥ १५५ ॥
moksa
शिवस्वरूपलाभाय पशुपाशनिवृत्तये ॥
तल्लिंगधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ॥ १५६ ॥
विषपानेन नित्यत्वं कुरुते स्वात्मनो हि सः ॥
यो लिंगधारणं मुक्त्वा पशुशास्त्ररतो भवेत् ॥ १५७ ॥
करस्थं पायसं त्यक्त्वा कूर्परं लेढि चात्मनः ॥
"§अथातो ब्रह्मजिज्ञासा" "†जन्माद्यस्य यतः" शिवात् ॥ १५८ ॥
तस्मात्तत् "‡शास्त्रयोनित्वात्" अभूयः "%तत्तु समन्वयात्" ॥
वेदान्तप्रत्ययन्यायमंशांशित्वमधात्स्वयम् ॥ १५९ ॥
"*अंशो नानेति" न्यायेन तदेव परिकीर्त्यते ॥
✓ शिवांशा ब्रह्मविष्ण्वाद्या अंशी देवः शिवः स्मृतः ॥ १६० ॥
सर्वोपास्यो महादेवः सर्वे चोपासकाः स्मृताः ॥
कथं तयोः प्रभेदो हि जीवात्मपरमात्मनोः ॥ १६१ ॥
सर्वज्ञत्वादयो धर्माः शिवस्य परमात्मनः ॥
किंचिज्ज्ञत्वादयो धर्मा जीवानामिति निश्चितम् ॥ १६२ ॥
अभेदः कथमत्यंतं भेदाभेदौ व्यवस्थितौ ॥
ब्रह्मणः शास्त्रयोनित्वं कथं तन्न भवेन्निजम् ॥ १६३ ॥
आम्नायस्य क्रियार्थत्वादक्रियत्वाच्छिवस्य तत् ॥
ब्रह्मक्रियायाः कर्त्रादिप्रकाशनमतो न च ॥ १६४ ॥
इति चेत्तत्र वक्ष्यामः समन्वयनिरूपणम् ॥
वेदांतैरवगम्यंते सर्वज्ञत्वादयो गुणाः ॥ १६५ ॥
वेदांतेषु च वाक्यानि समन्वयदृढानि हि ॥
एतेन शास्त्रयोनित्वं ब्रह्मणो दृढमिष्यते ॥ १६६ ॥

---

§ ब्र. सू.–१ अ.–१ पा.–१ † ब्र.सू.–२ अ.–१ पा.–१ ‡ ब्र.सू.–३ अ.–१ पा.–१
% ब्र. सू.–४ अ.–१ पा.–१ * ब्र. सू.–४२ अ.–२ पा.–३

व्या०— ननु कथं ब्रह्मणः शास्त्रयोनित्वं यावतः आम्नायस्य क्रियार्थत्वादानर्थक्यं अतदर्थानां तस्मादनित्यत्वमुच्यत इत्यक्रियार्थानामानर्थक्यमुक्तं । अतो वेदान्तानामानर्थक्यमक्रियार्थत्वात् नहि ब्रह्मक्रियायाः कर्त्रादिप्रकाशनेन वा कर्मविधिशेषत्वं । न तु सिद्धब्रह्मबोधकत्वं संभवति सिद्धस्य वस्तुनः प्रमाणांतरविषयत्वेन मानान्तरसत्वासत्वयोर्वेदान्तानां प्रामाण्यानुपपत्तेः । तथा च सिद्धवस्तुप्रतिपादने हेयोपादेयरहिते पुरुषार्थाभावाच्च एवं प्राप्त इदमुच्यते । " † तत्तु समन्वयात् " इति तु शब्दः पक्षव्यावृत्त्यर्थः तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्त्यादिकारणं वेदान्तशास्त्रादवगम्यते । कथं समन्वयात् सर्वेषु हि वेदान्तेषु तात्पर्येण वाक्यानि एतस्यार्थस्य प्रतिपादकत्वेन समन्वितानि " ¶ सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयं " " $ आत्मा वा इदमेक एवाग्र आसीत् " इत्येवमादीनि न चैतद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने अर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुतकल्पनाप्रसंगात् । नाप्यानर्थक्यमध्ययनविध्युपात्तत्वात् । नच कर्मापेक्षितकर्त्रादिप्रतिपादकत्वं प्रकरणान्तरत्वात् ब्रह्मणो कर्तृत्वाच्च । न च ब्रह्मणः सिद्धवस्तुत्वेन समानांतरसत्वासत्वयोर्वेदान्तानामप्रामाण्यं मानांतरयोग्यस्य हि मानान्तराभावेऽपि संवादादप्रामाण्यं । न हि ब्रह्ममानान्तरयोग्यं रूपादिरहितत्वेन ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादत एव श्रुतिः " § नावेदविन्मनुते तं बृहन्तं " " ‡ तं त्वौपनिषदं पुरुषं पृच्छामि " इति च औपनिषदैकगम्यत्वमाह न च हेयोपादेयरहितसिद्धवस्तुप्रतिपादने आनर्थक्यं मोक्षसाधनज्ञानविधिविषयत्वेनैव ब्रह्मप्रतिपादनेनानर्थक्याभावात् । तथाच सूत्रकारः स्वयमेव वक्ष्यति तथाचैकवाक्योपपंथादिति । न चानीच्छतोऽपि दुर्गंधादिज्ञानदर्शनात्कथं ज्ञानस्येच्छासाध्यतया विधेयत्वमिति वाच्यं । अनिच्छतोऽपि श्वासादिक्रियादर्शनेन क्रियाया अप्यविधेयत्वापत्तेः । यदि कासांचित्क्रियाणामनिच्छासाध्यत्वेऽपि कासांचित्क्रियाणामिच्छासाध्यत्वनिरोध्यत्वयोः संभवात् " प्राण्याच्चाप्राण्याच्च अप्राणन्ननपानन् " इत्यादिविधिनिषेधसंभव इति मन्यसे तर्हीहापि केषांचिज्ज्ञानानामिच्छासाध्यत्वेऽपि केषांचिज्ज्ञानानामिच्छया साध्यत्वनिरोधत्वयोः संभवात् । पत्न्यपेक्षत्वेन पत्न्यपेक्षते इत्यादिविधिनिषेधोपपत्तिरिति तुल्यं । न च तत्र ज्ञानानुकूलव्यापार एव विधीयते न ज्ञानमिति वाच्यं । जुहुयादित्यादावपि होमाद्यनुकूलव्यापार एव विधीयते न होमादिरित्यस्यापि सुवचत्वात् । यदि च होमादेरेव धातुवाच्यत्वात्परंपरया कृतिसाध्यत्वाच्च होमादेरविधेयत्वमिति मन्यसे । ज्ञानेऽपि तुल्यं तदिदं ज्ञानस्य विधेयत्वं सूत्रकारो वक्ष्यति । " × सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् " इति ननु ज्ञानस्यैव विधेयत्वे " ॐ चोदनालक्षणोऽर्थो धर्मः " इति धर्मलक्षणयोगात् धर्मत्वं स्यात्तथाच तत्साध्यमोक्षस्यानित्यत्वप्रसंगः " * तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते " " @ परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन " इति च कर्मफलस्यानित्यत्वप्रतिपादनात् ज्ञानस्याविधेयत्वे तु नायं दोषः । वस्तुतो संसारिण एव जीवस्य मिथ्यादेहाभिमानप्रमुक्तदुःखादेः शास्त्रप्रमाणजनिततत्त्वज्ञाननिवृत्त्या दुःखादि-

---

† ब्रह्मसूत्र–४ अ.–१ पा.–१. ¶ छांदोग्योपनिषदि प्र.–६ खं–२ मं.–१.
$ ऐतरेयोपनिषदि अ.–१ खं–१ मं–१. § तैत्तिरीयब्राह्मणे कां.–३ प्र.–१२ अनु–९.
‡ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–९ मं.–२१. × ब्रह्मसूत्र–१ अ–३ पा.–३. ॐ मीमांसादर्शने अ.–१ पा.–१ सू.–२. * छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–६. @ मुंडकोपनिषदि मुं.–१ खं.–२ मं.–१२.

निवृत्तावनित्यत्वशंकाया अभावात्। रज्जुतत्त्वज्ञानात्सर्वभ्रांतिकृतभयकंपादिनिवृत्तिवदिति चेन्न "अयमेव परो धर्मो यदैक्येनात्मदर्शनं॥ ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजं"॥ इत्यादिस्मृतेर्ज्ञानस्य धर्मत्वेऽपि तत्साध्यस्य मोक्षस्य नानित्यत्वं प्रमाणाभावात् न च तद्यथेहेति वाक्यं प्रमाणं तस्य ज्ञानरहितकेवलेष्टापूर्तादिकर्मफलविषयत्वात् अत "‡ एवमेवामुत्र पुण्यजितो लोकः क्षीयत" इत्युक्त्वा "‡ अथ य इहात्मानमनुविद्यव्रजन्त्येतांश्च सत्यान् कामान्" इति विहितविद्याया अक्षय्यफलतां दर्शयति नास्त्यकृतः कृतेनेति वाक्यं विद्यारहितकर्मविषयमेव "¶ प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति" इत्यादिना अवरस्य ज्ञानवर्जितस्य केवलकर्मणः क्षयिष्णुफलकीर्तनात् अवरं ज्ञानवर्जितं काम्यं कर्मेत्युपनिषद्भाष्ये तैरेवाभिधानात् नास्त्यकृतः कृतेनेत्युक्त्वाऽनंतरं "$ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" इत्यनुष्ठेयविहितविद्यांगतया गुरूपसदनविधानात् "† येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां" इत्यनुष्ठेयाया ब्रह्मविद्याया एवोपदेशदर्शनात् तस्मान्नास्ति विहितज्ञानसाध्यत्वेऽपि मोक्षस्यानित्यत्वप्रसंग इति। यत्तु रज्जुतत्त्वज्ञानात्सर्पभ्रान्तिनिवृत्त्या तत्कृतभयकंपादिनिवृत्तिवदात्मतत्त्वज्ञानान्मिथ्याभिमाननिवृत्त्या दुःखादिनिवृत्तिरिति तन्न। निश्चितात्मतत्त्वस्यापि यथा पूर्वं दुःखाद्यनुभवदर्शनात्। अन्यथा श्रवणमननाभ्यामात्मतत्त्वे निश्चितेऽपि "× श्रोतव्यो निदिध्यासितव्यः" "§ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण" इत्यादिना ध्यानविद्यानुपपत्तेः। भोगेन त्वितरे क्षपयित्वा संपद्यन्त इति यावन्मरणं विदुषोऽपि यथापूर्वं सुखदुःखानुभवस्य सूत्रकारेण प्रतिपादनेन ज्ञानानंतरं न यथापूर्वं संसार इत्युक्तेः साहसमात्रत्वात् यथोक्तमापस्तंबेन "बुद्धेश्चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत एतेन परं व्याख्यातमिति" तस्माद्वेदान्तेषु ज्ञानमेव विधीयते मोक्षाय विषयाकांक्षायामवान्तरवाक्येन ब्रह्मापि प्रतिपाद्यते स्वर्गादिवदिति सिद्धं। श्रीकंठीयास्तु "* तत्तु समन्वयात्" इत्यत्र तच्छब्देन प्रकृतं ब्रह्म परामृश्यते तुशब्देन सर्वाणि वेदान्तवाक्यानि समाऽऽह्रीयन्ते समन्वयशब्देन तात्पर्येण संबंध उच्यते तद्ब्रह्म वेदान्तवाक्यानि तात्पर्यलिंगसंबंधाद्बोधयन्तीति सूत्रार्थः। अस्य सर्वाणि वेदान्तवाक्यानि विषयः। वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तं नवेति संशयः। सर्वत्र संबंधग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वं शब्दार्थयोः संबंधज्ञानमन्तरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवति। संबंधज्ञानं तु वृद्धव्यवहारापेक्षं। व्यवहारश्च कार्यैकगोचरः। तथाहि गामानय गां बधानेति वृद्धवाक्यश्रवणसमनंतरं प्रवर्तमानं प्रयोज्यवृद्धमवगम्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति। सर्वथाऽयं कार्यावगतिसमनंतरमेव प्रवर्तते। सा च कार्यावगतिरेतस्मादेव वाक्यात्समुत्पन्ना। अन्यथा कथमेतस्यैतद्वाक्यश्रवणसमनंतरं प्रवृत्तिरिति पुनर्गवानयनबंधनदर्शनात्कार्यविशेषं निश्चिनोति। तदेवं कार्यार्थत्वाद्व्युत्पत्तेर्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यं। किंच कार्यविशेषत्वाज्जगतः कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धेः कथमसिद्धप्राप्तविषयाणां वेदान्तवाक्यानां प्रामाण्यं। अथवा विधिपराण्येव वेदान्तवाक्यानि न ब्रह्मपराणि। उभयपरत्वे वाक्यभेदः स्यादतो वेदान्त-

---

‡ छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–६ ¶ मुंडकोपनिषदि मुं.–१ खं.–२ मं.–७.
$ मुंडकोपनिषदि मुं.–१ खं.–२ मं–१२. † मुंडकोपनिषदि मुं.–१ खं.–२ मं.–१३.
× बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–५. § बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–२१.
* ब्र. सू.–४ अ.–१ पा.–१.

वाक्यानां न ब्रह्मबोधकत्वं युक्तमिति पूर्वः पक्षः। युक्तमिति सिद्धान्तः। वेदान्तवाक्यानां तात्पर्यलिंगसमन्वयेन ब्रह्मबोधनसमर्थत्वात्। यदुक्तं कार्यार्थ एव व्युत्पत्तेर्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यमिति तदसत्। पुत्रस्ते जात इत्यादिषु सिद्धार्थेष्वपि वाक्येषु संबंधग्रहदर्शनात्। वृद्धव्यवहारेऽपि व्युत्पित्सुः स्वप्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थज्ञानपूर्वकत्वावगमात् प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति। ततः सिद्धार्थेष्वपि शब्दस्याभिधाननिश्चयः अथ वा किमिह वृद्धव्यवहारेण व्युत्पत्तेः प्रकारान्तरेणापि सिद्धत्वात्तथाहि बाला मात्रादिभिः शशिपशुप्रभृतीनर्थानंगुल्यादिना निर्दिश्य तत्तच्छब्दान् तेषु तेषु अर्थेषु प्रयुंजानैर्बहुशः शिक्षितास्तेषु तेष्वर्थेषु व्युत्पाद्यन्ते। काव्यनाटकानभिज्ञाः पुरुषास्तदभिज्ञपुरुषसमीपमेत्य पदविच्छेदं कृत्वा अस्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छन्त्यतः सिद्धार्थेऽपि व्युत्पत्तिसंभवात्तत्र शब्दस्य प्रामाण्यमस्ति। ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यं। यदुक्तं जगतः कार्यविशेषत्वात्कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धिरिति तन्न संभवति। विचित्ररचनस्य रथगोपुरप्रासादादेरनेककर्तृकत्वदर्शनादनुमानेनास्य जगत एककर्तृकत्वसाधनायोगस्य व्याप्तिबलात्कर्मवश्यत्वादीनां कर्तरि प्राप्तेश्च पूर्वमुक्तत्वादतो नानुमानगम्यं ब्रह्म भवति। किंच श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम यत्र वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यं न प्रत्यक्षादीनामिव सर्वत्र वेदान्तवाक्यानां ब्रह्मणि तात्पर्यनिर्णयकानि कानि लिंगानि इति चेदुपक्रमादीनि तथा पठन्ति "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय" इति तदिहोपक्रमादिभिर्लिंगैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते। य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव वेदान्तवाक्यानां श्रवणमित्युच्यते। तथा ह्युच्यते "अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकं। सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकम्। श्रवणं नाम वाक्यानां वैदिकानां परात्परे। उमक्रमादिभिर्लिंगैः शिवे तात्पर्यनिर्णय इति। उपक्रमोपसंहारावेकं लिंगं वेदान्तवाक्यानां ब्रह्मणि शिवे तात्पर्यनिर्णये। तत्र तात्पर्यं नाम तत्स्वरूपोपासनाविषयत्वं उपक्रमोपसंहारौ "§ सदेव सोम्येदमग्र आसीत्" इत्युपक्रमः "$ तत्त्वमसि" इत्युपसंहारः "× धातुः प्रसादान्महिमानमीशं" इत्युपक्रमः "× यः परः स महेश्वर" इत्युपसंहारः एवमन्यत्रापि द्रष्टव्यं। "$ तत्त्वमसि" "* सर्वो वै रुद्रः" "† अंबिकापतय उमापतये" "% यो वै रुद्रः स भगवान् भूर्भुवः सुवः" इत्यभ्यासः अपूर्वता वेदेतरप्रमाणाप्राप्तत्वं। फलं ब्रह्मज्ञानं। अर्थवादो जगत्सृष्टिस्थितिध्वंसादयः। उपपत्तिर्विरोधाभावः। सर्वज्ञत्वादिसंपत्तिर्वा। एतैर्लिंगैर्ब्रह्मणि तात्पर्यमवगंतव्यं वेदान्तवाक्यानां। न केवलं ब्रह्मपरा वेदान्ताः। किंतु "@ आत्मा वाऽरे द्रष्टव्य" इत्यादिषु तज्ज्ञानविधिपरा अपि विज्ञायन्ते। उभयपरत्वे वाक्यभेदप्रसंग इति यदुक्तं तन्न। रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्यापि सिद्धिः तथा विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिरिति नोभयपरत्वे विरोधः। शाब्दं हि ब्रह्मज्ञानं तद्ब्रह्मवाचिशब्दादेव प्राप्तं भवति। तद्विधिना किं प्रयोजनमिति चेत्प्राप्तावपि मंत्रादिष्विव विधेरविरोधः। यथा द्रव्यदेवतादिप्रकाशकेषु मंत्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले मंत्रैरनुसर्तव्यमिति प्रयोगविधिर्ज्ञानानंतरमनुष्ठापयति। तथात्रापि न चोत्पत्तिविनियोगाधिका-

§ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१. $ छांदोग्योपनिषदि प्र.–६ खं.–८ मं.–७.
× महानारायणोपनिषदि अनु.–१२. * महानारायणोपनिषदि अनु.–२४. † महानारायणोपनिषदि अनु.–२१
% अथर्वशिर उपनिषदि @ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–५ मं.–६.

रविधानामभावात् प्रयोगविध्यसंभव इति शंकनीयं । उत्पत्तिविधेरध्याहारेण सिद्धौ प्रकरणवशाच्छमादिकं विनियोजयन्नात्मानं पश्येदिति विनियोगविधिरुपपद्यते । ततश्च रात्रिसत्रन्यायेन "§ ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्याद्यर्थवादावगतमोक्षकामोऽधिकारी कल्पनीयो भवति । अतो मोक्षकामः शमादियुक्तो ब्रह्मज्ञानं संपादयेदिति प्रयोगविधिलाभः । ननु ब्रह्मज्ञानस्य विधेयत्वमनुपपन्नं । "‡ आत्मा वाऽरे द्रष्टव्य" इत्यादौ नित्ये ब्रह्मणि निर्विकारे विशुद्धे चात्मनि हि न कर्मकारकभावो युज्यते । येन विधिसंभवः । उत्पत्तिप्राप्तिविकारसंस्काराणामत्रासंभवात् । न च स्वतंत्रफलाय सक्तुन्यायेन कर्मकारकतां परित्यज्य करणत्वविपरिणामेनात्मना पश्येदिति विधातुं शक्यं । वैषम्यात्तथाहि क्रियाकृतातिशयस्य भस्मीभावलक्षणस्य सक्तुषु संभवात् । तेषु शब्दतः करणत्वेऽपि अर्थतः कर्मत्वमस्ति न तस्यात्मनि संभवः । अतो वेदान्तानां न ब्रह्मज्ञानविधिपरत्वमिति चेन्न । आत्मनि कर्मत्वप्रयुक्तोत्पत्त्याद्यभावेऽपि कर्तृस्थमोक्षफलाय विध्युपपत्तेः प्राप्ते कथं विधिरिति चेत्प्राप्तिः पाक्षिकी नित्या वा उभयथापि नियमादिविधिः संभवति । ननु तथा सति वेदान्तानां विधिपरत्वेन ब्रह्मपरत्वमनुपपन्नं यदुक्तं रूपप्रत्यायिकेन चक्षुषा द्रव्यसिद्धिवत् विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिरिति तदयुक्तं । चक्षुर्हि संप्रयोगे सति निरपेक्षमेव प्रतिवस्तु प्रमाणं न तथा शब्दः । किंतु यत्र तात्पर्यं तत्र प्रमाणं । तस्माद्वेदान्तानां ब्रह्मप्रमापकत्वं ब्रह्मज्ञानविधायकत्वं च न संभवति इति चेन्न । "× समिधो यजति" इत्यादीनां वाक्यानां पंचप्रयाजविधायकत्वं तदनुष्ठानक्रमविधायकत्वं चेत्युभयपरत्वदर्शनाद्वेदान्तवाक्यानामपि ब्रह्मप्रमापकत्वं ब्रह्मज्ञानं मोक्षोपकारकं प्रति विधायकत्वं च युक्तमेव । ननु ब्रह्मणि वाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजनं तत्प्रयोजनस्य पूर्वज्ञानादेव संभवादिति चेन्न । वाक्येन परोक्षत्वेन ज्ञातेऽपि ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः कथं भेद इति चेत् यच्छब्दजन्यं ज्ञानं न तत्साक्षात्कारहेतुः किंतूपासनारूपज्ञानमेव । तथा च श्रूयते "* ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" "§ ज्ञाननिर्मथनादेव पाशं दहति पंडित" इत्यादिषु "† ज्ञात्वा देवं मुच्यते सर्वपाशैः" । "¶ ईशं तं ज्ञात्वाऽमृता भवंति" इत्यादिषु च तथाहि सति "श्रोतव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतव" । इत्यत्र श्रवणमननसंपन्नज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्तमिति स्मर्यते । अत उपासनारूपज्ञानं मोक्षफलं विधीयते "£ आत्मन्येवात्मानं पश्यति" "‖ शंभुराकाशमध्ये ध्येयः" इत्यादिषु "$$ तज्जलानिति शांत उपासीतेति" "§§ प्राचीनयोग्योपास्व" इत्यादिषु च तथा "‡‡ ब्रह्मविदाप्नोति परं" इत्यादिषु ब्रह्मस्वरूपोपासनातत्फलादिकमुपदिश्यते । अन्यथा सत्यत्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं तादृशब्रह्मसाक्षात्करणं च सिध्यति । "** सत्यं ज्ञानमनंतं ब्रह्म" "¶¶ आनंदं ब्रह्म"

---

§ श्वेताश्वतरोपनिषदि अ.—१ मं.—८. ‡ बृहदारण्यकोपनिषदि अ.—६ ब्रा.—५ मं.—६.
× तैत्तिरीयसंहितायां वल्ली—२ अनु.—६ मं.—१ * कैवल्योपनिषदि मं.—७. § कैवल्योपनिषदि मं.—११
† श्वेताश्वतरोपनिषदि अ.—१ मं.—८. ¶ श्वेताश्वतरोपनिषदि अ.—३ मं.—७
£ बृहदारण्यकोपनिषदि अ.—६ ब्रा.—४ मं.—२३. ‖ अथर्वशिखोपनिषदि $$ छांदोग्योपनिषदि प्र.—३ खं.—१४ मं.१
§§ तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.—२ ‡‡ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—
** तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—१. ¶¶ बृहदारण्यकोपनिषदि अ.—६ ब्रा.—२ मं.—२८.

"† आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनंदं शांतिसमृद्धममृतं" "§ ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलं। ऊर्ध्वरेतं विरूपाक्षं" इति सत्यज्ञानानंदस्वरूपं स्वात्माराममुपशांतसकलोपद्रव-कलंकं सकलमंगलात्मकं परमशक्त्याऽविनाभूतया शबलरूपत्वेन कृष्णपिंगलं विरूपाक्षं त्रिलोचनं ब्रह्म उपक्रमादितात्पर्यलिंगैर्निरूप्यते। "‡ यो वेद निहितं गुहायां" इति "$ प्राचीनयोग्योपास्व" इति ज्ञानाविनाभूतं तदुपासनं च विधीयते। "£ सर्वान् कामान्" इत्यादिना सकलकामावाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते। अतो निष्कामनिजधर्मोपेतो निषिद्धकाम्यकर्मरहितो यथा श्रुतिस्मृतिचोदि-तशिवपूजाकर्माद्यनुष्ठानसंपन्नचित्तशुद्धिः शमाद्यनुगृहीतपरमशिवभक्तिभावित एव मुमुक्षुः श्रुतिसा-रेभ्यः शिवाभिधेयं परं ब्रह्म विदित्वा तदुपासीतेति ज्ञानोपासनाविधिरुपपन्नः। अत्र शिवोपपदग्र-हणं विरूपाक्षस्य ब्रह्मणः परमविशुद्धिमंगलभाजनत्वान्मुमुक्षूणामुपासनैकविषयत्वद्योतनार्थं। तथाऽथ-र्वशिखायां "शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य" इति श्रूयते। शिवशब्दवाच्यस्य वस्तुन एव ध्येयत्वमित्यन्यथा कथं संसारनिवृत्तिः। निरस्तसमस्तदोषकलंकं निरतिशयमंगलाधारत्वं हि शिवत्वं। यद्विज्ञानान्मोक्षरूपं फलमुच्यते। "* यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति". इति "× शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य" इति शिवव्यतिरिक्तस्य मुमुक्षूणां ज्ञेयत्वं ध्येयत्वं च परिसंख्यायते। अतः शिव एव परं ब्रह्म मोक्ष-कामैर्ध्यातव्यो ज्ञातव्य इति। अतस्तात्पर्यलिंगसमन्वयेन ब्रह्मपरा वेदान्तास्तदुपासनविधिपराश्चेत्यवि-रोधः। उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशंक्याह॥

मू०— ¶ ईक्षतेर्नाशब्दमिति ह्येतदारभ्य केवलं॥
प्रथमाध्यायपर्यंतं समन्वय इहोच्यते॥ १६७॥
सदेवेत्यादिवाक्यानि श्रूयन्ते तत्र तत्र तु॥
सच्छब्देन च किं ब्रह्म प्रधानं वेति संशयः॥ १६८॥
किंतावत्प्राप्तमधुना प्रधानमिति कश्चन॥
अचेतनस्य जगत उपादानमचेतनम्॥ १६९॥
तद्दृष्टा (मृद्दृष्टा) न्तानुसाराच्च चेतनं न विलक्षणं॥
सच्छब्देन (तच्छब्देन) परं ब्रह्म गृह्यते ह्यात्मशब्दवत्॥ १७०॥
ईक्षतेर्ब्रह्मधर्मत्वान्न प्रधानस्य युज्यते॥
अशब्दं हि प्रधानं तन्न हि तद्वाचकः श्रुतः॥ १७१॥
उक्तो मृदादिदृष्टान्तो विषयो (विषमो) नैव युक्तिमान्॥

† तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.८-२. § महानारायणोपनिषदि अनु.—२३
‡ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—१. $ तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.—२.
£ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—१. * श्वेताश्वतरोपनिषदि अ.—६ मं.—२०.
× अथर्वशिखोपनिषदि ¶ ब्रह्मसूत्र—५ अ.—१ पा.—१.

"* तत्तेज ऐक्षतेत्यादौ तेज इत्यौपचारिकम् ॥ १७२ ॥
एवं गौणं प्रधानेऽपि चेक्षणं हि तदोच्यते ॥

व्या०— इत्यारभ्याध्यायपरिसमाप्तेः समन्वयः प्रपंचते । "¶ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं" "† तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादि श्रूयते । तत्र संशयः । किं सच्छब्देन प्रधानं गृह्यते एतद्ब्रह्मेति किं तावत्प्राप्तं । प्रधानमिति । कुतः अचेतनस्य जगतः चेतनमेवोपादानं युक्तं । न चेतनं ब्रह्मविलक्षणत्वान्मृदादिदृष्टान्तानुसाराच्च । एवं प्राप्ते ब्रूमः । सच्छब्देन ब्रह्मैव गृह्यते। कुतः ईक्षतेस्तदैक्षतेतीक्षितृत्वश्रवणात् । न ह्यचेतनस्य प्रधानस्येक्षणं संभवति । अशब्दं हि तत्र हि प्रधानस्य वाचकः कश्चिच्छब्दः श्रूयते । वेदान्तेष्वयं तु विलक्षणत्वादिति तदुपरिष्टात्सूत्रकृत्स्वयमेव परिहरिष्यते । न विलक्षणत्वादित्यारभ्य मृदादिदृष्टान्तः प्रकृतिविकाराव्यतिरेकेन त्वचेतनत्वांशेऽप्यन्यथा तद्वदेव रूपादिमत्वप्रसंगात् । ननु "† तत्तेज ऐक्षत" "† ता आप ऐक्षन्त" इत्यादौ अचेतनेऽपि तेज आदावौपचारिकमीक्षणं श्रूयते । एवमचेतनेऽपि प्रधाने गौणमीक्षणं स्यात्तत्राह ।

मू०— § गौणश्चेन्नात्मशब्दादित्येतत्सूत्राद्दृढीकृतं ॥ १७३ ॥
अप्तेजसोरीक्षणं हि गौणं युक्तं नचेतरत् ॥
इह सच्छब्दवाच्यस्य चेक्षितुर्मुख्यमीक्षणम् ॥ १७४ ॥
आत्मशब्दपरामर्शात्स आत्मेत्यादिवाक्यतः ॥
अप्तेजसोरपि तथा मुख्यमेवेक्षणं भवेत् ॥ १७५ ॥
तदीक्षणाभिधानं हि चेश्वरस्याभिमानिनः ॥
यथा राज्ञो ह्यात्मशब्दो भृत्ये सर्वार्थकारिणि ॥ १७६ ॥
तथा प्रधाने सच्छब्दो युज्यते वीक्षणं च तत् ॥

व्या०— युक्तमप्तेजसोरचेतनत्वाद्गौणमीक्षणमिह तु सच्छब्दवाच्यस्येक्षितुः स आत्मेत्यात्मशब्देन चेतनवाचिना परामर्शान्मुख्यमेवेक्षणं न गौणं । अप्तेजसोरपि वस्तुतः न गौणमीक्षणं । तदभिमानिनः परमेश्वरस्यैव तत्रापि वीक्षणाभिधानात् । न भवत्यचेतने प्रधानशब्दः आत्मनः सर्वार्थकारित्वात् । यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दः "ममात्मा भद्रसेन" इत्यत आह ।

मू०— $ तन्निष्ठस्य च मोक्षोऽत्र ह्युपदेशाद्विधीयते ॥ १७७ ॥
तन्निष्ठा ब्रह्मनिष्ठा हि ते वै मोक्षाधिकारिणः ॥
तस्मात्प्रधानमिति च यदुक्तं तन्मृषा भवेत् ॥ १७८ ॥
जगतः कारणं ब्रह्म चोपास्यं हि मुमुक्षुभिः ॥

---

* छांदोग्योपनिषदि प्र.–६ खं.२ मं.–३. ¶ छांदोग्योपनिषदि प्र.–६ खं.–२. मं–१.
† छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–३. § ब्र. सू.–६ अ.–१ पा.–१.
१ छांदोग्योपनिषदि प्र.–८ खं.–१२ मं.–४. $ ब्र. सू.–७ अ.–१ पा.–१

‡ नायमात्मेति वाक्येन शिवस्य वरणं तनोः ॥ १७९ ॥
वरणं नाम तद्रूपधारणं विधिमार्गतः ॥
लिंगांगेत्यादिवाक्येन मोक्षमार्गैकतत्पराः ॥ १८० ॥
ॐ अमृतस्येति वाक्येन धारणं प्रतिपादितं ॥
तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः ॥ १८१ ॥
त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृताः ॥
लिंगांगसामरस्येन ब्रह्मभावमुपाश्रिताः ॥ १८२ ॥
सारूप्यरूपिणीं मुक्तिं संप्राप्य परदुर्लभाम् ॥
कृतकृत्या भवन्त्येव शिवानन्दभुजोऽनिशम् ॥ १८३ ॥
अथोमित्यादिवाक्येन निश्चितं लिंगधारणम् ॥
तन्मोक्षसाधनं पुण्यं तद्धार्यं हृदयांबुजे ॥ १८४ ॥
अतस्सच्छब्दवाच्यं हि ब्रह्मैव तु न संशयः ॥
तच्चिच्छक्त्यविनाभूतं जलशैत्यमिवोदितम् ॥ १८५ ॥
मायाप्रधानमित्येतद्युक्तियुक्तं न चाभवत् ॥
† अजामंत्रेण चिच्छक्तियुक्तस्य परमात्मनः ॥ १८६ ॥
लीलया जगदुत्पत्तिस्तिरोधानं पुनः प्रभोः ॥
कठ (था) कैवल्यमांडूक्यप्रश्नाद्युपनिषत्सु च ॥ १८७ ॥
वेदान्तसारप्रणववज्रसूच्यादिकासु च ॥
प्रकाशितार्थाः सर्वे च विस्मृताः कैश्चिदप्यहो ॥ १८८ ॥
अतदर्था निश्चिताश्च मोहादन्यायतत्परैः ॥
अनेन किं वहूक्तेन सूत्रार्थो ह्ययमेव हि ॥ १८९ ॥
अत्रायमवधेयोऽर्थः सूत्रस्वरसतस्ततः ॥
ब्रह्म जिज्ञासितं लिंगं शिवतत्त्वं श्रुतीरितं ॥ १९० ॥
समनंतरसूत्राणां त्रयाणां सौत्रशब्दतः ॥
तात्पर्यं वीरशैवोक्तपदार्थेष्वेव दृश्यते ॥ १९१ ॥
तथा हि जन्मलोकानां स्थेमसंहारकर्मणि ॥
यतो हि ब्रह्मणस्तस्य ब्रह्मत्वमिति लक्षणम् ॥ १९२ ॥

‡ कठोपनिषदि अ.–१ वल्ली–२ मं.–२३ ॐ तैत्तिरीयोपनिषदि वल्ली–१ अनु.–४ मं.–१
† श्वेताश्वतरोपनिषदि अ.–४ मं.–५.

‡ यतो वेत्यादिविषयवाक्येन तदलंकृतं ॥
तत्र तावदियान्भेदः सूत्रीयपदभंजने ॥ १९३ ॥
जन्माद्यस्य यतश्चेति पदद्वयमिदं ततः ॥
पिंडादिज्ञानशून्यान्तस्थलस्यैकशतस्य तु ॥ १९४ ॥
यतः सकाशादित्येतद्ब्रह्मलक्षणमुच्यते ॥
सृष्टिवाक्यविरोधोऽपि पूर्वमेव निराकृतः ॥ १९५ ॥
यतश्च स्थलशब्देन प्रोच्यते स्थितिसंहृती ॥
स्थीयन्ते सर्वतत्त्वानि लीयन्ते यत्र तत्स्थलम् ॥ १९६ ॥
स्थितिसंहारसापेक्षं जन्म चेति त्रयं स्थलम् ॥
‡ यतो वेत्यादिविषयवाक्यार्थानुगुणेन हि ॥ १९७ ॥
विस्तार्य स्थलशब्देन कामिकादौ विचार्यते ॥
अथ वाऽकारवाच्यस्य विष्णोर्जन्म यतः शिवात् ॥ १९८ ॥
अथर्वशिखया चोपनिषदा यः समर्थितः ॥
शास्त्रशासनकर्तृत्वाद्योनित्वात्तु ततः परम् ॥ १९९ ॥
अकारवाच्यो विष्णुस्तद्योनित्वं कारणात्मकम् ॥
लिंगं नियामकं तत्त्वं सूत्रतात्पर्यतः श्रुतम् ॥ २०० ॥
शास्त्रं योनिर्यस्य तस्य शास्त्रयोनित्वमेव वा ॥
शास्त्राणां योनिरित्येवमस्माकं तत्समंजसम् ॥
सर्वार्थसाधनोपायाः सन्ति सर्वागमेषु च ॥ २०१ ॥
तथाऽपि विवशा मर्त्या यच्च किंचिद्वदन्ति हि ॥
एषा रीतिः सर्वसूत्रसंमता च व्यवस्थिता ॥ २०२ ॥
अन्याश्च रीतयः सर्वा न सूत्रानुगुणाः कृताः ॥
ब्रह्मण्यध्यास इति यज्जगतामिष्यते परैः ॥ २०३ ॥
असूत्रितं तु तत्सर्वमज्ञानपरिकल्पितं ॥
मूढा मुह्यन्ति सततं यं विना मार्गमुत्तमम् ॥ २०४ ॥
ननु तद्ब्रूच्यते § ब्रह्म वेदेत्यादिविधानतः ॥
एकं ब्रह्म च ब्रह्मैव (एकं ब्रह्मविद्ब्रह्मैव) स्वाविद्येत्यादिवाक्यतः ॥ २०५ ॥

‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ § मुंडकोपनिषदि मुं.–३ खं.–२ मं.–९.



अभेद एव कथितो भेदाभेदः कथं भवेत् ॥
इति चेन्न "† ब्रह्म वेद ब्रह्मैव भवतीति" यत् ॥ २०६ ॥
उपासनांगं तदिति निर्णीतं श्रुतिसूत्रयोः ॥
तन्निष्ठस्यैव मोक्षोऽत्र ह्युपदेशाध्रुवं परम् ॥ २०७ ॥
ब्रह्मैव सच्छब्दवाच्यं तस्मादन्यन्न चाभवत् ॥

व्याख्या०— प्रधानं चेतनमात्रशब्दालंवनं भवितुमर्हति तस्मात्तन्निष्ठस्य मोक्षोपदेशात् । प्रकृतसदात्मादिशब्दालंवननिष्ठस्य मोक्ष उपदिश्यते । "* तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति तथातपरशुग्रहणदृष्टान्तेन सत्याभिसंधस्य मोक्ष उपदिश्यते । अथ मुच्यत इति स्मृतिलंभे ग्रन्थीनां विप्रमोक्ष इत्यादिना न च प्रधाननिष्ठस्य मोक्षः सांख्यैरभ्युपगम्यते प्रकृतिविविक्ततया पुरुषस्यैव मोक्षाभ्युपगमात् । तस्मादात्मशब्दो मुख्यात्मालंवन एव । न गौणः प्रधानालंवनः । अतश्च न प्रधानं तच्छब्दवाच्यमिति सिद्धान्तः । "‡ नायमात्मा प्रवचनेन लभ्यो न मेधया न वहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम्" अस्मिन्मन्त्रे वरणशब्देन शिवलिंगधारणमुच्यते । नतु सामान्यतो लांछनधारणं । उपक्रमे प्रवचनेन न लभ्य इति वेदाध्ययनेनेतरसाधनरहितेन प्राप्यो न भवतीत्युक्त्वा तदर्थाववोधरूपया मेधया न लभ्य इति वेदार्थाववोधमात्रेण न लाभ इत्युपवर्ण्य वहुश्रवणेनावर्तनेनापि न भवेदित्यभिधाय पूर्वोक्तवैलक्षण्येन एषः मुमुक्षुः वृणुते धत्त इतीष्टलिंगादिरूपेण धारणं प्रतिपादितं भवति । तस्य स्वां तनूं वृणुत इति सायुज्यं सारूप्यं वा प्रकृष्टफलं विधीयते । अन्यथा मेधाशब्दितब्रह्मस्वरूपावगाहनापेक्षया श्रवणावृत्त्यपेक्षया च नेतिप्रकारान्तरेण तनूवरणशब्दयोर्व्याख्यातुमनुपपत्तेः । हे मोक्षैकमार्गतत्पराः श्रुणुतेति संबुद्धिः । वेदान्तसारोपनिषदि श्रूयते "लिंगांगसामरस्येन लिंगं धृत्वा" इत्यादीष्टलिंगधारणं । अपि च प्रसिद्धोपनिषदि "§ अमृतस्य देवधारणो भूयासं" इति धारणशब्देनेष्टलिंगधारणमित्युक्तं स्पष्टीकृतं च मूल एव लिंगधारणोपदेशे । तथा च तन्निष्ठा ब्रह्मनिष्ठा कामिकाद्यागमोक्तप्रकारेणापि स्वेष्टलिंगे पंचाचाराष्टावरणरूपेण निष्ठा ते चातिवर्णाश्रमिण इति मन्तव्यं । अत एवानितरसाधारण्येन शिवानंदभुजो भवन्तीत्यर्थः । अथ ॐ इत्यारभ्य वेदान्तसारोपनिषदि लिंगधारणमेव मोक्षसाधनत्वेनोक्तं तदिदं प्रकरणानुरोधेन "¶ सदेव सौम्येदमग्र आसीत्" इति छांदोग्येऽपि ब्रह्मैव चेतनं जगत्कारणं इत्यचेतनस्य प्रधानादेर्जगत्कारणता निवारिता । न चैवं शक्तेर्मायाया अचेतनाया जगत्कारणत्वमपि निषिद्धं स्यादिति वाच्यं । असदुक्तरीत्याऽविनाभूतसंवंधायाश्चिच्छक्तेश्चेतनत्वस्यैव प्रदर्शितत्वादीक्षणादिकं शुद्धे ब्रह्मणि संभवति मायैव प्रधानशब्दवाच्यमिति वदन्तो निरस्ताः । अत एव श्रूयते "£ अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजा जनयन्तीं सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति अतः प्रपंचसृष्ट्यादिकालीनमीक्षादिकं यत्र यत्रोपनिषदि कठकैवल्यमांडूक्यप्रश्नादिषु वेदान्तसारप्रश्न-

† मुंडकोपनिषदि मुं.–३ खं.–२ मं–९. * छांदोग्योपनिषदि प्र.–६ खं.–१४ मं.–१.
‡ कठोपनिषदि वल्ली–२ मं.–२३. § तैत्तिरीयोपनिषदि शिक्षावल्ल्यां अनु.–३ मं.–१.
¶ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१. £ नारायणोपनिषदि अनु.–१२.

तिषु च श्रुतमभिन्नशक्त्यभिप्रायेणेति स्पष्टमपि विस्मृतमेव प्रकारान्तरेण गीतमिति महानाश्चर्यविशेषः। किमनेन दुर्वचसामाशयनिराकरणेनेति सूत्रस्वारस्यमेव प्रदर्शयामः। "‡ अथातो ब्रह्मजिज्ञासा" इति ब्रह्मशब्देन लिंगं जिज्ञासितं भवति। तथैव "× जन्माद्यस्य यतः" जन्म आद्यं कर्म एषां स्थित्यादिविलासानामिति तत्सर्वं यतः शिवलिंगादिति "$ यतो वा इमानि भूतानि जायन्त" इत्यादि श्रुतिसिद्धं। वीरशैवागमसंप्रदायज्ञैः स्थलं स्थितिलयाधारमिति षट्स्थलज्ञानान्मुक्तिरिति प्रपंचसमुन्मेषस्थितिलयाधारं लिंगं जन्माद्यधिकरणसिद्धमिति विशेषभेदाभावार्थैक्यादैकशास्त्र्यं व्यासीयशास्त्रवीरशैवशास्त्राणामिति। इदं स्थितिलयाधारत्वं विष्ण्वादिपराभिमतशास्त्रैक्यमपि स्यादित्यस्वरसादस्याधिकरणस्य वीरशैवाभिमतार्थपरत्वमेव दर्शयितुं शक्यं। अस्याकारवाच्यविष्णोर्जन्मादि यतः शिवतत्त्वादिति समासोक्तिच्छायया‌ऽर्थान्तरस्फूर्तौ शिवस्यैव जगत्कारणत्वं सिध्यतीति नोक्तदोषः। "§सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इति सर्वशब्देन जगत्कारणत्वमनंतरब्रह्मविष्ण्वादिजनकत्वमिति तदनुसारेण जन्मादिकरणेऽप्यर्थद्वयमिति वाक्यभेदः प्रदर्शितः। अत एव पूर्वसंगत्यनुरोधेन शास्त्र शासनकर्तृ। नचेदं शासनकर्तृत्वं विष्ण्वादौ दृश्यते। विष्ण्वादेरपि जनक ईश्वरः। तदाह अयोनित्वादिति अस्य विष्णोर्योनिर्जनकः परमेश्वर इत्यर्थः। तादृशं शिवतत्त्वमपि लिंगशब्दवाच्यं तदेव नियामकं। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति पूर्वोक्तरीत्या प्रसिद्धपरिदृश्यमानप्रपंचकारणत्वेन वस्तुसिध्यप्रमाणचिंतायां शास्त्रं योनिर्यस्येत्येवोचिततरः। ननु शास्त्रनिर्मातृत्वेन तत्त्वांतरमंगीकार्यमित्याकांक्षायाः पराभिमतं देवतान्तरं तत्र प्रतीयतेति तदसारं मन्वानः शास्त्राणां योनिरित्यस्यार्थस्यात्यन्तप्रकृतसांगत्यमिति स एवार्थोऽभ्यर्हितः। एते चार्थाः सर्वेष्वागमेष्वभिधीयन्ते। अन्ये चार्थाः सूत्रस्वारस्यानानुगुणा इति ब्रह्मणि प्रपंचाध्यास इति न युक्तं। चिच्छक्तेरविनाभूतसंबंधायाः प्रतिपादनात्प्रपंचस्यापि प्रामाणिकत्वमिति व्यक्तेरेव किलानित्यत्वमिति निष्कर्षः। तथाच "£ ब्रह्मवेद ब्रह्मैव भवतीति" श्रौत एवाभेदः स उपासनांग इति भेदाभेदोऽयं सिद्धान्तीकृतः तादृशचिच्छक्त्यविनाभूतलिंगाभेदभावनया मोक्ष इति "* सदेव सोम्येदमग्र आसीत्" इत्यत्रेक्षणसंकल्पादिसंगतिः सर्वैरवलोकनीया।

मू०— ¶ हेयत्वावचनाच्चैव ¶¶ स्वाप्ययादपि नेतरत् ॥ २०८ ॥
†† अप्ययोगतिसामान्यं ब्रह्मण्येवेति निश्चितम् ॥
§§ श्रुतत्वाच्च प्रधानादेर्न हेयत्वं कदाचन ॥ २०९ ॥

व्या०— यदि सच्छब्दवाच्यं प्रधानमेव "स्थूलारुन्धतीन्यायेन" "$$ स आत्मा तत्त्वमसि" इतीहोपदिष्टं स्यात्तदास तन्निष्ठो माभूदिति मुख्यमात्मानमुपदिदिक्षुस्तस्य हेयत्वं ब्रूयात्। न चैवमवोचत् सन्मात्रावगतनिष्ठेव हि षष्ठप्रपाठके समाम्निर्दिश्यते चशब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः

‡ ब्र. सू.–१ अ.–१ पा.–१. × ब्र. सू.–२ अ.–१ पा.–१.
$ तैत्तिरीयोपनि. भृगुवल्ल्यां अनु.–१. § अथर्वशिखोपनिषदि मं.–२. £ मुंडकोपनिषदि मुं.–३ खं.–२ मं.–९
* छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१. ¶ ब्रह्मसूत्र–८ अ.–१ पा.–१.
¶¶ ब्रह्मसूत्र–१० अ.–१ पा.–१. †† ब्रह्मसूत्र–११ अ.–१ पा.–१. §§ ब्रह्मसूत्र–१२ अ.–१ पा.–१
$$ छांदोग्योपनिषदि प्र.–६ खं.–१६ मं.–३.

"‡‡ उत तमादेशमप्राक्ष्यो येनाश्रुतं" इत्यादिना एकविज्ञानेन सर्वविज्ञानं । न च तत्प्रधाने सच्छब्द-वाच्ये परिगृह्यमाणे उपपद्यते । प्रधानविज्ञानेन तद्विकारवर्गस्य विज्ञातत्वेऽपि भोक्तृवर्गस्याविज्ञातत्वात् । तस्यातद्विकारार्थत्वात्तस्मादपि न प्रधानं सच्छब्दवाच्यं । अतश्च न प्रधानं सच्छब्दवाच्यं । एवं श्रूयते "ॐ यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति सुषुप्तावस्थायां प्रकृतं सच्छब्दवाच्यं स्वशब्देन परामृश्य तस्मिन्जविस्याप्ययः प्रतिपाद्यते । न च चेतन आत्मा अचेतनं प्रधानं स्वरूपत्वेन प्रतिपाद्यते । ब्रह्मजीवयोस्त्वभेदस्याभ्युपगमाद्ब्रह्मण आत्मत्वेन स्वशब्देन परामर्शो युक्तं यदि पुनः प्रधानमात्मीयत्वात्स्वशब्देनोच्यते तत्राह "†† गतिसामान्यात्" श्रुत्यंतरं "‡प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेदनांतरं" इति सुषुप्तावस्थायां चेतनस्याप्ययं दर्शयति । तद्गतिसामान्यादिहापि सच्छब्दवाच्ये ब्रह्मण्येवाप्यय इति निश्चीयते । अतश्च ब्रह्मैव सच्छब्दवाच्यं । "¶¶ एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इति ब्रह्मण्येव सुषुप्त्यवस्थायां गमनं श्रूयते । "** एतदमृतमभयमेतद्ब्रह्म" इति ब्रह्मैव सच्छब्दवाच्यं न प्रधानमिति सिद्धं ।

मू०— *आनंदमयशब्दः किमभ्यासात्तैत्तिरीयके ॥
आत्मानमथ जीवं वा गृण्हातीत्यत्र संशयः ॥ २१० ॥
प्रियाद्यवयवादीनां योगाज्जीवान्न संशयः (जीवो न चेश्वरः) ॥
इति चेद्भृगुवल्ल्यां च परमात्मैव निश्चितः ॥ २११ ॥
आनंदमयो ब्रह्मैव ह्यभ्यासात्पक्षि (पक्ष) रूपकम् ॥
प्रियाद्यंगत्वयोगो हि वास्तवो न विवक्षितः ॥ २१२ ॥
आनंदवल्ल्यां तद्योगो बुद्धिदार्ढ्याय कल्पितः ॥
विकारार्थे मयट्स्वार्थे प्राचुर्यार्थेऽथ वा पुनः ॥ २१३ ॥
नायं मयड्विकारार्थे पूर्वोत्तरविरोधतः ॥
तूष्णीं प्राणादिशब्देन ह्युपक्रम इहोदितः ॥ २१४ ॥
उपसंहारवाक्येषु मयडन्तः प्रकीर्तितः ॥
तस्मात्स्वार्थे मयट्प्रायो भृगुवल्ल्यां च निश्चितः ॥ २१५ ॥
§ विकारशब्दान्नेति चेन्न प्राचुर्याद्ब्रह्म केवलम् ॥
अन्नप्राणादिशब्दैश्च प्राचुर्याद्वा न चेतरः ॥ २१६ ॥
तस्मान्मात्सर्यमुत्सार्य विचार्य लिंगधारणम् ॥

---

‡‡ छांदोग्योपनिषदि प्र.–६ खं.–१ मं.–३. ॐ छांदोग्योपनिषदि प्र.–६ खं.–८ मं.–१.
†† ब्रह्मसूत्र–१० अ.–१ पा.–१. ‡ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–२१
¶¶ छांदोग्योपनिषदि प्र.–८ खं.–३ मं.–२. ** छांदोग्योपनिषदि प्र.–८ खं.–१० मं.–१.
* ब्रह्मसूत्र–१३ अ.–१ पा.–१. § ब्रह्मसूत्र–१४ अ.–१ पा.–१.

इतश्च न विकारार्थे स्वार्थ एवेति निश्चितम् ॥ २१७ ॥
सत्यज्ञानादिमंत्रैश्च सूत्रब्राह्मणवाक्यतः ॥
मंत्रब्राह्मणयोरैक्यादन्यस्यानुपदेशतः ॥ २१८ ॥
ब्रह्मैवानंदशब्दस्य वाच्यं नान्यदिति ध्रुवम् ॥
मान्त्रवर्णिकमेवात्र गीयते तैत्तिरीयके ॥ २१९ ॥
§ तद्धेतुव्यपदेशाच्च ‡ मांत्रवर्णिकगानतः ॥
तदेवानंदयातीति तद्धेतोस्तत्कथं भवेत् ॥ २२० ॥
इतश्च परमेवात्र ब्रह्मानंदमयः श्रुतः ॥
"†† अन्योन्तरात्मानंदमय" इति वाक्येन केवलं ॥ २२१ ॥
अन्यस्य चांतरस्यात्र नोपदेशात्परं श्रुतं ॥
प्राप्यस्यान्यस्याश्रवणाच्छ्रुतहानिश्श्रुतौ भवेत् ॥
£ नेतरोऽनुपपत्तेश्च श्लोकत्वप्रतिपादनात् ॥ २२२ ॥
परं ब्रह्मानंदमयो जीवो नेति व्यवस्थितः ॥
× तद्भेदव्यपदेशाच्च ब्रह्मानंदमयः परम् ॥ २२३ ॥
"§§ तस्माद्वा" इति वाक्येन विज्ञानाद्भिन्न ईश्वरः ॥
अन्योऽतरादिवाक्येन ह्यानंदमय इष्यते ॥ २२४ ॥
§ कामाच्च नानुमानं च प्रधानं भवतीति यत् ॥
तदपेक्षा नास्ति वाक्ये कामानाश्रवणाज्जडे ॥ २२५ ॥
¶ अस्मिन्नस्य च तद्योगं शास्त्यानंदमयः परः ॥
न संसारी प्रधानं वा कुतोऽस्मिन्योगशासनात् ॥ २२६ ॥
यदा ह्येवैष एतस्मिन्निति वाक्येन निश्चितम् ॥
अभयं परमो मोक्षस्तज्ज्ञाने सावधानता ॥ २२७ ॥
परं ब्रह्मानंदमयः प्राप्यं धार्यं हृदंबुजे ॥

व्या०— तैत्तिरीयके । "अन्नमयं प्राणमयं मनोमयं विज्ञानमयं च" अनुक्रम्य "† तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽतरात्मानंदमय" इति श्रूयते । तत्र संशयः किमिहानंदमयशब्देन प्रकृतं

---

§ ब्र. सू.–१५ अ.–१ पा.–१. ‡ ब्र. सू.–१६ अ.–१ पा.–१. †† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–२.
£ ब्र. सू.–१७ अ.–१ पा.–१. × ब्र. सू.–१८ अ.–१ पा.–१. §§ तैत्तिरीयोपनिषदि व.–२ अनु.–५ मं.–२.
§ ब्र. सू.–१९ अ.–१ पा.–१. ¶ ब्र. सू.–२० अ.–१ पा.–१.
† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–२.

ब्रह्मोच्यते उतार्थान्तरमिति । कुतः प्रियाद्यवयवयोगात् । "§ तस्य प्रियमेव शिर" इति न हि ब्रह्मणः प्रियाद्यवयवयोगोऽस्ति । विकारार्थे मयट् श्रवणाच्च नहि परमात्मन आनंदविकारत्वमस्तीति प्राप्ते ब्रूमः । आनंदमयो ब्रह्मैव कुतः अभ्यासात् आनंदमयं प्रस्तुत्य । "‡ तदप्येषः श्लोको भवतीति" तस्मिन्नानंदमय एव वक्ष्यमाणश्लोको भवतीत्युक्त्वाऽनंतरपठिते श्लोके "†† असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति" ब्रह्मणोऽभ्यासात् न च पृथग्ब्रह्मण एवाभ्यासः नानंदमयस्येति शंकनीयं । अन्नमयादिषु तदप्येषः श्लोको भवतीत्यस्य पुच्छविषयत्वादर्शनात् अकस्मादिह तद्विषयत्वकल्पनायोगात् आनंदमयादन्यस्यांतरस्यानुपदेशेन तस्यैव ब्रह्मत्वावश्यंभावाच्च । "† एतमानंदमयमात्मानमुपसंक्रम्य" इत्यस्यानंतरमानंदमयादन्यस्योपसंक्रमितव्यस्यानुपदेशाच्च । तस्यैव ब्रह्मत्वावगतेः । यदुक्तं ब्रह्मणः प्रियाद्यवयवयोगासंभव इति तन्न । न ह्यत्रावयवावयवीभावो वास्तवो विवक्षितः । किंतु पक्षिरूपकल्पनामात्रं न हि विज्ञानमयादीनां पक्षपुच्छाद्यवयवयोगोऽस्ति यदुक्तं । विकारार्थमयट्प्रत्ययश्रवणान्नानंदमयः परमात्मेति तत्राह । "‡‡ विकारशब्दान्नेति चेन्न प्राचुर्यात्" नायं मयट्प्रत्ययो विकारार्थः । किंतु स्वार्थ एव स्वार्थिकमयट्प्राचुर्यात् । यद्यप्यन्नरसमय इत्यत्र विकारार्थतापि संभवति तथापि प्राणमयादिषु न विकारार्थत्वं प्राणादीनां तद्विकारत्वासंभवात् । अन्यस्य च विकारभूतस्य तत्राप्रतिपादनात् । अत एव "‖ अन्योऽन्तर आत्मा प्राणमय" इत्यादिना प्राणमयमात्मानमुपदिश्य "× तदप्येषः श्लोको भवतीति" तत्रैव श्लोकं प्रतिज्ञाय । "$ प्राणं देवा अनुप्राणन्तीति" केवलप्राणादिशब्दा एव पठ्यन्ते न मयडन्ता । अत एव भृगुवल्ल्यां "¶ अन्नं ब्रह्मेति व्यजानादिति" केवलान्नादिशब्दैनैवोपक्रम्य "ꙮ एतमन्नमयमात्मानमुपसंक्रम्य" इत्युपसंहारे मयडन्ताः प्रयुज्यन्ते । तस्मात्स्वार्थ एव मयट् न विकारार्थे । "§§ तद्धेतुव्यपदेशाच्च" "* एष ह्येवानंदयातीति" आनंदयतीत्यर्थः । इत्यन्यानंदहेतुत्वेन व्यपदेशान्नानंदविकारत्वं इतोऽप्यानंदमयो ब्रह्मैवेत्याह । "$$ मांत्रवर्णिकमेव च गीयते" यन्मंत्रेण "£ सत्यं ज्ञानमनंतं ब्रह्म" इत्यनेनोक्तं ब्रह्म तदेवानंदमय इति निर्णीयते । मंत्रब्राह्मणयोरेकार्थत्वात् अन्यस्य चान्तरस्यानुपदेशादपरा चतुःसूत्री योजना । "¶¶ आनंदमयोऽभ्यासात्" तैत्तिरीयके श्रूयते "% तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मानंदमय" इति । तत्र संशयः किमानंदमयः परमात्मा उतार्थान्तरमिति । तत्रान्नमयाद्यर्थान्तरप्रायपाठात् अर्थान्तरत्वे प्राप्ते । आनंदमयः परमात्मैव कुतः अभ्यासात् "@ यदेष आकाश आनंदो न स्यात्" "** आनंदो ब्रह्मेति व्यजानात्" "आनंदं ब्रह्म" इत्येवमादावानंदशब्दस्य ब्रह्मण्येवासकृदभ्यासात् यत्त्वन्नमयाद्यर्थान्तरप्रायपाठादानंदमयोऽप्यर्थान्तरमिति।

§ तैत्तिरीयोपनिषदि वल्ली–१ अनु.–५ मं.–२ ‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–३
†† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–१ † तैत्तिरीयोपनिषदि वल्ली–३ अनु–१० मं.–५
‡‡ ब्र. सू.–१४ अ.–१ पा.–१ ‖ तैत्तिरीयोपनिषदि वल्ली–२ अनु. २–मं.–२
× तैत्तिरीयोपनिषदि वल्ली–२ अनु.–२ मं–३ $ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–३ मं.–१
¶ तैत्तिरीयोपनिषदि वल्ली–३ अनु.–२ ꙮ तैत्तिरीयोपनिषदि वल्ली–३ अनु.–१० मं.–५
§§ ब्र. सू.–१५ अ.–१ पा.–१ * तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१
$$ ब्र. सू.–१६ अ.–१ पा.–१ £ तैत्तिरीयोपनिषदि वल्ली–१ अनु.–१ मं.–१
¶¶ ब्र. सू.–१३ अ.–१ पा.–१ % तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–२
@ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१ ** तैत्तिरीयोपनिषदि वल्ली–३ अनु.–६

तत्र यथाहि स्थूलासु तारास्वरुंधतीत्वेन प्रदर्शितासु पश्चाद्या अन्त्या ताराऽरुन्धतीत्वेनोपदिश्यते सा अमुख्यारुन्धतीप्रायपठिताऽपि मुख्यैवारुन्धती भवति । एवमिहाप्यन्नमयाद्यमुख्यात्मोपदेशानंतरमुपदिश्यमान आनंदमयः परमात्मा मुख्य एव भवितुमर्हति । ततोऽन्यस्यान्तरस्यात्मनोऽनुपदेशात् "††विकारशब्दान्नेति चेन्न प्राचुर्यात्" यदुक्तं "‡‡आनंदमयोऽभ्यासात्" आनंदमयो ब्रह्मेति । तन्न कस्माद्विकारशब्दात्प्रकृतिवचनात् आनंदशब्दादन्योऽयं विकार आनंदमयशब्दः । मयटो विकारार्थत्वात्तत्कुत आनंदशब्दाभ्यासादानंदमयस्य ब्रह्मत्वमिति चेन्न । कुतः प्राचुर्यात् नायं विकारवचनो मयट् किंतु प्राचुर्यवचने तत्प्रकृतवचने मयट् तदिति प्रथमासमर्थात्प्राचुर्यविशिष्टस्वार्थे मयट् स्मरणात्तथा चानंदमय इति प्रकृताद्विज्ञानमयाज्जीवात् प्रचुरानंद इत्यर्थः । ननु विकारार्थान्नमयादिप्रवाहे किमित्यानंदमये शब्दे स्वार्थत्वमभ्युपगम्यत इति चेन्न यद्यप्यन्नरसमय इत्यत्र विकारार्थताऽपि संभवति । तथापि प्राणमयादिषु स्वार्थ एव मयट् । विकारार्थे हि प्राणादय एव तद्विकारा भवन्ति । तेषामनादिकाया वक्ष्यमाणत्वान्नापि तदवच्छिन्न आत्मा तद्विकारः प्राणाद्यतिरिक्तस्यात्मनोऽद्याप्यज्ञानात् । ज्ञाने वा तस्मादन्योऽन्तर आत्मा तस्मादन्योऽन्तर आत्मेति प्रतिपादनवैय्यर्थ्यापत्तेस्तस्याप्यनादित्वात् । न च तदवच्छिन्नतामात्रेण तद्विकारत्वं मुख्यं । न घटावच्छिन्नं नभः घटमयमिति व्यवह्रीयते । अतः स्वार्थ एव मयट् अत एव ॥ "% तदप्येषः श्लोको भवति" इत्युक्त्वा पठितेष्वनंतरश्लोकेषु "* प्राणं देवा अनुप्राणन्ति" इति केवला एव प्राणादिशब्दाः पठ्यन्ते । अपि च "§ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति भाषायामेव विकारावयवयोरविशेषेण सर्वप्रातिपदिकेभ्यो मयड्विधानात् "×द्व्यचः छंदसि" इति छंदसि द्व्यच एव विकारार्थे मयड्विधानात् आनंदविज्ञानादिशब्देभ्यः छंदसि मयटोऽसंभव एव । "§§तद्धेतुव्यपदेशाच्च" आनंदमयं प्रस्तुत्य "† एष ह्येवानंदयाति" इति तस्यानंदहेतुत्वं श्रूयते । आनंदयतीत्यर्थः । न चानंदविकारस्यानंदहेतुत्वमुपपद्यते । तस्मादपि स्वार्थ एव मयट् । न च पुच्छब्रह्मण एवायमानंदहेतुत्वव्यपदेशः नानंदमयस्येति वाच्यं । अन्नमयादिष्वनंतरश्लोकस्य पुच्छब्रह्मविषयत्वादर्शनात् "‡ तस्यैष एव शरीर आत्मा यः पूर्वस्य" इत्यानंदमयस्यैव परामर्शात् आनंदमयात्पुच्छब्रह्मणो भेदाभावात् न चाभेदे अवयवावयवीभावानुपपत्तिः । न ह्यत्र मुख्य एवावयवावयवीभावोऽभिप्रेतः । न ह्यात्मनः पक्षपुच्छादिर्मुख्योऽस्ति नापि प्राणादीनां आकाशरुगादयो मुख्या एवावयवाः किंतु पक्षिरूपकल्पनामात्रमुपासनादयश्चाभेदेऽपि कथंचिदुपपद्यते । अथवा "$ ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मशब्देन "¶ ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्रैव प्रणव एवाभिप्रेतः । तस्य च प्रतिष्ठात्वं "£ एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैकतरमन्वेति" "@ एतदालंबनं श्रेष्ठमेतदालंबनं परं" इत्यादिनाऽऽनंदमयत्वश्रवणात् । "$$मांत्रवर्णिकमेव च गीयते"

---

†† ब्र. सू.–१४ अ.–१ पा.–१. ‡‡ ब्र. सू.–१३ अ.–१ पा.–१. % तैत्तिरीयोपनि वल्ली–२ अनु.–५ मं.–३
* तैत्तिरीयोपनिषादे वल्ली–२ अनु.–३ मं.–१. § अष्टाध्यायी अ.–४ पा.–३ सू.–१४३
× अष्टाध्यायी अ.–४ पा.–३ सू.–१५०. §§ ब्र. सू.–१५ अ.–१ पा.–१.
† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१. ‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–३ मं.–१.
$ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–३. ¶ छांदोग्योपनिषदि प्र.–२ खं.–२३ मं.–१.
£ प्रश्नोपनिषदि प्रश्न.–५ मं.–२. @ कठवल्ल्युपनिषदि वल्ली–२ मं.–१७.
$$ ब्र. सू.–१६ अ.–१ पा.–१.

इतश्च परमेव ब्रह्मानंदमयः । "% यो वेद निहितं गुहायां परमे व्योमन्" इत्यस्मिन्मंत्रे संग्रहवाक्ये प्रकृतं ब्रह्म "कवेहान्योऽन्तर आत्मानंदमय" इत्यत्र प्रपंचवाक्ये निर्दिश्यते । मंत्रब्राह्मणयोरेकार्थत्वात् अन्यथा प्रकृतहानाप्रकृतप्रक्रियाप्रसंगात् अंतरत्वप्रतिज्ञानाच्च अन्यस्य चान्तरस्यानुपदेशाच्च तथा "†† ब्रह्मविदाप्नोति परं" इति मंत्रेण यत्प्राप्यत्वेन परब्रह्म निर्दिष्टं । तदेवैकं "‡‡ आनंदमयमात्मानमुपसंक्रामति" इति ब्राह्मणे निर्दिश्यते । अन्यस्य प्राप्यस्याश्रवणात् श्रुतपरित्यागेनाश्रुतकल्पनाया अन्याय्यत्वात् । भृगुवल्यामपि "§ आनंदो ब्रह्मेति व्यजानादिति" विज्ञेयत्वेन निर्दिष्टस्यैवेतः "* आनंदमयमात्मानमुपसंक्रम्य" इत्यानंदमयशब्देनैव प्राप्यत्वाभिधानात् । "§§ नेतरोऽनुपपत्तेः" इतश्चानंदमयः परमात्मैव नेतरो जीवः । कस्मादनुपपत्तेः आनंदमयं प्रकृत्या "$ तदप्येषः श्लोको भवति" इत्युक्त्वा उक्ते अनंतरश्लोके "× सोऽकामयत बहु स्यां प्रजायेयेति" इत्यादिना सर्वकारणत्वसर्वात्मत्वादयो धर्मा उपदिश्यन्ते । न चैते जीवे उपदिश्यन्ते "¶¶ भेदव्यपदेशाच्च" इतश्च जीवो नानंदमयः यत्कारणं जीवादानंदमयस्य भेदं व्यपदिशति । श्रुतिः "¶ तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानंदमय" इति न चात्र विज्ञानशब्देनांतःकरणमुच्यते । इति शक्यं व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्यय इति सूत्रेण विज्ञानशब्दस्य जीववाचकाया वक्ष्यमाणत्वात् । "** कामाच्च नानुमानापेक्षा" ननु सत्वगुणस्यानंदचितोः प्रधानेऽपि विद्यमानत्वात् प्रधानमेवानंदमयः स्यादिति नेत्युच्यते । अनुमीयत इत्यनुमानं प्रधानं तदपेक्षा चात्रानंदमयवाक्ये नास्ति । कुतः कामात् "† सोऽकामयत बहु स्यां प्रजायेयेति" कामनाश्रवणात् कामस्य च इच्छाया अचेतने प्रधानेऽसंभवात् । "$$ अस्मिन्नस्य च तद्योगं शास्ति" इतश्चानंदमयः परः न संसारी न प्रधानं कुतः अस्मिन्नानंदमये प्रतिष्ठे तस्य जीवस्यापि तद्योगमभयप्राप्तिं शास्ति शास्त्रं "‡ यथा ह्येवैष एतस्मिन्नदृश्येनात्म्ये निरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" न च परमात्मविद्यातोऽन्यतो मोक्षः संभाव्यते । तस्मादानंदमयः पर एवेति सिद्धं ॥

मू०— £ अंतस्तद्धर्मोपदेशादितः पूर्वं विचारितं ॥ २२८ ॥
जीवानामिति तत्सर्वं निश्चितं ब्रह्मधारणं ॥
इतः परं तु देवानां विचार्यं ब्रह्मधारणं ॥ २२९ ॥
आदित्यमंडले तिष्ठञ्जगदीशः प्रचोदयात् ॥
तथाक्षिण्यपि देवेश उपास्यो नेतगे भवेत् ॥ २३० ॥

---

% तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१. †† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१
‡‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–८ मं.–६ § तैत्तिरीयोपनिषदि वल्ली–३ अनु.–६
* तैत्तिरीयोपनिषदि वल्ली–३ अनु.–१० मं.–५. §§ ब्र. सू.–१७ अ.–१ पा.–१.
$ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–५ मं.–२. × तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–१.
¶¶ ब्र. सू.–१८ अ.–१ पा.–१. ¶ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–२ मं.–१.
** ब्र. सू.–१९ अ.–१ पा.–१. † तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–१.
$$ ब्र. सू.–२० अ.–१ पा.–१. ‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–२.
£ ब्र. सू.–२१ अ.–१ पा.–१.

@ भेदव्यपदेशाच्चान्यः परमात्मेति निश्चितम् ॥
य आदित्येतिवाक्येनाप्युपास्यःपरमेश्वरः ॥ २३१ ॥

व्या०— छान्दोग्ये श्रूयते "% य एषोंऽतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण" इत्यादि अथाध्यात्मं "** य एषोऽक्षिणि पुरुषो दृश्यत" इत्यादि च तत्रोभयत्र संशयः। किमादित्ये चक्षुषि चोपास्यमानः संसारी कुत ईश्वर इति। किंतावत्प्राप्तं संसारीति कुतः आधारश्रवणात् न हि परमेश्वरस्य स्वमहिमप्रतिष्ठितस्य आधारोऽस्ति। ऐश्वर्यमर्यादाश्रवणाच्च "§§ ये चामुष्मात्परांचो लोकास्तांश्चाप्नोति देवकामांश्चेति" रूपश्रवणाच्च "हिरण्यश्मश्रुः" इत्यादिश्रवणात् "अरूपा च परा देवता अशरीरं" इत्यादि श्रवणात्। तस्मात्संसार्येवोपास्येत इति प्राप्ते ब्रूमः। अतः मंडलान्तरे अक्षिणी चोपदिश्यमानः। पर एव भवितुमर्हति। कुतः "¶ अंतस्तद्धर्मोपदेशात्" तस्य परमेश्वरस्य यो धर्मः सर्वपाप्मविरहः स इहोपदिश्यते। न च कश्चित्संसारी सर्वपापविनिर्मुक्तोऽस्ति। यत्तूक्तं रूपाद्युपन्यासात्संसारीति तत्र परमेश्वरस्यापि सर्वशक्तित्वमुपासकानामनुग्रहाय लीलया विग्रहपरिग्रहसंभवात्। आध्यात्मिकाधिदैविकविभागापेक्षं। सैव परमेश्वरवत्साम तदुक्तं। "तद्यजुस्तद्ब्रह्म" इत्युच्यमानमपि सर्वात्मकं न ब्रह्मणोऽन्यत्रावकल्पते। तस्मादपि परमेश्वर एवोपास्यः। "§ भेदव्यपदेशाच्चान्यः" परमात्मेति निश्चितः। य आदित्येति वाक्ये नाप्युपास्यः। इतश्चादित्यादन्य ईश्वर एवोपास्यः। "* य आदित्ये तिष्ठन्नादित्यादन्तरोऽयमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमंतरोयमयति" इत्यादिभेदव्यपदेशात् ॥

सू०— तथा£ऽऽकाशस्तल्लिंगाच्च ह्याकाशो ब्रह्म केवलं ॥

व्या०— छान्दोग्ये श्रूयते। "† अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति" इत्यादि तत्र संशयः किमत्र आकाशशब्देन भूताकाश उच्यते उत परं ब्रह्मेति। किं तावत्प्राप्तं भूताकाश इति तत्र प्रसिद्धत्वात् आकाशशब्दस्य अवकाशदानेन भूतान्तरोत्पत्तिहेतुत्वाच्च एवं प्राप्ते ब्रूमः। आकाशो ब्रह्मेति कुतस्तल्लिंगात्। "× सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परो वरीयानुद्गीथः स एषोऽनंत" इति। सर्वभूतोत्पत्तिलयकारणत्वं ज्यायस्त्वं परायणमित्यादीनि ब्रह्मलिंगानि। न च तानि ब्रह्मणोऽन्यत्र संभाव्यन्ते। तस्मादाकाशः परं ब्रह्म ॥

सू०— $ तथाऽत एव प्राणश्च ब्रह्मैव भवति श्रुतं ॥ २३२ ॥

व्या०— "‡ प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता इत्युपक्रम्य। कतमा सा देवतेति प्राण इति होवाच

---

@ ब्र. सू.–२१ अ.–१ पा.–१ % छांदोग्योपनिषदि प्र.–१ खं.–६ मं.–६
** छांदोग्योपनिषदि प्र.–४ खं.–१५ मं.–१. §§ छांदोग्योपनिषदि प्र.–१ खं.–७ मं.–७.
¶ ब्र. सू.–२१ अ.–१ पा.–१. § ब्र. सू.–२२ अ.–१ पा.–१.
* बृहदारण्यके अ.–५ ब्रा.–७ मं.–९. £ ब्र. सू.–२३ अ.–१ पा.–१.
† छांदोग्योपनिषदि प्र.–१ खं.–९ मं.–१. × छांदोग्योपनिषदि प्र.–१ खं.–९ मं.–१.
$ ब्र. सू.–२४ अ.–१ पा.–१. ‡ छांदोग्योपनिषदि प्र.–१ खं.–११ मं.–४.

"£ सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवतेति" तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ । तत्र प्राणशब्देन किं मुख्यः प्राणो गृह्यते उत परं ब्रह्मेति । तत्र प्रसिद्धेर्मुख्यः प्राण इति प्राप्ते आह । अत एव प्राण इति सर्वभूतोद्गमनप्रवेशनलिंगात् ब्रह्मैव लिंगात् अभ्यधिकशंका तु सर्वभूतोद्गमनप्रवेशौ तु मुख्यप्राणेऽपि संभवतः । "¶ यत्रैतत्पुरुषः स्वपिति" "🙞 प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः" । "$ स यदा प्रबुध्यते" । "प्राणादेवादिपुनर्जायन्त" इति श्रुतेरिति । परिहारस्तु स्वापप्रबोधयोरिंद्रियाणामेव केवलानां प्राणाश्रयसंवेशनोद्गमनं दृश्यते । न महाभूतानां तस्माद्भूतसंवेशनोद्गमनं ब्रह्मलिंगमेव ॥

मू०— % ज्योतिश्चरणाभिधानाज्ज्योतिर्ब्रह्म न भौतिकम् ॥

व्या०— छान्दोग्ये श्रूयते "@ अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नंतःपुरुषे ज्योतिः" इत्यादि तत्र संशयः । किं ज्योतिःशब्देन भौतिकं ज्योतिरुच्यते उत परमात्मेति । तत्र प्रसिद्धेर्भौतिकं ज्योतिरिति प्राप्तं द्युमर्यादत्वश्रवणाच्च । न हि सर्वगतस्य ब्रह्मणो द्युमर्यादत्वं युक्तं चक्षुष्यश्रुतो भवतीत्यल्पफलश्रवणाच्च । न ब्रह्म तल्लिंगाभावादिति प्राप्ते ब्रूमः । ज्योतिः परं ब्रह्म कुतः "चरणाभिधानात्" "§ पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति" यत्त्रिपाद्ब्रह्म पूर्वत्र वाक्ये निर्दिष्टं तदेव यदतः पर इति प्रकृतपरामर्शिना यच्छब्देन परामृश्यते । द्युसंबंधस्योभयत्र प्रतीतेर्ज्योतिःशब्दश्च ब्रह्मण्यपि प्रयुक्तः । "* तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं" इति द्युमर्यादत्वं चोपासनार्थं निर्दिष्टं । निष्प्रदेशस्यापि ब्रह्मण उपासनार्थप्रदेशविशेषाः श्रूयन्ते । "आदित्ये चक्षुषि हृदय" इत्यादि तद्वदिहापि यदुक्तमल्पफलश्रवणादिति तदपि न न हीयते फलाय ब्रह्मोपासनमिति नियन्तुं शक्यं । तं यथा यथोपासत इति श्रुतेरन्नादो वसुदान इत्यादिदर्शनाच्च ॥

मू०— × छंदोभिधानान्नेति चेन्नेत्यादिसूत्रेण शाश्वतम् ॥ २३३ ॥
गायत्र्याख्यं परं ब्रह्म धार्यं ध्येयं हृदंबुजे ॥
तथा चेतोर्पणगदाच्छ्रुतिर्दर्शयतीति हि ॥ २३४ ॥
चेतोऽर्पणं धारणं च हृदयांभोजमध्यमे ॥
बहुषु श्रुतिजालेषु सम्यगेवोपपादितम् ॥ २३५ ॥
स्थानानामुत्तमं स्थानं हृदब्जमिति निश्चितम् ॥

व्या०— "× छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनं" । यदुक्तं पूर्वत्र वाक्य-

---

£ छांदोग्योपनिषदि प्र.–१ खं.–११ मं.–५ ¶ छांदोग्योपनिषदि प्र.–६ खं.–८ मं.–१.
🙞 छांदोग्योपनिषदि प्र.–४ खं.–३ मं.–३. $ कौषीतक्युपनिषदि अ.–३ मं.–३.
% ब्र. सू.–२५ अ.–१ पा.–१ @ छांदोग्योपनिषदि प्र.–३ खं.–१३ मं.–७.
§ छांदोग्योपनिषदि प्र.–३ खं.–१२ मं.–६. * बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–१६.
× ब्र. सू.–२६ अ.–१ पा.–१

निर्दिष्टस्य ब्रह्मण इह ग्रहणमिति तद्युक्तं । नहि सर्ववाक्ये ब्रह्म निर्दिष्टं । "¶ गायत्री वा इदं सर्वं भूतं यदिदं किंच " इति । गायत्र्याख्यस्य * छंदसोऽभिधानादिति चेन्न तथा चेतोऽर्पणनिगदात् , गायत्र्याख्यं छंदोद्वारा ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन गायत्री वा इदं सर्वं छंद इति निगद्यते न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं संभवति । तस्माद्गायत्रीशब्देन संख्यासामान्याद्ब्रह्मैव निगद्यते । यथा षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा तथा ब्रह्मापि चतुष्पादिति । तथाऽन्यत्रापि छंदोभिधायी शब्दः संख्यासामान्यादर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायां "‡ ते वा एते पंचान्ये पंचान्ये दश संतस्तत्कृतं " इत्युपक्रम्याह "‡ सैषा विराडन्नात् " इत्युक्तं । तस्मादास्ते पूर्ववाक्ये ब्रह्म निर्दिष्टं ॥

मू०— † एवंभूतादिपादेतिसूत्रेण प्रतिपादितम् ॥ २३६ ॥
$ उपदेशेतिसूत्रेण ज्योतिःशब्दो निरूपितः ॥
£ प्राणस्तथानुगमाद्धि नानालिंगाच्च संशयः ॥ २३७ ॥

व्या०--- इतश्चेत्तदभ्युपगंतव्यं आस्ते पूर्वस्मिन्वाक्ये । प्रकृतं ब्रह्मेति यतो भूतादीन्पादान्व्यपदिशति । भूतपृथिवी हृदयादिनिर्दिश्याह "‡‡ सैषा चतुष्पदा षड्विधा गायत्रीति " । नहि ब्रह्मानाश्रयणे केवलस्य छंदसो भूतादयः पादा उपपद्यन्ते । तस्मादास्ते पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म तदेव ज्योतिर्वाक्येऽपि द्युसंबंधात्प्रत्यभिज्ञायमानं परामृश्यत इति स्थितं । "§§ उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् " ननु पूर्वस्मिन्वाक्ये "‖ त्रिपादस्यामृतं दिवीति " द्यौराधिकरणत्वेन निर्दिष्टा । इह पुनः "@ अथ यदतः परो दिवो ज्योतिः " इति मर्यादात्वेन तस्मादुपदेशभेदान्न तस्येह प्रत्यभिज्ञानमस्तीति चेन्न । उभयस्मिन्नपि पंचम्यन्ते सप्तम्यन्ते च न प्रत्यभिज्ञानं विरुध्यते । यथा वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येन इति । अतः परमेव ब्रह्म ज्योतिःशब्दमिति सिद्धं । "£ प्राणस्तथानुगमात् " । अस्ति कौषीतक्युपनिषदि इन्द्रप्रतर्दनाख्यायिका तत्र श्रूयते "§ प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वेति " तथोत्तरत्र "‡‡ प्राण एव प्रज्ञातेदं शरीरं परिगृह्योत्थापयति " इति तथा न वाचं विजिज्ञासीत वक्तारं विद्यादिति "× स वा एष प्राण एव प्रज्ञात्मानंदोऽजरोऽमृत " इति तत्र संशयः प्राणशब्देन किं मुख्यः प्राणोऽभिधीयते उत देवतात्मा अथ जीवः अथ वा परमात्मेति । नानालिंगदर्शनात् किंतावत्प्राप्तं मुख्यप्राणेति प्राणशब्दस्य तत्र प्रसिद्धेरेवं प्राप्ते ब्रूमः । प्राणो ब्रह्मैव कुतः तथाऽनुगमात् पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदानां ब्रह्मप्रतिपादनपरसमन्वय उपपद्यते । उपक्रमे तावत्परं प्राणेष्वितीन्द्रियेण प्रोक्तः प्रतर्दन उवाच "** यं त्वं मनुष्याय हिततमं मन्यस इति "

---

¶ छांदोग्योपनिषदि प्र.–३ खं.–१२ मं.–१. * ब्रह्मसूत्र–२६ अ.–१ पा.–१.
‡ छांदोग्योपनिषदि प्र.–४ खं.–३ मं.–८. † ब्र. सू.–२७ अ.–१ पा.–१.
$ ब्र. सू.–२८ अ.–१ पा.–१. £ ब्र. सू.–२९ अ.–१ पा.–१
‡‡ छांदोग्योपनिषदि प्र.–३ खं.–१२ मं.–५. §§ ब्र. सू.–२८ अ.–१ पा.–१.
‖ छांदोग्योपनिषदि प्र.–३ खं.–१२ मं.–६. @ छांदोग्योपनिषदि प्र.–३ खं.–१३ मं.–७.
§ कौषीतक्युपनिषदि अ.–३ मं.–१. ‡‡ कौषीतकिब्राह्मणोपनिषदि अ.–३ मं.–२.
× कौषीतकिब्राह्मणोपनिषदि अ.–३ मं.–९. ** कौषीतकिब्राह्मणोपनिषदि अ.–३ मं.–१.

हिततमत्वं च ब्रह्मप्राप्तेरन्यस्य नोपपद्यते । "† तं मामायुरमृतमित्युपास्व" इति ब्रह्मपरिग्रह एव कल्पते "§ स वा एष प्राण एव प्रज्ञानंदोऽजरोऽमृत" इत्युपसंहारो ब्रह्मण्येव युज्यते । तस्माद्ब्रह्मैव प्राणशब्दं ॥

मू०— परं ब्रह्म प्राणशब्दान्मुख्यप्राणो नचाभवत् ॥
* वक्तुरात्मोपदेशाद्धि प्राणशब्दो नच स्मृतः ॥ २३८ ॥
अध्यायेऽस्मिन्नीश्वरस्य वाहुल्यात्परमेश्वरः ॥
अध्यात्मसंवंधभूमा ह्यस्मिन्निति दृढीकृतं ॥ २३९ ॥

व्या०— न ब्रह्म प्राणशब्दः कुतः वक्तुरिंद्रस्यात्मोपदेशाद्धिग्रहवानिंद्रो देवताविशेषः स्वात्मानं प्रतर्दनायोवाच "† मामेव विजानीहीति" "† प्राणोऽस्मि प्रज्ञात्मा" इति च निश्चिते च देवतात्मोपदेशे तदनुगुणतया "§ आनंदोऽजरोऽमृत" इत्याद्युपसंहारो नेतव्यः । एकस्मिन्वाक्ये उपक्रमानुरोधित्वादुपसंहारः स्यादन्यथा एकवाक्यताभंगप्रसंगादिति चेन्नायं दोषः । अध्यात्मसंवंधभूमा ह्यस्मिन्नित्यस्मिन्नध्याये ईश्वरात्मसंवंधवाहुल्यं हि लक्ष्यते आदिमध्यावसानेषु ब्रह्मसंवंधस्यैव वाहुल्येन प्रतिपादनात्। यत्र उपक्रमवशात् देवतापरिग्रह इति तद्विपरीतं ब्रह्मण एव प्रथमतरं हिततमत्वोपन्यासेनोपक्रांतत्वात्कथम् तर्हि वक्तुरात्मोपदेशः । "† मामेव विजानीहीति" ॥

मू०— § शास्त्रदृष्ट्या तूपदेशो वामदेववदस्ति च ॥
स्वात्मनो भेददृष्ट्या तु सोपदेशो निरूपितः ॥ २४० ॥
"£ जीवमुख्यप्राणलिंगान्नेतिचेदितिसूत्रतः" ॥
उपक्रान्तार्थजालं हि सुदृढं प्रतिपादितम् ॥ २४१ ॥
उपसंहारैकरूप्यं शास्त्रदृष्ट्या न संशयः ॥
जीवमुख्यप्राणलिंगान्नेतिचेद्वारणं तदा ॥ २४२ ॥
इहाश्रितत्वात्तद्योगात्त्रिविधोपासनावलात् ॥
हृदब्जे वा द्वादशान्ते भ्रूमध्ये वाऽथ वा शिरे ॥ २४३ ॥
ध्याये मुक्त्यै सदा देवं त्रिविधोपासनं स्मृतम् ॥
अहंसंज्ञाविनिर्दिष्टं हृदब्जमतिदुर्लभम् ॥ २४४ ॥
तस्माध्दृदब्जे धार्यं च ब्रह्म लिंगं परात्परम् ॥
प्राणादप्यधिकं लिंगं यस्माच्छ्रेयः परं भवेत् ॥ २४५ ॥
तत्प्राणलिंगं मोक्षार्थी विदध्याध्दृदयांवुजे ॥

---

† कौषीतकिब्राह्मणोपनिषदि अ.–३ मं.–१. § कौषीतकिब्राह्मणोपनिषदि अ.–३ मं.–९.
* ब्र. सू.–३० अ.–१ पा.–१. § ब्र. सू.–३१ अ.–१ पा.–१.
£ ब्र. सू.–३२ अ.–१ पा.–१.

व्या०— यद्यप्ययमीश्वरस्यैवोपदेशो न देवतात्मनः तथापि सम आत्मेति विद्यादिति शास्त्रेणेश्वरस्यापि स्वात्माभेदेनैव द्रव्यत्वविधानात् ताम् दृष्टिमाश्रित्य "* मामेव विजानीहि" इत्युपदेशः वामदेववत् यथा वामदेव आत्मत्वेन सर्वात्मकमीश्वरं पश्यन् "§ अहं मनुरभवम् सूर्यश्चेति" शास्त्रीयां दृष्टिमनुसरन्नेव उपदिदेश तद्वत्तस्माद्ब्रह्मवाक्यमेवैतत् "† जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" यद्यप्यध्यात्मसंबंधभूमदर्शनात् ब्रह्मवाक्यमेतत् तथापि न ब्रह्मप्रतिपत्तिरेकान्तेनाप्याश्रयितुं शक्या कुतः जीवलिंगात् मुख्यप्राणलिंगाच्च जीवलिंगं तावत् "‡ न वाचं विजिज्ञासीत वक्तारं विद्यादिति" मुख्यप्राणलिंगमपि "* प्राण एव प्रज्ञातेदं शरीरं परिगृह्योत्थापयतीति" तस्मान्न ब्रह्मवाक्यमेवेदमिति चेन्न। ब्रह्मवाक्ये जीवमुख्यप्राणलिंगं विरुद्ध्येत कुतः उपासनात्रैविध्यात् त्रिविधमिहोपासनं विधित्सितं प्राणधर्मेण प्रज्ञात्मधर्मेण स्वधर्मेण च तत्र "* आयुरमृतमित्युपास्व" "* इदं शरीरं परिगृह्योत्थापयति" "$ तस्मादेतमेवोक्थमुपासीतेति प्राणधर्मः "@ अथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः इत्युपक्रम्य "वागेवास्या एकमंगमदूढं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोतीति" प्रज्ञाधर्माः "‡ ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दशप्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्रा स्युः यद्वा प्रज्ञामात्रा नस्युर्न भूतमात्रा स्युः न ह्यन्यतरतो रूपं किंचन सिद्ध्येत् नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता" इत्यादिब्रह्मधर्माः तस्माद्ब्रह्मण एवोपाधिद्वयधर्मेण स्वधर्मेण चोपासनं त्रिविधं विवक्षितमित्यन्यत्रापि "¶ मनोमयः प्राणशरीर" इत्यादावुपाधिद्वयधर्मेण ब्रह्मण उपासनमाश्रितं इहापि तद्युज्यते वाक्योपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमात् प्राणप्रज्ञाब्रह्मलिंगावगमाच्च तस्माद्ब्रह्मवाक्यमेवेति सिद्धं। तदेवं लिंगधारणं पूजनमित्यादिवीरशैवसमयाचारसिद्धपंचाचाराद्यावरणविशिष्टषट्स्थलतत्त्वज्ञानं मुक्तिसाधनमिति प्रथमाध्याये प्रथमः पादो वृत्तः॥

---

* कौषीतकिब्राह्मणोपनिषदि अ.—३ मं.—१. § बृहदारण्यकोपनिषदि अ.—३ ब्रा.—४ मं.—१०.
† ब्रह्मसूत्र—३२ अ.—१ पा.—१. $ कौषीतकिब्राह्मणोपनिषदि अ.—३ मं.—३.
@ कौषीतकिब्राह्मणोपनिषदि अ.—३ मं.-४. ‡ कौषीतकिब्राह्मणोपनिषदि अ.—३ मं.—८.
¶ छांदोग्योपनिषदि प्र.—३ खं.—४ मं.—२.

॥ श्रीगणेशाय नमः ॥

# अथ प्रथमाध्याये द्वितीयः पादः

॥ * सर्वत्र प्रसिद्धोपदेशात् ॥

मू०— अस्मिन्पादे शिवस्यैव परस्यामिततेजसः ॥ २४६ ॥
सदा सर्वैरुपास्यत्वं प्रधानादेर्न युज्यते ॥
अत एव ऋषीणां च वाक्यानि प्रसरन्ति हि ॥ २४७ ॥
किं कारणं ब्रह्मवाक्ये ह्युपास्यत्वं सुनिश्चितम् ॥
किं कारणं कुतो जाता जीवामः केन वा वयम् ॥ २४८ ॥
क्व चास्माकं संप्रतिष्ठा वर्धिताः केन वा वयम् ॥
केन वर्तामहे शश्वत्सुखेष्वन्येषु वाऽनिशम् ॥ २४९ ॥
अविलंघ्या च विश्वस्य व्यवस्था केन वा कृता ॥
कालस्वभावो नियतिर्यदृच्छा वाऽत्र विद्यते ॥ २५० ॥
भूतानि योनिः पुरुषो योगो वैषां पुरोऽथ वा ॥
अचेतनत्वात्कालादेश्चेतनत्वेन चात्मनः ॥ २५१ ॥
सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते ॥
ते ध्यानयोगानुगताः प्रापश्यंश्च्छक्तिमैश्वरीम् ॥ २५२ ॥
पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ॥
तया विच्छिन्नपाशास्ते सर्वकारणकारणम् ॥ २५३ ॥
शक्तिमन्तं महादेवमपश्यन्दिव्यचक्षुषा ॥
यः कारणान्यशेषाणि कालात्मसहितान्यपि ॥ २५४ ॥
अप्रमेयोऽनया शक्त्या साकमेकोऽधितिष्ठति ॥
निर्द्वंद्वं निर्विकल्पं च तारकाकारमीश्वरम् ॥ २५५ ॥
हृदयाकाशसंशोभि लिंगमत्यंतसुंदरम् ॥
प्राधान्येनोपासनं च ह्यस्मिन्नेव विचार्यते ॥ २५६ ॥
यद्ब्रह्म गीयते वेदैस्तद्ब्रह्म परिकीर्त्यते ॥
ब्रह्मोपासनमित्येव वदन्ति विबुधा अपि ॥ २५७ ॥

* ब्र. सू.–१ अ.–१ पा.–२.

लिंगोपासनमित्येवं वक्तुं त्रुट्यद्गला जनाः ॥
ब्रह्माद्याः सर्वगीर्वाणा ऋषयश्च तपस्विनः ॥ २५८ ॥
शिवलिंगं मुदा दृष्ट्वा हृदयाब्जखमध्यमे ॥
वेदान्तेषु च सर्वत्र शिवलिंगं निगद्यते ॥ २५९ ॥
कैश्चित्स्वात्मानंद इति प्रोच्यते लिंगवैभवः ॥
तथापि मानवा मूर्खा मुधाऽन्यत्प्रत्यवीवदन् ॥ २६० ॥
प्रत्यक्षमोक्षलाभो हि सर्वेषां दुर्लभः स्मृतः ॥
वेदान्तेषु च सर्वत्र प्रसिद्धा ह्युपदेशतः ॥ २६१ ॥
तज्जत्वादिगुणोपेतः स्यादुपास्यः परात्परः ॥
"¶ अप्राणो ह्यमना" वाक्यात्संबद्धो मन आदिभिः ॥ २६२ ॥
"‡ सर्वं खल्विति" वाक्येन जीव एव परो नच ॥
लक्ष्ये बुद्धे स्थितिः साक्षादुपासनमिहोच्यते ॥ २६३ ॥
जीवमुख्येतिसूत्रेण यत्पुरा प्रतिपादितम् ॥
तद्ब्रह्मैव जगत्कर्तृ * मुमुक्षूपास्यमादरात् ॥ २६४ ॥
तज्जत्वादपि तल्लत्वात्सर्वं ब्रह्मेत्युपासनम् ॥
प्राणाः शरीरमस्येति सन्निधानार्थवाचिना ॥ २६५ ॥
इदंशब्देनेश्वरस्य परामर्शात्परो ध्रुवम् ॥
व्यत्यासान्नीयमानोऽपि सर्वैरंगीकृतः श्रुतौ ॥ २६६ ॥
अर्थतोऽप्यसमर्थानामानंतर्योऽप्यनादरः ॥
इदं पूर्वमिदं पश्चात्पदं वाक्ये भवेदिति ॥ २६७ ॥
नियमो नैव वेदेऽस्ति पदसांगत्यमर्थतः ॥

व्या०— "‡ सर्वं खल्विदं ब्रह्म तज्जलानीति । शांत उपासीत अथ खलु क्रतुमयः पुरुषः यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीतेति" "§ मनोमयः प्राणशरीर" इत्यादि तत्र संशयः किं मनोमयत्वादिधर्मैर्जीव उपास्यः उत परं ब्रह्मेति किं तावत्प्राप्तं जीव इति तस्य हि प्रसिद्धो मन आदिभिः संबंधः न परस्य "¶ अप्राणो ह्यमनाः शुभ्र इति श्रुतेः । ननु सर्वं खल्विदं ब्रह्मेति स्वशब्देनैव ब्रह्मोक्तं कथमिह जीव उपास्यत्वेनोच्यते नैष दोषः नेदं वाक्यमुपासनाविधिपरं किं तर्हि शमविधिपरं यत्कारणं "£ सर्वं खल्विदं ब्रह्म तज्जलानीति शांत उपासीत"

¶ मुंडकोपनिषदि मुं.–२ खं.–१ मं.–२. ‡ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–१.
* मुमुक्षुः पश्यमाधरेत् इति पाठांतरम् § छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–२.
£ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–१.

इत्याह एतदुक्तं भवति तस्मात्सर्वमिदं ब्रह्मैव "तज्जत्वात्तल्लत्वात्तदनन्यत्वान्न च सर्वस्यैकात्मत्वे द्वेषादयः संभवन्ति तस्मात् "* शान्त उपासीतेति" नच शमविधिपरेणानेन वाक्येनोपासना नियन्तुं शक्यते उपासनं "* स क्रतुं कुर्वीत" इत्यनेन विधीयते क्रतुः संकल्पाध्यानमित्यर्थः यावत्तस्य विषयत्वेन श्रूयते "† मनोमयः प्राणशरीर" इति जीवलिंगमतो ब्रह्मेति जीवलिंगविषयमेतदुपासनमिति एवं प्राप्ते ब्रूमः "¶ सर्वत्र प्रसिद्धोपदेशात्" इतिवत् सर्वेषु वेदान्तेषु जगत्कारणत्वेन प्रसिद्धं ब्रह्म यच्च पूर्वस्मिन्वाक्ये सर्वं खल्विदं ब्रह्मेति निर्दिष्टं तदेवेहोपास्यत्वेनोपदिश्यते प्राणशरीर इत्यत्र प्राणः शरीरमस्येदंशब्देन सन्निहितवाचिना पूर्ववाक्योपात्तब्रह्मण एव परामर्शात् ॥

मू०— § विवक्षितगुणादीनामुपपत्त्या च केवलं ॥ २६८ ॥
ब्रह्मोपास्यं परं नान्यदिति सम्यक् सुनिश्चितं ॥

व्या०— "§विवक्षितगुणोपपत्तेश्च" वक्तुमिष्टा विवक्षिता यद्यपौरुषेये वेदे वक्तुमभावान्नेच्छा संभवति तदाप्युपादेयत्वं विवक्षितत्वं लोके हि यदुपादेयं तद्विवक्षितमित्युच्यते। तथा च ये गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्वेनोपदिष्टाः सन्ति संकल्पप्रभृतयस्ते ब्रह्मण्युपपद्यन्ते अप्रतिबंधशक्तित्वात्तस्य॥

मू०— ‡ इतश्चानुपपत्तेस्तु नाशरीरः कदाचन ॥ २६९ ॥
सत्यकामः सत्य इति गुणानां च शिवः परः ॥
$ कर्तृत्वेन च जीवस्य कर्मत्वेन परस्य च ॥ २७० ॥
उपदेशादेकमितः मत्येत्यस्मिन्नुपासनम् ॥
शारीरपरयोर्भेदः ॐ स्मृतेरप्यवगम्यते ॥ २७१ ॥
मनोमयत्वादिधर्मविशिष्टस्यैव केवलम् ॥
इतः £ शब्दविशेषाच्च तयोर्भेदोऽवगम्यते ॥ २७२ ॥
उपास्यं तत्परं ब्रह्म न जीव इति निश्चितम् ॥
परस्य यदुपास्यत्वमुक्तं नास्योपपद्यते (तन्नोपपद्यते) ॥ २७३ ॥
% अर्भकौकस्त्वाद्धिधर्मव्यपदेशान्न चेश्वरः ॥
इति चेन्न निचाय्यत्वादेवं सर्वगतः शिवः ॥ २७४ ॥
अणीयस्त्वं हृदाकाशापेक्षया ह्युपपद्यते ॥
यथा सर्वगताकाशः सूचीपाशाद्यपेक्षया ॥ २७५ ॥
पर एव तथोपास्यो हृदयाकाशमध्यमे ॥

---

* छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–१. ¶ ब्र. सू. १ अ.–१ पा.–२.
† छांदोग्योपनिषदि प्र.–३ खं.–४ मं.–२. § ब्र. सू.–२ अ.–१ पा.–२.
‡ ब्र. सू.–३ अ.–१ पा.–२. $ ब्र. सू.–४ अ.–१ पा.–२. ॐ ब्र. सू.–६ अ.–१ पा.–२.
£ ब्र. सू.–५ अ.–१ पा.–२. % ब्र. सू.–७ अ.–१ पा.–२.

§ संभोगप्राप्तिरिति चेन्न वैशेष्यात् हृदंबुजे ॥ २७६ ॥
तस्यापहतपाप्मत्वात्सुखदुःखादयो न हि ॥

व्या०— तुशब्दोऽवधारणार्थः ब्रह्मैवोपास्यं न शारीरः। तस्मात्तस्मिन्सत्यसंकल्पत्वादीनामनुपपत्तेः "£कर्मकर्तृव्यपदेशाच्च" यतश्च न जीव उपास्यः यस्माज्जीवः कर्तृत्वेन ब्रह्म कर्मत्वेन चोपदिश्यते "‡ एतमितःप्रेत्याभिसंभविताऽस्मीति" एतमिति प्रकृतं मनोमयत्वादिविशिष्टमुपास्यं शरीरपातादूर्ध्वमभिसंभविताऽस्मि प्राप्तोऽस्मीति उपास्यकर्मत्वेन प्राप्तव्यत्वेनोपास्यस्य च जीवस्य प्राप्तृत्वेन कर्तृत्वेन व्यपदेशान्न जीव उपास्यः "†शब्दविशेषात्" तस्य शारीरादन्यो मनोमयत्वादिविशिष्ट उपास्यः यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यंतरे "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतंडुलो वेति" एवं "अयमन्तरात्मन्पुरुषो हिरण्मय" इति शारीरस्यात्मनो यः शब्दोऽभिधायकसप्तम्यंत अंतरात्मन्निति ततोऽन्यः प्रथमान्तः शब्दविशेषः पुरुषशब्दः मनोमयत्वादिविशिष्टस्योपास्यस्याभिधायकः। तस्मात्तयोर्भेदोऽवगम्यते। "§§स्मृतेश्च" स्मृतिश्च शारीरपरमात्मनोर्भेदमवगमयति "¶ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति॥ भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेत्यादि" "$$ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" यदुक्तं ब्रह्मोपास्यमिति तन्नोपपद्यते कस्मादर्भकौकस्त्वात्तद्व्यपदेशाच्च अर्भकं ओकः नीडं स्थानं यस्य तस्य भावस्तत्वं तस्मात् "$ एष आत्मान्तर्हृदय" इति परिच्छिन्नायतनत्वश्रवणात् स्वशब्देनैवाणीयस्त्वान्न "$ व्रीहेर्वा यवाद्वेति" साक्षादेवाणित्वश्रवणाच्च जीव एव नीवाराग्रमात्रोपमितीहोपास्यत्वेनोपदिश्यते न सर्वगः परमात्मेति चेन्न। कुतः निचाय्यत्वादेवं सर्वगस्यापीश्वरस्यार्भकौकस्त्वमणीयस्त्वं च हृदयापेक्षया उपासनयोपदिश्यते। यथा सर्वगतस्याप्याकाशस्य सूचीपाशाद्यपेक्षयाऽल्पत्वं व्यपदिश्यते। तद्वज्जीवस्य तु स्वतो गुणत्वात् "$ ज्यायान् पृथिव्या इति" ज्यायस्त्वं न कथमप्युपपद्यते तस्मान्न श्रूयमाणजीव उपास्यः किंतु ब्रह्मेति "*संभोगप्राप्तिरिति चेन्न वैशेष्यात्" यदि ब्रह्मणो हृदयसंबंधोऽभ्युपगम्यते तज्जीवस्य हि सुखदुःखभोगैककर्मनिमित्तं भवति ईश्वरस्यापहतपाप्मत्वाच्छ्रूयते हि "‖ एष आत्माऽपहतपाप्मेति" न चैकसंबंधमात्रेण तदीयधर्मप्राप्तिः आकाशादीनामपि दाहच्छेदादिप्रसंगात् तस्माज्जीवस्यैव भोगः न परस्य॥

मू०— ꣸ चराचरस्य ग्रहणादत्ता पर इहोच्यते ॥ २७७ ॥
% तस्मात्प्रकरणाच्चापि संग्राह्यः पर एव सः ॥

व्या०— कठवल्लीषु श्रूयते "@ यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इत्यत्र कश्चिदोदनोपसेचनसंसूचितोऽत्ता प्रतीयते स किमनत्ता स्यादुत जीवः

---

§ ब्र. सू.–८ अ.–१ पा.–२. £ ब्र. सू.–४ अ.–१ पा.–२.
‡ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–४. † ब्र. सू.–५ अ.–१ पा.–२.
§§ ब्र. सू.–६ अ.–१ पा.–२. ¶ भगवद्गीतायां अ.–१८ श्लो.–६१. $$ ब्र. सू.–७ अ.–१ पा.–२.
$ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–३. * ब्र. सू.–८ अ.–१ पा.–२.
‖ छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–५. ꣸ ब्रह्मसूत्र–९ अ.–१ पा.–२.
% ब्रह्मसूत्र–१० अ.–१ पा.–२. @ कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं.–२५.

आहोस्वित्परमात्मेति "‡‡ अग्निरन्नाद" इति श्रुतेः अग्निरत्ता स्याज्जीवो वा तस्यापि भोक्तृत्वेन प्रसिद्धतरत्वात् नेश्वरः "§ अनश्नन्नन्योऽभिचाकशीति" तस्याभोक्तृत्वप्रतिपादनात् एवं प्राप्ते ब्रूमः। अत्ता परमात्मैव भवितुमर्हति कुतः चराचरग्रहणात्। न हि चराचरस्य स्थावरजंगमात्मकस्य कृत्स्नस्य जगत अत्ता संहर्ता परमेश्वरादन्यः संगच्छते। नन्विह चराचरग्रहणं नोपलभ्यते सत्यं "† मृत्युर्यस्योपसेचनं" इत्यनेन मृत्युना विनाशे न प्राप्तं सर्वमेव जगद्गृह्यते। ब्रह्मक्षत्रयोः प्राधान्यात् प्रधानत्वेन ग्रहणं अतृत्वं च संहर्तृत्वमेव न च "§ अनश्नन्नन्योऽभिचाकशीति" मन्त्रवर्णविरोधः। तस्य प्रकृतकर्मफलभोक्तृत्वनिषेधपरत्वात् ब्रह्मणश्च सर्वसंहर्तृत्वस्य सर्ववेदान्तसिद्धत्वात्तस्मात्पर एवात्ता "* प्रकरणाच्च" प्रकरणं चेदं परमात्मनः "¶ न जायते म्रियते वा विपश्चिदिति" प्रकृतग्रहणं च न्याय्यं "† क इत्था वेदेति" दुर्विज्ञेयत्वं परमात्मलिंगं "× गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" ॥

मू०— × गुहां प्रविष्टावात्मानौ बुद्धिजीवौ हि यद्यपि ॥ २७८ ॥
जीवात्मपरमात्मानौ निश्चितौ श्रुतिसूत्रयोः ॥
‡ विशेषणाच्च तौ ग्राह्यावृतमित्यादिवाक्यतः ॥ २७९ ॥

व्या०— कठवल्लीष्वेव पठ्यते "£ ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ॥ छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिणाचिकेता" इति तत्र संशयः किमिह बुद्धिजीवौ निर्दिष्टौ उत जीवपरमात्मानाविति तत्र पूर्वः पक्षः बुद्धिजीवाविति कुतः गुहां प्रविष्टाविति विशेषणान्नहि सर्वगतस्य ब्रह्मणो गुहाप्रवेशो युक्तः। शरीरं हृदयं वा गुहा सुकृतस्य लोक इति च बुद्धिजीवयोरुपपद्यते अंतःकरणयुक्तो हि जीवः "कर्मकृल्लोके कर्मफलमृतं भुंक्ते न पर इति। सिद्धान्तस्तु गुहां प्रविष्टावात्मानौ हीति हिर्हेतौ यस्माच्चेतनत्वात् समानस्वभावौ संख्याश्रयणे हि समानजातीयप्रतिपत्तिर्दृश्यते। अस्य गोर्द्वितीयो मृग्य इति गौरेव भवति नाश्वः। यदुक्तं गुहाप्रवेशो नोपपद्यत इति तद्दर्शनात् "‡‡ यो वेद निहितं गुहायां परमे व्योमन्" "आत्मानमन्विच्छन् गुहां प्रविष्टं" "% गुहाहितं गव्हरेष्ठं पुराणं" इत्येवमादिषु श्रुतिषु परस्यापि गुहाप्रवेशदर्शनात् न च "ऋतं पिबंताविति परस्य कर्मफलभोक्तृत्वविरोधः छत्रिन्यायेनापि." "ओदपि ओतोऽपि औताविति" निर्देशोपपत्तेः यद्वा जीवः पिबतीश्वरः पाययतीतीश्वरस्य प्रयोजकत्वेन पानकर्तृत्वात् मुख्य एव निर्देशः छायातपवदन्योन्यविलक्षणत्वात् छायातपावित्यविरुद्धं "‡ विशेषणाच्च" "@ सोऽध्वनः पारमाप्नोतीति" गंतृगंतव्यत्वेन विशेषणादपि जीवेश्वरावेव गृह्येते न बुद्धिजीवाविति सिद्धं "§ द्वा सुपर्णा" इत्यत्राप्ययमेव न्यायः। अत एव तदनंतरमंत्रे तावेव प्रतीयेते "†† समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इति एवं च "§ तयोरन्यः पिप्पलं स्वाद्वत्तीति"

‡‡ बृहदारण्यकोपनिषदि अ.–३ ब्रा.–४ मं.–६. § मुंडकोपनिषदि मुं.–३ खं.–१ मं.१.
† कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं.–२५. * ब्र. सू.–१० अ.–१ पा.–२.
¶ कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं.–१८. × ब्रह्मसूत्र–११. अ.–१ पा.–२.
‡ ब्रह्मसूत्र–१२. अ.–१ पा.–२. £ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं–१.
‡‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–१. % कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं.–१२.
@ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–९. †† मुंडकोपनिषदि मुं.–३ खं.–१ मं.–२.

"स त्वनश्नन्नन्योऽभिचाकशीत्यनश्नन्नन्योऽभिपश्यति ज्ञौ तावुभौ सत्वक्षेत्रज्ञौ तदेतत्सत्वं येन स्वप्नं पश्यतीति" पैंगलरहस्यब्राह्मणेऽपि सत्वशब्देन जीव उच्यते सत्वशब्दस्य "†§ वन्यान्विनेष्यन्निव दुष्टसत्वान्" इति जीवे प्रयोगदर्शनात् तस्मिन्येन स्वप्नं पश्यतीति निर्देशोऽपि येन वा पश्यतीत्यादिवदुपपद्यते क्षेत्रज्ञशब्दोऽपि परमात्मनिर्दिष्टः "§ क्षेत्रज्ञं चापि मां विद्धि" इत्यादौ सूत्रकारोऽप्यस्य मंत्रस्य जीवपरविषयत्वं वक्ष्यति "** स्थित्यदनाभ्यां च" ॥

सू०— * तथान्तरोपपत्तेश्च छायात्मा नैव गृह्यते ॥
परमेश्वर एवाक्षिण्यंतरः पुरुषः स्मृतः ॥ २८० ॥
§ य एषोऽक्षीतिवाक्येन संयद्वाम इत्यतः ॥
अमृतत्वादयो धर्मा न जीवस्येति निश्चिताः ॥ २८१ ॥
£ स्थानादिव्यपदेशाच्च प्रसिद्धिस्थानतो विदुः ॥
× सुखाविशिष्टाभिधानादत्रोपास्यः परः शिवः ॥ २८२ ॥
प्राणो ¶¶ ब्रह्म कमित्यत्र कंखंशब्दौ पराश्रयौ ॥
% यच्छ्रुतोपनिषत्केतिसूत्रेण परमेश्वरम् ॥ २८३ ॥
संश्रुताश्चोपनिषदो ब्रह्मविद्या च येन सः ॥
निषीदन्त्युपशीर्यन्ते संसारग्रन्थयस्तथा ॥ २८४ ॥
तत्तद्वृत्त्यभिधानाच्च ग्रन्थोप्युपनिषत्स्मृता ॥
या गतिर्देवयानाख्या प्रसिद्धा सा हृदंबुजे ॥ २८५ ॥
*§ अथोत्तरेण तपसा ब्रह्मचर्येण वाक्यतः ॥
तया प्रसिद्ध्या ब्रह्मनिर्देशो निश्चितः श्रुतौ ॥ २८६ ॥
अक्षिस्थः पुरुषो जीव इति तन्नोपपद्यते ॥

व्या०— "*अन्तर उपपत्तेः" छान्दोग्ये श्रूयते "§य एषोऽक्षिणि पुरुषो दृश्यत । एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति" तत्र संशयः किं छायात्मा गृह्यते उताहो ईश्वर इति किं तावत्प्राप्तं प्रतिबिंबात्मेति तावत्प्राप्तं कुतः तस्य दृश्यत्वसंभवाज्जीवो वा स्यात् तस्यापि भोक्तृत्वेन स चक्षुःसन्निहितत्वान्नेश्वरः स्थानविशेषस्य निर्देशादित्येवं प्राप्ते ब्रूमः । परमेश्वर एवाक्षिण्यभ्यंतरः पुरुष इहोपदिष्ट इति कुत उपपद्यते हि परमेश्वर इहोपदिश्यमान आत्मत्वामृतत्वाभयत्वब्रह्मत्वादिमुख्यः संयद्वामत्वाद्युपपत्तेश्च "§ एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयंति सर्वाण्येनं वामान्यभिसंयंति य एवं वेद एष उ एव वामनीरेष हि सर्वाणि वामानि नयति" कल्याणानीत्यर्थः "† एष

** ब्र. सू.–६ अ.–१ पा.–२.
§ भगवद्गीतायां अ.–१३ श्लो.–२. * ब्र. सू.–१३ अ.–१ पा.–२. % ब्र. सू.–१७ अ.–१ पा.–२.
£ ब्र. सू.–१४ अ.–१ पा.–२. × ब्र. सू.–१५ अ.–१ पा.–२. † छांदोग्योपनिषदि प्र.–४ खं.–१५ मं.–४.
§ छांदोग्योपनिषदि प्र.–४ खं.–१५ मं.–१. *§ प्रश्नोपनिषदि प्र.–१ मं.–१०.
¶¶ ब्र. सू.–१६ अ.–१ पा.–२. †§ रघुवंश सर्ग–२ श्लो.–८.

उ एव हि भामनीरेव हि सर्वेषु लोकेषु भातीति " अक उपत्त्येरन्तरः परमेश्वरः "†‡ स्थानादिव्यपदेशाच्च " यतोऽप्यंतरः परमेश्वर एव यस्मात्परमेश्वरे प्रसिद्धं स्थानादिकमिहोपदिश्यते "× यश्चक्षुषि तिष्ठन् चक्षुषोंऽतर " इत्यादौ प्रसिद्धमेव स्थानं अन्तरत्वमात्मत्वममृतत्वादिकं सिद्धवन्निर्दिश्यते "‡य एषोऽक्षिणि पुरुषो दृश्यत " इत्यादिना "§$सुखविशिष्टाभिधानादेव च" सर्वत्र हि सुखविशिष्टस्य ब्रह्मणोऽभिधानादेव प्रकृतं ब्रह्मात्र परामृश्यते संयद्वामत्वादिगुणविधानार्थं गत्यभिधानार्थं च "§ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति " तत्र कं ब्रह्मेत्यनेन सुखविशिष्टं ब्रह्मोच्यते प्रकृतग्रहणं च न्याय्यं "† आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्यैव वक्तव्यप्रतिज्ञानाच्च नार्थांतरं किंचिदुपास्यत्वेनोपदिश्यते यन्न "‡ एतं हि सर्वाणि वामान्यभिसंयंति " वामानि सुखानीत्यर्थः इति सुखविशिष्टाभिधानाद्ब्रह्मैवोपास्यं कंखंशब्दयोश्च ब्रह्मप्रतीकभूताकाशार्थस्य "§ प्राणं च हास्मै तदाकाशं चोचुरिति " श्रुत्यैव प्रतिपादनात् "†§श्रुतोपनिषत्कगत्यभिधानाच्च" श्रुता उपनिषदः आत्मविद्या येन स श्रुतोपनिषत्कः उप निषीदन्ति क्षीयन्ते संसारग्रन्थयो यस्यां सा उपनिषद् विद्या मुख्यया वृत्त्या तत्संयोगात् ग्रन्थोऽप्युपनिषदित्युच्यते तस्य ब्रह्मविदो गतिर्देवयानाख्या प्रसिद्धा श्रुत्यंतरे "@ अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्याम्नायन्ते "@ एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त " इति सैवेहोपकोसलस्याक्षिपुरुषविद उपदिश्यमाना दृश्यंते "‡$ तेऽर्चिषमभिसंभवन्तीति " तया प्रसिद्धया ब्रह्मनिर्देशोऽयमिति निश्चीयते ॥

मू०— ¶ तत्रानवस्थितो ब्रह्मसंभवान्नेतरो विभोः ॥ २८७ ॥
चक्षुष्यन्तरः पुरुषो ब्रह्मैवेति व्यवस्थितः ॥
$ अंतर्याम्यधिदैवादौ तद्धर्मव्यपदेशतः ॥ २८८ ॥
नियंतृत्वादयो धर्माः संभवन्ति परस्य हि ॥
अंतर्यामी परस्तस्मात्सर्वशक्तित्वसंभवात् ॥ २८९ ॥
प्रधानमंतर्यामीति यदुक्तं तन्न गृह्यते ॥
* न च स्मार्तं प्रधानं तत्तत्तद्धर्माभिधानतः ॥ २९० ॥
अदृष्टत्वादयो धर्माः प्रधाने संभवन्त्यपि ॥
द्रष्टृत्वाद्या न प्रधानेऽचेतने संभवन्ति च ॥ २९१ ॥
£ उभयेऽपि हि भेदेन परमेनमधीयते ॥
न शारीरोऽन्तर्यामीति काण्वा माध्यन्दिना विदुः ॥ २९२ ॥

†‡ ब्र. सू.–१४ अ.–१ पा.–२ §$ ब्र. सू.–१५ अ.–१ पा.–२ †§ ब्र. सू.–१७ अ.–१ पा.–२.
× बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–१८. ‡ छांदोग्योपनिषदि प्र.–४ खं.–१५ मं.–१.
§ छांदोग्योपनिषदि प्र.–४ खं.–१० मं.–५. † छांदोग्योपनिषदि प्र.–४ खं.–१४ मं.–१.
@ प्रश्नोपनिषदि प्रश्न–१ मं.–१०. ¶ ब्र. सू.–१८ अ.–१ पा.–२.
$ ब्र. सू.–१९ अ.–१ पा.–२. * ब्र. सू.–२० अ.–१ पा.–२.
£ ब्र. सू.–२१ अ.–१ पा.–२. ‡$ छांदोग्योपनिषदि प्र.–५ खं–१ मं–१.

¶ अदृश्यत्वादिगुणकधर्मोक्तेः पर एव सः ॥
न जीवो वा प्रधानं वा तद्धर्माणामभावतः ॥ २९३ ॥
परमेश्वरलिंगस्य सर्वज्ञत्वस्य शासनात् ॥
दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः ॥ २९४ ॥
¶‡ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतःपरः ॥
§ तद्विशेषणभेदाभ्यां व्यपदेशाच्च नेतरौ ॥ २९५ ॥
तथा * रूपोपन्यासाच्च दृश्यत्वादिगुणः परः ॥
‡ वैश्वानरः परं ब्रह्म तत्साधारणशब्दतः ॥ २९६ ॥
विशेषाच्च परं ब्रह्म जाठराग्न्यादिकं नहि ॥
× स्मर्यमाणं चानुमानं स्यादितः परमेश्वरः ॥ २९७ ॥
वैश्वानरश्च न परः ‖ शब्दादिभ्यस्तु जाठरः ॥
तथा ह्यंतः प्रतिष्ठानादिति चेन्न तथापरः ॥ २९८ ॥
तत्र दृष्ट्युपदेशाच्च संभवात्पुरुषः परः ॥
अधीयते स एषोऽग्निरिति वाजसनेयिनः ॥ २९९ ॥
उक्तेभ्य एव हेतुभ्यो न † भूताग्निर्न देवता ॥
वैश्वानरोऽत्र एवात्र पर एवेति निश्चितः ॥ ३०० ॥
£ साक्षादप्यविरोधं च जैमिनिर्मन्यते परे ॥
¶¶ अभिव्यक्तेराश्मरथ्य इति प्राह परं शिवम् ॥ ३०१ ॥
$ अनुस्मृतेर्बादरिश्च @ संपत्तेरिति जैमिनिः ॥
तथाहि दर्शयत्येनं परं वैश्वानरं शिवम् ॥ ३०२ ॥
‡§ आमनन्ति तथाचार्या एनमस्मिन्पुरातनम् ॥
जाठराग्निविशिष्टं च वैश्वानरमुमापतिम् ॥ ३०३ ॥
सर्ववेदान्तवाक्येषु प्रायेणोपासनं परम् ॥
ब्रह्मोपासनमित्येव निश्चितं श्रुतिसूत्रयोः ॥ ३०४ ॥
शिवलिंगादृते ब्रह्मशब्दवाच्यं नहि श्रुतम् ॥

---

‡¶ मुंडकोपनिषदि मुं.–२ खं.–१ मं.–२.
¶ ब्र. सू.–२२ अ.–१ पा.–२. § ब्रह्मसूत्र–२३ अ.–१ पा.–२. * ब्रह्मसूत्र–२४ अ.–१ पा.–२.
‡ ब्रह्मसूत्र–२५ अ.–१ पा.–२. × ब्र. सू.–२६ अ.–१ पा.–२. ‖ ब्र. सू. २७ अ. १ पा. २.
† ब्र. सू.–२८ अ.–१ पा.–२. £ ब्र. सू.–२९ अ.–१ पा.–२. ¶¶ ब्र. सू.–३० अ.–१ पा.–२.
$ ब्र. सू.–३१ अ.–१ पा.–२ @ ब्र. सू.–३२ अ.–१ पा.–२. ‡§ ब्र. सू.–३३ अ.–१ पा.–२.

व्या०— "§अनवस्थितेरसंभवाच्च नेतरः" यदुक्तं छायात्मा जीवो वा अक्षिस्थ इति तन्न । अनवस्थितेर्न तावच्छायात्मनश्चक्षुहि नित्यमवस्थानं संभवति यदैव कश्चित्पुरुषश्चक्षुरासीदते तदा चक्षुषि पुरुष छाया दृश्यते नान्यथा "×य एषोऽक्षणि पुरुष" इति च सन्निधानात् स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति न हि स उपासनाकाले छायाकारं कंचित्पुरुषं चक्षुःसमीपे सन्निधाप्योपास्यत इति शक्यते वक्तुमसंभवाच्च । तस्मिन्नमृतत्वादीनां गुणानां तथा जीवस्यापि साधारणे कृत्स्नशरीरेंद्रियसंबंधे चक्षुष्येवावस्थितत्वं न शक्यं वक्तुं नापि परब्रह्मण इव तस्य कचिदपि चक्षुःस्थानं व्यपदिश्यते । हृदयायतनत्वं हि व्यपदिश्यते । जीवात्मन्यमृतत्वादीनां गुणानां संभवस्तुल्यस्तस्माच्चक्षुष्यान्तरः पुरुषः परमात्मैवेति स्थितं । "‖अंतर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्" "*य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽतरोयमयति" इत्युपक्रमः श्रूयते तत्र संशयः किमन्तर्यामिशब्देन "‡यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यम् पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मान्तर्याम्यमृत" इत्यादि तत्र "अधिदैवतमधिलोकमधिभूतमधियज्ञमध्यात्म चांतरवस्थितोऽयमयितान्तर्यामी श्रूयते । तत्र संशयः किमन्तर्यामिशब्देन प्रधानं गृह्यते जीवो वा ब्रह्मैवेति किं तावत्प्राप्तं प्रधानमिति तस्य सर्वकारणत्वेन सर्वविकारानुप्रवेशेन यमयितृत्वसंभवात् । जीवो वा तस्य भोक्तृत्वेन भोग्यजातं प्रति यमयितृत्वोपपत्तेर्न तु परमात्मा । तस्याकार्यकारणत्वेन यमयितृत्वासंभवादिति प्राप्ते ब्रूमः । स एवान्तर्यामी कस्मात्तद्धर्मव्यपदेशात् । परस्य सर्वकारणत्वेन सर्वनियन्तृत्वोपपत्तेस्तस्य कार्यकारणत्वेऽपि सर्वशक्तित्वेन नियन्तृत्वसंभवात् । यदुक्तं प्रधानमंतर्यामिशब्देन गृह्यत इत्यत्राह । "@न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च" न च स्मार्तं प्रधानमंतर्यामि । कुतः अतद्धर्माभिलापात् । "+अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मंताऽविज्ञातो विज्ञाता" इति अदृष्टत्वादयो यद्यपि प्रधाने संभवन्ति तथापि दृष्टत्वादयः प्रधाने न संभवन्ति तस्याचेतनत्वात् । यदुक्तं जीवोऽतर्यामीति तत्राह "††उभयेऽपि हि भेदेनैनमधीयते" नेत्यनुवर्तते शारीरश्च नान्तर्यामी यस्मादुभयेऽपि हि काण्वमाध्यन्दिनाश्चैनमशारीरमंतर्यामिणो भेदेनाधीयंते । "§यो विज्ञाने तिष्ठन्" इति काण्वाः । "¶य आत्मनि तिष्ठन्" इति माध्यन्दिनाः तस्मादंतर्यामी पर एवेति सिद्धं । "**अदृश्यत्वादिगुणको धर्मोक्तेः" । अथर्वणे श्रूयते । "%अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा" इति तत्र संशयः किं प्रधानमदृश्यत्वादिगुणं उत जीवः अथ वा परमात्मेति तत्र पूर्वः पक्षः प्रधानमेवादृश्यत्वादिगुणं तस्याप्यदृश्यत्वादिगुणसंभवात् "£यथा पृथिव्यामोषधयः संभवन्ति" इत्यादिना अचेतनानामेव पृथिव्यादीनां दृष्टान्तत्वेनोपादानाच्च । यदा योनिशब्दो निमित्तवाची तदा जीवः स्यात् । तस्यापि चेतनत्वेन भोक्तृत्वेन च निमित्तत्वसंभवादिति । सिद्धान्तस्तु अदृश्यत्वादिगुणकः

× छांदोग्योपनिषदि प्र.–४ खं.–१५ मं.–१. * बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–१.
‡ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–३ + बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–२३.
§ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–२२ ¶ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–२७.
% मुंडकोपनिषदि मुं.–१ खं.–१ मं.–५. £ मुंडकोपनिषदि मुं.–१ खं.–१ मं.–७.
§ ब्र. सू.–१८ अ.–१ पा.–२. ‖ ब्र. सू.–१९ अ.–१ पा.–२. @ ब्र. सू.–२० अ.–१ पा.–२.
** ब्र. सू.–२२ अ.–१ पा.–२. †† ब्र. सू.–२१ अ.–१ पा.–२

परमेश्वर एव भवितुमर्हति । कुतः धर्मोक्तेः "% यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप" इति परमेश्वरलिंगस्य प्रतिपादनान्न प्रधानं जीवो वा तयोः सर्वज्ञत्वाभावात् । "# विशेषणभेदव्यपदेशाभ्यां च नेतरौ" इतश्च न प्रधानं जीवो वा न भूतयोनिः कस्माद्विशेषणभेदव्यपदेशाभ्यां । "@ दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यंतरो ह्यजः ॥ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतःपर" इति विशेषणान्न प्रधानं । अक्षरात्परत इति परतः अक्षरात् जीवात् पर इति भेदेन व्यपदेशान्न जीवः । अक्षरशब्दस्य जीववाची । "* क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इति श्रुत्यंतरात् । "£ कूटस्थोऽक्षर उच्यत" इति स्मृतेश्च । "$ रूपोपन्यासाच्च" । इतश्च भूतयोनिः परमात्मा यत्पारमेश्वरं रूपमुपन्यस्यति । "§ अग्निर्मूर्धा चक्षुषि चंद्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति । इदं च परमेश्वररूपत्वेन श्रुत्यंतरप्रसिद्धं नचेदं प्रधानस्य जीवस्य वा संभवति । प्रधानस्य सर्वभूतान्तरात्मत्वासंभवाज्जीवस्य सर्वात्मकत्वायोगाच्च । परस्य तु सर्वकारणत्वादुपपद्यते तस्माददृश्यत्वादिगुणकः परमेश्वर एवेति सिद्धं । "†† वैश्वानरः साधारणशब्दविशेषात्" "‡ को न आत्मा किं ब्रह्मेति" "× आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति" उपक्रम्य द्युचंद्रसूर्यवाय्वाकाशजलपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिंदया च मूर्धादिभागमुपदिश्याम्नायते । "† यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्" इति तत्र संशयः किं वैश्वानरशब्देन जाठराग्निरुपदिश्यते किंवा भूताग्निरुत तदभिमानी देवताऽऽहोस्वित् शारीरः इति तत्र पूर्वः पक्षः । जाठराग्निरेव कुतः तत्र वैश्वानरशब्दस्य प्रसिद्धेः । "¶ अयमग्निर्वैश्वानरो योऽयमंतःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति । यमेतत्कर्णावपिधाय श्रुणोति । स यदोत्क्रमिष्यन् भवति । नैनं घोषं श्रुणोति" ॥ अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यत इति प्रयोगात् भूताग्निर्वा सामान्येनापि लोके वैश्वानरशब्ददर्शनात् तदभिमानिनी देवता वा । "वैश्वानरस्य सुमतौ स्यामेवेति" दर्शनात् ब्रह्मात्मशब्दौ गुणवृत्त्या योजनीयौ । यदि वा बृंहणत्वाद्ब्रह्म आप्नोतीत्यात्मेति व्युत्पत्त्या कया चिदपेक्षया योजनीयं । वैश्वानरशब्दप्रसिद्धेर्बलीयस्त्वादात्मशब्दस्य मुख्यार्थाश्रयणेन जीवो गृहीतव्यः । वैश्वानरशब्दस्तु तत्र गौणः । तदुपकारकत्वादुदराग्नेर्जीवस्योपकारः प्रसिद्ध इति । सिद्धान्तस्तु वैश्वानरः परमात्मैव । कुतः साधारणशब्दयोर्विशेषात् । त्रयाणां जाठरभूताग्निदेवतानां साधारणो वैश्वानरशब्दः द्वयोर्जीवपरयोः साधारण आत्मशब्दः यद्यप्येकेनेतरस्य विशेषणादित्यर्थः । तथाच अग्न्यात्मा-

---

% मुंडकोपनिषदि मुं.–१ खं.–१ मं.–९. # ब्रह्मसूत्र–२३ अ.–१ पा.–२.
@ मुंडकोपनिषदि मुं.–२ खं.–१ मं.–२. * श्वेताश्वतरोपनिषदि अ.–१ मं.–१०.
$ ब्र. सू.–२४ अ.–१ पा.–२. § मुंडकोपनिषदि मु.–२ खं.–१ मं.–४.
†† ब्र. सु–२५ अ.–१ पा.–२. ‡ छांदोग्योपनिषदि प्र.–५ खं.–११ मं.–१.
× छांदोग्योपनिषदि प्र.–५ खं.–११ मं–६. † छांदोग्योपनिषदि प्र.–५ खं.–१८ मं.–१.
¶ बृहदारण्यकोपनिषदि अ.–७ ब्रा.–९ मं.–१. £ भगवद्गीतायां अ.–१५ श्लो.–१६.

द्युभयात्मकं ब्रह्म लभ्यते । तथा अन्योऽपीह विशेषाल्लभ्यते । येन पर एव गम्यते कोऽसौ । "£ मूर्धैव सुतेजा" इत्यादि अत्र हि द्युप्रभृतयः पृथिवीपर्यंता अवयवा उपदिष्टा वैश्वानरस्य ते च सर्वकारणत्वात् परमात्मनः संभवन्तीति नान्यस्य । "ℬ को न आत्मा किं ब्रह्मेति चोपक्रमः एवं हास्य सर्वे पाप्मानः प्रदूयन्त" इत्युपसंहारश्च । परमात्मपरिग्रहेऽप्युक्ते नान्यत्र तस्मात्परमात्मैव वैश्वानरः । "*स्मर्यमाणमनुमानं स्यादिति" । इतश्च परमेश्वर एव वैश्वानरः । यस्मात्परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्धेति रूपं स्मर्यते । "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम" इति । "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चंद्रसूर्यौ च नेत्रे दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिंत्यात्मा सर्वभूतप्रणेतेति" । तत्स्मर्यमाणं रूपं मूलभूताः श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरत्वमनुमानलिंगं स्यादितीतिशब्दो हेतौ यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मैव । "† शब्दादिभ्योऽतःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैतमधीयते" । आह न परमेश्वरो वैश्वानरः । कुतः शब्दादिभ्योऽतःप्रतिष्ठानाच्च । वैश्वानरशब्दस्तावत्परमेश्वरे न संभवति । जाठरे रूढत्वात् । तथा स एषोऽग्निर्वैश्वानर इत्यग्निशब्देऽपि भूताग्नौ रूढत्वात् । आदिशब्दात् । "× हृदयं गार्हपत्य" इति त्रेताग्निकल्पनं चाहुत्यधिकरणत्वं च परमेश्वरे न संभवति । "स यो हैनमग्निं वैश्वानरं पुरुषविधं पुरुषेऽतः प्रतिष्ठितं वेद" इति अन्तःप्रतिष्ठितत्वं चेश्वरे न संभवति । कस्मान्नेश्वरो वैश्वानरः किंत्वन्य एवेति चेन्नायं विरोधः । तथा दृष्ट्युपदेशात् । जाठराग्निविशिष्टस्य परमेश्वरस्योपासनोपदेशात् । "¶प्राणशरीरो भारूप" इत्यादिवन्न तु केवलस्य जाठरस्योपासनं भवति । द्युमूर्धत्वादेरसंभवात् । अपि चैनं पुरुषमधीयंते वाजसनेयिनः "स एषोऽग्निर्वैश्वानरः यत्पुरुषः" । "स यो हैनमेवाग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति न हि केवलस्य जाठराग्नेः पुरुषत्वं पुरुषविधत्वं वा संभवति । "§अत एव न देवताभूतं च" अत एव उक्तेभ्यो हेतुभ्यो न देवतानामपि भूताग्निर्वैश्वानरः । "£साक्षादप्यविरोधं जैमिनिः" पूर्वं जाठराग्निविशिष्टस्योपास्यत्वकथनेन वैश्वानरादिशब्दविरोधः परिहृतः । इदानीं जैमिनिस्तु केवलस्य परमेश्वरस्योपास्यत्वेऽप्यविरोधं मन्यते । नात्र वैश्वानरशब्दो रूढः । किं तु यौगिकः । विश्वश्चायं नरश्च सर्वात्मकत्वात्सर्वेषां वा नरः सर्वभूतान्तरात्मत्वात् । विश्वेव नरा अंशभूता अस्येति विश्वानर एव वैश्वानरः स्वार्थे तद्धितः राक्षसवायसादिवत् । अग्निशब्दश्चाग्रणीत्वयोगादीश्वरेऽप्यविरुद्धः । आभिमुख्येन विचित्रं जगन्निर्मिते अभिमतश्चासौ विमानश्च मानरहितश्चाभिविमान इति मानश्चापीश्वरे संभवति । गार्हपत्यादिकल्पनमाहुत्यधिकरणत्वकल्पनं च वैश्वानरविद्यांगत्वेनोपदिष्टमित्यविरोधः । कथं तर्हि प्रादेशमात्रश्रुतिस्तत्राह । "$अभिव्यक्तेरित्याश्मरथ्यः" अपरिमितोऽपीश्वरः उपासकानामनुग्रहाय प्रादेशपरिमाणोऽभिव्यज्यते । प्रादेशेष्वेव हृदयादिषु विशेषेणाभिव्यज्यत इति प्रादेशमात्रश्रुतिरुपपद्यत इत्याश्मरथ्यो मन्यते । "%अनुस्मृतेरिति बादरिः" प्रादेशमात्रहृदयस्थेन मनसाऽनुस्मर्यते । तेन प्रादेश-

£ छांदोग्योपनिषदि प्र.–५ खं.–१८ मं.–२. ℬ छांदोग्योपनिषदि प्र.–५ खं.–११ मं.–१.
* ब्र. सू.–२६ अ–१ पा.–२. † ब्र. सू.–२७ अ.–१ पा.–२.
× छांदोग्योपनिषदि प्र.–५ खं.–१८ मं.–२. § ब्र. सू.–२८ अ.–१ पा.–२.
¶ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–२. £ ब्र. सू.–२९ अ.–१ पा.–२.
$ ब्र. सू.–३० अ.–१ पा.–२. % ब्र. सू.–३१ अ.–१ पा.–२.

मात्र इत्युच्यते । यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् प्रादेशमात्रत्वेन वाऽयमनुस्मरणीयः । प्रादेशमात्रश्रुत्यर्थवत्त्वायेति बादरिराचार्यो मन्यते । "‖संपत्तेरिति जैमिनिस्तथा हि दर्शयति" संपत्तिनिमित्ता प्रादेशश्रुतिरिति जैमिनिराचार्यो मन्यते किं स्वबुद्ध्या नेत्युच्यते तथा हि समानप्रकरणे वाजसनेयिब्राह्मणं द्युलोकप्रभृतीन् वैश्वानरावयवान्यथाक्रमं मूर्धप्रभृतिषु देहावयवेषु संपादयत्प्रादेशमात्रतां संपत्तिं दर्शयति प्रादेशमात्रमिह वै देवाः सुविदिताः अभिसंपन्नास्तथा तु वा एनान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति सहोवाच स ह उवाच मूर्धानमुपदिशन्नुवाच एवावतिष्ठन्वैश्वानर इति चक्षुष्युपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मात्मा वैश्वानर इति मुखमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति चुबुकमुद्दिश्यन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति चुबुकमित्यधरं मुखफलकमुच्यते तस्मात्संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते । कथं तर्हि पुरुषेऽतःप्रतिष्ठितत्वं । तत्राह "†आमनन्ति चैनमस्मिन्" आमनंति । परमेश्वरमूर्धादिचुबुकान्तराले संपद्यमानं पुरुषविधमस्मिन्पुरुषेऽतःप्रतिष्ठितमिति वाजसनेयिनः । मूर्धानमुपदिशन्नुवाच इत्याद्युक्त्वाऽनंतरमेतत्पठ्यते । "पुरुषविधं पुरुषेऽतःप्रतिष्ठितमिति" नह्यत्र पुरुषेऽतःप्रतिष्ठितं वेदेति जाठराग्न्यभिप्रायेणोच्यते तस्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं तर्हि यत्प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वकल्पितं तदभिप्रायेणोच्यते । पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं" वेदेति यथा वृक्षेषु शाखां प्रतिष्ठितां पश्यति तद्वत् अस्य विलापेक्षयान्तरिति तस्माद्वैश्वानरः परमात्मैवेति सिद्धम् । प्रथमाध्याये द्वितीयोऽयं पादो वृत्तः ॥ श्रीः श्रीः ॥

‖ ब्र. सू.–३२ अ.–१ पा.–२. † ब्र. सू.–३३ अ.–१ पा.–२.




॥ श्रीगणेशाय नमः ॥

# अथ प्रथमाध्याये तृतीयः पादः

मू०— § द्युभ्वाद्यायतनं ब्रह्म प्रधानं वेति संशयः ॥ ३०५ ॥
किं तावत्प्राप्तमधुना प्रधानमिति कश्चन ॥
सेतुश्रुतेः पारवत्वादपारं ब्रह्म नाभवत् ॥ ३०६ ॥
स्वशब्दाद्धि परं ब्रह्म न प्रधानादिकं भवेत् ॥
तस्य * मुक्तोपसृप्यत्वं द्युभ्वाद्यायतनस्य हि ॥ ३०७ ॥
तत्प्रधानस्य केनापि तद्धर्मो नैव निश्चितः ॥

व्या०— "§द्युभ्वाद्यायतनं" अर्थांतरमिति तत्र पूर्वः पक्षः। प्रधानमेव तस्य हि स्वविकारस्य हि स्वविकारस्य द्युभ्वादेरायतनं भवति न परः सेतुश्रुतेः "पारवान् सेतुर्लोकेऽवगतः न ब्रह्मपारवदनंतमपारमिति श्रवणात्। यद्वा जीवः "स्वशब्दात्" इति सूत्रात्। "† यस्मिन् द्यौः पृथिवी चांतरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ अमृतस्यैष सेतुः" इति श्रूयते। अथर्वणे तत्र संशयः। किमेतद्द्युभ्वाद्यायतनं ब्रह्म उतार्थान्तरमिति तत्र पूर्वः पक्षः। प्रधानमेव तस्य हि स्वविकारस्य हि स्वविकारस्य द्युभ्वादेरायतनं भवति। न परः। सेतुश्रुतेः। पारवान् सेतुर्लोकेऽवगतः। न ब्रह्म पारवत्। "¶ अनंतमपारं" इति श्रवणात्। यद्वा जीवो द्युभ्वाद्यायतनं तस्यापि स्वकर्मणा द्युभ्वाद्युत्पादकत्वात् तस्यात्मत्वाच्चेति। सिद्धान्तस्तु परं ब्रह्मैव द्युभ्वाद्यायतनं तस्माच्छब्दादात्मशब्दान्नहि प्रधाने मुख्य आत्मशब्दो भवति। नापि जीवस्य मुख्यं द्युभ्वाद्यायतनत्वं च सेतुश्रुतिविरोधः विदारकत्वेन सेतुसामान्यात्सेतुशब्दोपपत्तेः नहि प्रधानादावपि मुख्यमेव सेतुत्वं मृद्दार्वादिमये जलविदारके हि सेतुत्वं मुख्यमिति। "* मुक्तोपसृप्यव्यपदेशाच्च" यत्तच्च परं ब्रह्मैव द्युभ्वाद्यायतनं यत्तस्य मुक्तोपसृप्यत्वं व्यपदिशति। नच प्रधानादेर्मुक्तोपसृप्यत्वमवगम्यते॥

मू०— ‡ नानुमानमतच्छब्दाद्द्युभ्वाद्यायतनं परः ॥ ३०८ ॥

व्या०— "‡नानुमानमतच्छब्दात्" अनुमानं न द्युभ्वाद्यायतनं। यथाहि ब्रह्मणः प्रतिपादक आत्मादिशब्दः श्रूयते। नैवं प्रधानस्य वाचकः कश्चिच्छब्दः श्रूयते। प्रत्युत तद्विपरीत एव शब्दः श्रूयते। "£यः सर्वज्ञः स सर्ववित्" इति नहि प्रधानस्याचेतनस्य सर्वज्ञत्वं संभवति। "प्राणभृच्च" अत एव सर्वज्ञत्वश्रुतेरेव प्राणभृज्जीवोऽपि द्युभ्वाद्यायतनं। न पृथग्योगकरणमुत्तरार्थम्॥

मू०— × तद्भेदव्यपदेशाच्च द्युभ्वाद्यायतनं परः ॥

---

§ ब्र. सू.-१ अ.-१ पा.-३. * ब्र. सू.-२ अ.-१ पा.-३.
† मुंडकोपनिषदि मुं.-२ खं.-२ मं.-५. ¶ बृहदारण्यकोपनिषदि अ.-४ ब्रा.-४ मं.-१२.
‡ ब्र. सू.-३ अ.-१ पा.-३. £ मुंडकोपनिषदि मुं.-१ खं.-१ मं.-९.
× ब्र. सू.-४ अ.-१ पा.-३.

व्या०— "¶¶भेदव्यपदेशाच्च" इतश्च जीवो न द्युभ्वाद्यायतनं "× यतस्तमेवैकं जानथात्मानं" इति ज्ञातृज्ञेयत्वेन भेदं व्यपदिशति श्रुतिस्तथा । "* अक्षरात्परतः पर" इति "¶ जुष्टं यदा पश्यत्यन्यमीशं" इति च ॥

मू०— तथा §† प्रकरणाच्चापि द्युभ्वाद्यायतनं परः ॥ ३०९ ॥

व्या०— "§† प्रकरणाच्च" प्रकरणं चेदं परमात्मनः कस्मिन्भवे विज्ञाते सर्वमिदं विज्ञातमित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपक्रमात् । ब्रह्मणश्च सर्वोपादानतया अनन्यत्वेन ब्रह्मविज्ञानात् सर्वविज्ञानोपपत्तेर्जीवस्य त्वनुपादानत्वात् । तदृज्ञानात् सर्वज्ञानासंभवात् ॥

मू०— तथा £ स्थित्यदनाभ्यां च द्युभ्वाद्यायतनं परः ॥

व्या०— "£स्थित्यदनाभ्यां च" इतश्च न जीवः यत्कारणं द्युभ्वाद्यायतनं प्रकृत्य मंत्रः पठ्यते । "§ दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठित" इत्यप्राकृतलोके ईश्वरस्य "‡ मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ये हृदयं संनिधाय" इति जीवस्य हृदये स्थितिर्निर्दिश्यते । "† द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति कर्मफलभोक्ता जीवो निर्दिश्यते । अनश्नन्नन्योऽभिचाकशीतीति तत्साक्षी परमेश्वरः प्रकृते निर्दिश्यते । अत एव । "$ जुष्टं यदा पश्यत्यन्यमीशं" इति "$ वीतशोक" इत्युत्तरमंत्रेऽपि तावेव जीवेशौ निर्दिश्येते तस्मादपि पर एव द्युभ्वाद्यायतनं नान्य इति सिद्धं ॥

मू०— @ तद्भूमा संप्रसादादध्युपदेशात्परो ध्रुवं ॥ ३१० ॥
%% भूमा धर्मोपपत्तेश्च सर्वज्ञत्वादिकः परः ॥

व्या०— "@भूमा संप्रसादादध्युपदेशात्" । "‖ भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास" इत्यत्र "§‡ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमिति" श्रूयते । तत्र संशयः किं प्राणो भूमा स्यादुत परमेश्वर इति तत्र प्राण इति । कुतः अस्मिन्प्रकरणे यद्यदर्थान्तरमुच्यते तत्तत्प्रश्नपूर्वकमेवोच्यते । "*¶ अस्ति भगवो नाम्नो भूय" इति । "§§ वाग्वावनाम्नो भूयसीति" । "‡§ अस्ति भगवो वाचो भूय इति" । "†$ मनोवाववाचो भूय" इति "नैवमस्ति प्राणाद्भूय" इति । प्रश्नः नाप्यधःप्राणाद्भूय इति प्रतिवचनं

---

¶¶ ब्र. सू.–४ अ.–१ पा.–३.
× मुंडकोपनिषदि मुं.–२ खं.–२ मं.–५. * मुंडकोपनिषदि मुं.–२ खं.–१ मं.–२.
¶ मुंडकोपनिषदि मुं.–३ खं.–१ मं.–२. §† ब्र. सू.–५ अ.–१ पा.–३. £ ब्र. सू.–६ अ.–१ पा.–३
§ मुंडकोपनिषदि मुं.–२ खं.–२ मं.–७. ‡ मुंडकोपनिषदि मुं.–२ खं.–२ मं.–७.
† मुंडकोपनिषदि मुं.–३ खं.–१ मं.–१. $ मुंडकोपनिषदि मुं.–३ खं.–१ मं.–२.
@ ब्र. सू.–७ अ.–१ पा.–३. %% ब्र. सू.–८ अ.–१ पा.–३.
‖ छांदोग्योपनिषदि प्र.–७ खं.–२३ मं.–१. §‡ छांदोग्योपनिषदि प्र.–७ खं.–२४ मं.–१.
*¶ छांदोग्योपनिषदि प्र.–७ खं.–१ मं.–५. §§ छांदोग्योपनिषदि प्र.–७ खं.–२ मं.–१.
‡§ छांदोग्योपनिषदि प्र.–७ खं.–२ मं.–२. †$ छांदोग्योपनिषदि प्र.–७ खं.–३ मं.–१.

वा दृश्यते । तस्मात्प्राण एव भूमा सर्वात्मत्वं च प्राणस्य प्राणो वापिते इत्यादिना दर्शित एवेति पूर्वः पक्षः । सिद्धान्तस्तु भूमा पर एव । कुतः संप्रसादादध्युपदेशात्प्राणाद्युपर्युपदेशादित्यर्थः । न चासिद्धिः । "* तं चोद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापन्हुवीत" इति प्राणदर्शिनोऽतिवादित्वमुक्त्वा । "§ एष तु वा अतिवदति यस्सत्येनातिवदति" इति तुशब्देन प्राणाद्यतिवादित्वं व्यावर्त्य सत्यादिक्रमेण भूमानमवतारयन्भूम्नः प्राणादर्थांतरत्वं दर्शयति । न च सर्वात्मकत्वं ब्रह्मणोऽन्यत्र मुख्यं संभवति । "§* धर्मोपपत्तेश्च" इतोऽपि भूमा पर एव कुतः "¶ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति" स्वमहिमप्रतिष्ठितत्वं स एवाधस्तादित्यादिनाभिधीयमानं सर्वगतत्वं सर्वात्मकत्वमित्येवमादयो धर्मा ब्रह्मण्येवोपपद्यन्ते । नान्यत्र । तस्मात्परमेश्वर एव भूमा ॥

मू०— ‖ अम्बरान्तधृतेर्ब्रह्म ह्यक्षरं परिगीयते ॥ ३११ ॥
% तस्याः प्रशासनाभावात्सा चांबरधृतिर्न च ॥
$ तदन्यभावव्यावृत्तेरक्षरं ब्रह्म केवलं ॥ ३१२ ॥
हृदंबुजे परो ध्येयो जन्मकर्मनिवृत्तये ॥
यत्तारकं परं ब्रह्म दहराकाशमध्यगं ॥ ३१३ ॥
तल्लिंगं बहिरन्विष्य लिंगमूर्तौ निवेश्य च ॥
तद्धि स्वांगाविनाभूतमुपास्यं शुद्धमानसैः ॥ ३१४ ॥
इदमेव हि वेदान्ते सर्वत्र प्रतिपादितम् ॥
ॐतद्ब्रह्मेत्यादिवाक्यैर्निश्रितं ब्रह्म धारणम् ॥ ३१५ ॥

व्या०— "‖ अक्षरमंबरान्तधृतेः" "† एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति । अस्थूलमनण्वन्हस्वमदीर्घमलोहितमस्नेहमच्छायमित्यादि" श्रूयते । तत्र संशयः । किमक्षरशब्देन प्रणव उच्यते । किं प्रधानमुत जीवः अहो परमात्मेति किंतावत्प्राप्तं प्रणव इति । कुतः अक्षरसमाम्नाय इत्यादौ अक्षरशब्दस्य वर्णेषु रूढिदर्शनात् । "‡ ओमितीदं सर्वं" इत्योंकारस्य सर्वात्मकत्वश्रवणात् यद्वा प्रधानं जीवो वा तयोरपि न क्षरतीत्यक्षरशब्दसंभवात् प्रधानस्योपादानतया सर्वात्मकत्वात् जीवस्य भोक्तृतया सर्वनिमित्तत्वाच्च । एवं प्राप्ते ब्रूमः । अक्षरं परमं ब्रह्मैव । कुतः अंबरान्तधृतेर्न ह्याकाशान्तस्य समस्तस्य जगतः विधारणमोक्षाकारस्याक्षरमात्रस्य संभवति । ओंकार एवेदं सर्वं" इति श्रुतिश्च सर्वात्मकत्वब्रह्मवाचकत्वेन स्तुतिपरा । यत्तु प्रधानस्याप्युपादानत्वाद्द्युधारणं संभवति । इति तत्राह "%सा च प्रशासनात्" सा चांबरधृतिर्नोपादानतयाऽधिकरणत्वात् । किंतु राजादिवत् प्रशासनत्वात्तथाहि श्रूयते । "× एतस्याक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत" इत्यादि न हि प्रधान-

* छांदोग्योपनिषदि प्र.–७ खं–१५ मं–४. § छांदोग्योपनिषदि प्र.–७ खं.–१६ मं.–१.
§* ब्र. सू.–८ अ.–१ पा.–३. ¶ छांदोग्योपनिषदि प्र.–७ खं.–२४ मं.–१.
‖ ब्र. सू.–९ अ.–१ पा.–३. % ब्र. सू.-१० अ.–१ पा.-३. $ ब्र. सू.–११ अ.–१ पा.–३.
† बृहदारण्यकोपनिषदि अ.–५ ब्रा.–८ मं.–८. ‡ तैत्तिरीयोपनिषदि वल्ली–१ अनु.–८ मं.–१.
× बृहदारण्यकोपनिषदि अ–५ ब्रा.–८ मं.–८.

स्याचेतनस्य प्रशासनं संभवति । अत एव न जीवोऽप्यक्षरशब्दालंबनः तस्य सर्वज्ञस्य सर्वशक्तेर्जगत्प्रशासनासंभवात् । "‡ अन्यभावव्यावृत्तेश्च" इतश्चाक्षरं ब्रह्मैव । कुतः अन्यभावव्यावृत्तेः अन्यस्य भावोऽन्यभावः तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरित्येवं हि श्रूयते । "£ अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मंत्र विज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मंतृ" इत्यादि नह्यक्षरादेरचेतनस्य द्रष्टृत्वं संभवति ॥ न वा जीवस्य प्रतिशरीरं भिन्नस्य द्रष्टृन्तरप्रतिषेधः संभवति । अथवा स्थूलमित्यादिना सर्वस्मात्स्थूलादेः प्रपंचाद्भिन्नत्वप्रतीतेर्न प्रणवाद्यक्षरं । किंतु ब्रह्मैवेति सिद्धं ॥

मू०— † तदीक्षति ब्रह्मणोऽत्र व्यपदेशात्परः शिवः ॥
नेतरस्य हृदाकाशे समुपास्यत्वमिष्यते ॥ ३१६ ॥
सर्वसूत्रेषु तद्ब्रह्म श्रुतिस्वारस्ययोगतः ॥ ३१७ ॥
दहरकमलमध्ये ब्रह्म धार्यं यदुक्तं सकलकलिनिवृत्त्यै पाशविच्छित्तये च ॥
विधिहरिमुखदेवाः सर्वदा तत्स्वरूपाः पतिभजनसुतृप्ताः पारमुत्तीर्य मुक्ताः ॥३१८॥
हृदंबुजे तिष्ठति यस्य लिंगं विचार्यमस्यास्ति न शास्त्रमन्यत् ॥
लिंगांगयोरैक्यमवाप्य शुद्धः साक्षाच्छिवोऽसौ सकलैश्च वंद्यः ॥ ३१९ ॥
अलं शंकरभक्तानामन्यशास्त्रावलोकनैः ॥
आगंतव्याग्रहारस्य पदवीश्रवणेन किम् ॥ ३२० ॥
अक्षरं प्रणवं ब्रह्म हृदयाब्जे विचार्यते ॥
किं ध्येयं किं सदा पूज्यं प्रधानं जीव एव वा ॥ ३२१ ॥
इति संदिह्य सर्वत्र सिद्धान्ते ब्रह्म केवलं ॥
उपास्यमिति निर्णीतं पुनः संदिह्यतेऽथ यत् ॥ ३२२ ॥
बुद्धिदार्ढ्याय तत्सर्वमन्वेष्टव्यं मनीषिभिः ॥

व्या०— "† ईक्षति कर्मव्यपदेशात्सः" । "§ एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीति" प्रकृतिः श्रूयते । "* यः पुनरेतं त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति" प्रश्नोपनिषदि श्रूयते । तत्र संशयः । जीवो ज्ञेयत्वेनोपदिश्यते । उत परमिति । तत्र एकतरमन्वेतीत्युपक्रमादन्याध्यवसायः । अथ वा । "* स सामभिरुन्नीयते ब्रह्मलोकमिति" । लोकान्तरप्राप्तिफलश्रवणाज्जीव एवेति प्राप्ते ब्रूमः । स पर एव ध्येयः । कुतः । ईक्षतिकर्मव्यपदेशात् । "* स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति इंद्रियादिभ्यः पराज्जीवघनाज्जीवसंघात् परं पुरुषमीक्षत इति जीवभिन्नस्य परमेश्वरस्य ईक्षणकर्मत्वं व्यपदिशति । ईक्षणध्यानयोश्च कार्यकारणभूतयोरेकविषयत्वमावश्यकं । अत ईक्षणकर्मभूतः परमेश्वर एव इह ध्येय-

‡ ब्र. सू.–११ अ.–१ पा.–३.
£ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–८ मं.–११. † ब्र. सू.–१२ अ.–१ पा.–३.
§ प्रश्नोपनिषदि प्र.–५ मं.–२. * प्रश्नोपनिषदि प्र.–५ मं.–५.

त्वेनोपदिश्यते । परंपुरुषशब्देन प्रत्यभिज्ञानाच्च । तस्मात्पर एव ध्येयः । लोकप्राप्तिफलकत्वं च प्रणवप्रतीकालंबनत्वादीश्वरोपासनस्याप्युपपन्नं । तस्मात्पर एव ध्येयः ॥

मू०— * दहर उत्तरेभ्यश्चेत्युपास्यः परमेश्वरः ॥ ३२३ ॥

व्या०— "*दहर उत्तरेभ्यः" "§ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतर-आकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं" इति श्रूयते । तत्र संशयः । योऽयं दहर-पुंडरीके आकाशस्तस्मिन्यदन्तरन्वेष्टव्यत्वेनोपदिश्यते तत्किं जीव अहोस्वित्परमात्मेति । किंताव-त्प्राप्तं जीव इति । तस्यैव पुरः स्वामित्वात् । कर्मार्जितत्वाच्छरीरस्य हृदयायतनत्वात् । "† स वा एष आत्मा" इति श्रुतेः । तस्य वालाग्रमात्रोपमितस्य दहरायतनोपपत्तेश्च । न तु सर्वगतस्य स्वमहिम-प्रतिष्ठितस्य ब्रह्मणो दहरायतनत्वं युक्तं । एवं प्राप्ते ब्रूमः । अंतरुपास्यः परमेश्वर एव कुतः उत्त-रेभ्यो वाक्यशेषगतेभ्योऽयं । "‡ यावान्वायमाकाशस्तावानित्यन्तरेव समाहितं" इत्यन्ते हृदयपुंडरी-कस्य तदन्तर्वर्तिन आकाशस्य च अल्पत्वात् । तदन्तः किं वर्तते यदुपासितव्यं स्यादित्याशंक्य यावान् प्रसिद्धः आकाशः अंतर्हृदय आकाशे वर्तते सोऽपि तावानिति दहरायतनत्वप्रयुक्तं । तस्याह । अणु-व्यावर्त्य द्यावापृथिव्यादिसमस्तं जगत् वर्तत इत्युक्तं । न चैतद्ब्रह्मणोऽन्यस्याणोर्जीवस्य संभवति । तथा "¶ एष आत्माऽपहतपाप्मा" इत्यादिकं जीवस्य न संभवति ॥

मू०— § तथा हि गतिशब्दाभ्यां लिंगं दृष्टं च यत्परे ॥
ततोऽपि हृत्पुंडरीके समुपास्यः परः शिवः ॥ ३२४ ॥
उत्तरेभ्यश्च हेतुभ्यो यद्धतिः प्रतिपाद्यते ॥
संध्यावंदनवन्नित्यं निश्चितो वेदशास्त्रयोः ॥ ३२५ ॥
धारणं दहराकाशे यावज्जीवं सुनिश्चितं ॥

व्या०— "§गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च" इतोऽपि दहर उपास्यः शिवो गतिशब्दाभ्यामुपा-स्यतया प्रकृतेरहरहःप्रजानां सुषुप्तौ गतिं दर्शयति । "× एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्येतं ब्रह्मलोकं न विंदन्तीति" तथा हि सुषुप्तौ प्रजानां गमनं । श्रुत्यन्तरे । "ब्रह्मणि दृष्टं प्राज्ञेनात्मना संपरिष्वक्ते सति संपद्य न विदुः" इत्यादौ तदेव च गमनमुपास्यस्य ब्रह्मत्वे लिंगं ब्रह्मलोकशब्दश्च ब्रह्मैव लोको ब्रह्मलोक इति ब्रह्मत्वं गमयति । ननु ब्रह्मणो ब्रह्मलोक इति सत्यलोक एवोच्यत इति चेन्न । न हि प्रजानां प्रत्यहं कमलासनलोकगमनं क्वचिच्छ्रुत्यंतरदृष्टं हि ब्रह्मणि गमनं । श्रुत्यंतरे । ब्रह्मलोकशब्दस्य समानाधिकरणसमासे लिंगं दृष्टं च । श्रुत्यंतरे ब्रह्मलोकशब्दो ब्रह्मण्येव । "‖ एष ब्रह्मलोकः सम्राडिति होवाच" इत्यादौ ॥

---

* ब्र. सू.–१३ अ.–१ पा.–३.
§ छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–१.
† छांदोग्योपनिषदि प्र.–८ खं.–३ मं.–३.
‡ छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–३.
¶ छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–५.
§ ब्र. सू.–१४ अ.–१ पा.–३.
× छांदोग्योपनिषदि प्र.–८ खं.–३ मं.–२.
‖ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–३२.

मू०— × उपलब्धेर्महिम्नोऽस्य धृतेरस्मिंस्तदिष्यते ॥ ३२६ ॥
"% प्रसिद्धेश्च" हृदाकाशे ब्रह्म धार्यं परात्परं ॥
£ इतरस्य परामर्शात्स एष इति चेन्नहि ॥ ३२७ ॥
असंभवात्परं ब्रह्म धार्यं ध्येयं हृदंबुजे ॥

व्या०— "× धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" इतश्च ब्रह्मैव दहर उपास्यः । यत्कारणं । "* अथ य आत्मा स सेतुर्विधृतिरिति" श्रूयते । विधृतिरिति विधारयितात्तिचः कर्तरि स्मरणात् अयं च महिमा ब्रह्मण्येवोपलभ्यते । "§ एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः" "¶ एष सेतुर्विधरणः एषां लोकानां" इत्यादौ "%प्रसिद्धेश्च" । इतोऽपि दहर उपास्यः परमेश्वर एव श्रुत्यंतरप्रसिद्धेः । "† दहरं विपाप्मं परवेश्मभूतं यत्पुंडरीकं पुरमध्यसंस्थं । तत्रापि दहरं गगनं विशोकस्तस्मिन्यदंतस्तदुपासितव्यम् । यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वर" इत्यादौ । "£ इतरपरामर्शात्स इति चेन्नासंभवात्" "$ अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच" इत्यत्र जीवपरामर्शात् स इति चेज्जीव एवोपास्यः । प्रसादशब्दस्य सुषुप्त्यवस्थावाचकस्य तदवस्थावति जीवे प्रवृत्तेरिति चेन्न असंभवात् । अपहतपाप्मत्वादीनां जीवेऽसंभवात् ॥

मू०— ‡ आविर्भूतस्वरूपस्तु सोत्तराच्चेत्तथा हृदि ॥ ३२८ ॥
ꣻ अन्यार्थश्च परामर्शः स एव हृदयांबुजे ॥
§$ अल्पश्रुतेरिति यदि तदुक्तं श्रुतिसूत्रयोः ॥ ३२९ ॥
@ अनुकृतेस्तस्य चात्रा *§ प्यपि च स्मर्यते श्रुतौ ॥
श्रुतिसूत्रन्यायभंग्या निश्चितं लिंगधारणम् ॥ ३३० ॥
धृतेर्वाचनिको योऽर्थः सूत्रेषु प्रतिपादितः ॥
वाच्यलिंगं हृदाकाशे नित्यं तद्धारणं हि यत् ॥ ३३१ ॥
एभिः सूत्रैः सदा ब्रह्म धर्तव्यं हृदयांबुजे ॥
तदेव हि परं स्थानं निर्णीतं श्रुतिसूत्रयोः ॥ ३३२ ॥

व्या०— "‡ उत्तराच्चेदाविर्भूतस्वरूपस्तु" ननु कथं जीवेऽसंभवः उत्तरस्मिन् प्राजापत्यवाक्ये । "$|| य

× ब्र. सू.–१५ अ.–१ पा.–३. % ब्र. सू.–१६ अ.–१ पा.–३. £ ब्र. सू.–१७ अ.–१ पा.–३
* छांदोग्योपनिषदि प्र.–८ खं.–४ मं.–१. § बृहदारण्यकोपनिषदि अ.–५ ब्रा.–८ मं.–९.
¶ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–२२. † महानारायणोपनिषदि अनु.–१२.
$ छांदोग्योपनिषदि प्र.–८ खं.–३ मं.–४. ‡ ब्र. सू.–१८ अ.–१ पा.–३. @ ब्र. सू.–२१ अ.–१ पा.–३
ꣻ ब्र. सू.–१९ अ.–१ पा.–३. §$ ब्र. सू.–२० अ.–१ पा.–३. $|| छांदोग्योपनिषदि प्र.–८ खं.–७ मं.–१.
*§ ब्र. सू.–२२ अ.–१ पा.–३.

आत्मा अपहतपाप्मा" इत्यपहतपाप्मत्वादिगुणकमुपक्रम्य। "§एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्युक्त्वा "*य एष स्वप्ने महीयमानश्चरति" "† तद्यत्रैतत्सुप्तः। समस्तः संप्रसन्नः स्वप्नं न विजानाति" इति तस्यैवावस्थात्रयसंबंधमुक्त्वा। "§एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्युक्त्वा। एवमेव "$एष संप्रसादो अस्माच्छरीरात् समुत्थाय परंज्योतिः" इति शरीरात्समुत्थितस्य परंज्योतिःप्राप्त्यभिधानात् जीवत्वनिश्चय इति चेन्न। तत्र हि जीवस्य परंज्योतीरूपसंपन्नस्य मुक्तस्य यदाविर्भूतं स्वरूपं तदेवापहतपाप्मेत्यनेनोपन्यस्तं। न तु देह एवावस्थितस्य जीवस्य। तथाहि वक्ष्यति पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बंधविपर्ययौ देहयोगाद्वा सोऽपीति कथं तस्यैष संप्रसाद इति परामर्शस्तत्राह "¶अन्यार्थश्च परामर्शः" न हि जीवपरामर्शो जीवस्वरूपविवक्षया तदुपास्यत्वविवक्षया वा कथं तर्हि ब्रह्मस्वरूपविवक्षया कथं एष संप्रसादोऽस्माच्छरीरादिति। यत्परंज्योतिरुपसंपद्य जीवेऽपहतपाप्मत्वादिकं निष्पद्यते। तत्तादृशं परंज्योतीरूपं अपहतपाप्मत्वादिगुणकं ब्रह्मैवोपास्यमिति यदुक्तं दहरायतनस्य ब्रह्मणोऽनुपपन्नमित्यत्राह। "ꙮअल्पश्रुतेरिति चेत्तदुक्तं" सर्वगतस्यापि ब्रह्मण उपासनार्थं देशविशेषपरिकल्पनमित्युक्तं। अर्भकौकस्त्वादित्यत्र एवं वा किं दहराकाशो जीवः परो वेति संशये अल्पश्रुतिजीव इति प्राप्ते उत्तरेभ्यो हेतुभ्यः पर एवेति सिद्धान्तः। "@अनुकृतेस्तस्य च" इतश्च दहर उपास्यः यत उपास्यं परंज्योतिरिति ज्योतिःशब्देन परामृश्य तदुपसन्नस्य जीवस्य तदनुसारिरूपं दर्शयति। स्वेन रूपेणेत्यादि। तदेतद्वक्ष्यति। ब्राह्मजीवस्य तदुपन्यासादिति। "% अपि च स्मर्यते" दहरपुंडरीकान्तर्वर्तितया उपास्यं ब्रह्मेति स्मर्यते। "अथ वा परमात्मानं परमानंदविग्रहं॥ गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिंगलं॥ ब्रह्म ब्रह्मपुरे गार्गि दहराब्जस्वमध्यमे"॥ इत्यधिकरणांतरं वा अनुकृतेस्तस्य च॥ "‡ न तत्र सूर्यो भाति तमेव भान्तमनुभाति सर्वं" इत्यत्र संशयः किं तेजोधातुरिह प्रतिपाद्यते। किं वेश्वर इति। तेजसि दृष्टे सति तेजोऽन्तरे अभानं। यत्तेजो धात्वंतरं तस्मादनुकाराच्च गम्यते। सूर्यादितेजसि सति नक्षत्रादितद्वत्तत्र सत्यज्ञानादिकं न भातीत्युक्त्वा। अग्न्यादिभानप्रतिबंधकं तेजोंतरमेवेति। तमेव भांतमित्यनुकारोऽपि सदृशयोरेव दृष्टः। तस्मात्तेजोधातुरिति प्राप्ते ब्रूमः। पर एव प्रतिपाद्यः कुतः अनुकृतेरनुभावाच्च हि तेजोधातुमनुतेजोंऽतरं भाति। तस्मात्तत्रेति न सतिसप्तमी। किंतु विषयसप्तमी। तथा च यस्मिन्विषये सूर्यादयो भासकत्वेन भान्ति। यस्य भासा सर्वमिदं भाति स परमेश्वर एव न हि तेजोधातो रसादिभासकत्वसंभवः। "%अपि च स्मर्यते"। "‖न तद्भासयते सूर्यो न शशांको न पावक" इति॥

मू०— £ तच्छब्दात्प्रमितं ब्रह्म दहरे दिव्यमद्भुतम्॥
पूज्यं ध्येयं धार्यमेव जन्मकर्मनिवृत्तये॥ ३३३॥

§ छांदोग्योपनिषदि प्र.–८ खं.–१० मं.–४. * छांदोग्योपनिषदि प्र.–८ खं.–१० मं.–१.
† छांदोग्योपनिषदि प्र.–८ खं.–११ मं.–१. $ छांदोग्योपनिषदि प्र.–८ खं.–३ मं.–४.
¶ ब्र. सू.–१९ अ.–१ पा.–३. ꙮ ब्र. सू.–२० अ.–१ पा.–३. @ ब्र. सू.–२१ अ.–१ पा.–३.
% ब्र. सू.–२२ अ.–१ पा.–३. ‡ श्वेताश्वतरोपनिषदि अ.–६ मं.–१४.
‖ भगवद्गीतायां अ.–१५ श्लो.–६. £ ब्र. सू.–१३ अ.–१ पा.–३.

@ यन्मनुष्याधिकारत्वाच्छास्त्रस्य हृदपेक्षया ॥
तत्तु ध्येयं हृदि सदा लिंगं विष्ण्वादिपूजितम् ॥ ३३४ ॥
यथा मनुष्यैर्धर्तव्यं लिंगं देवैस्तथैव हि ॥
अधिकारं देवतानां मनुते § बादरायणः ॥ ३३५ ॥
तदुपर्यपि देवानां विष्ण्वादीनां च संभवात् ॥
तेषां विग्रहवत्त्वाच्च ह्यधिकारोऽत्र निश्चितः ॥ ३३६ ॥

व्या०--- "% शब्दादेव प्रमितः" "‖ अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उश्वः" इति कठवल्लीषु श्रूयते तत्र संशयः । योऽयमंगुष्ठमात्रः पुरुषः स किं जीवः । उत परमात्मा तत्र अंगुष्ठमात्रः पुरुषो जीव एव । तस्य ह्याराग्रमात्रोपमितस्यांगुष्ठमात्रत्वं युज्यते नापरिमेयस्य ब्रह्मणः एवं प्राप्ते ब्रूमः प्रमितः अंगुष्ठपरिमितः परमात्मैव कुतः शब्दादीशानश्रुतेरेव ईशानशब्दस्य ब्रह्मवाचकत्वान्नात्र भूतभव्येशितृत्वं लिंगाद्ब्रह्मनिर्णयः । किंत्वभिधानश्रुतेरेवेत्येवकाराभिप्रायः । नन्वपरिमेयस्य ब्रह्मणः कथमंगुष्ठमात्रत्वं तत्राह "@हृद्यपेक्षया तु मनुष्याधिकारत्वात्" । अप्रमेयोऽपीश्वरः हृद्युपास्यमानः उपासकानुग्रहाय हृदये प्रकाशते तदपेक्षयेयमंगुष्ठमात्रश्रुतिः । ननु प्रतिप्राणिभेदं हृदयस्यानवस्थितपरिमाणत्वात्कथं तदपेक्षयांगुष्ठमात्रत्वं । तत्राह मनुष्याधिकारत्वादिति । मनुष्याधिकारत्वाच्छास्त्रस्योपासकमनुष्यहृदयस्यांगुष्ठमात्रत्वान्न विरोधः । "§तदुपर्यपि बादरायणः संभवात्" मनुष्यहृदयापेक्षयांगुष्ठमात्रश्रुतिर्मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्ता । तत्प्रसंगाद्देवतानामप्यधिकारप्रदर्शनायेदमधिकरणमारभ्यते । तदुपर्यपि मनुष्याणामुपरिष्टाद्ये वर्तन्ते देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कुतः संभवात् संभवति च तेषामपवर्गविषयमर्थित्वं संभवति च सामर्थ्यं मन्त्रार्थवादपुराणेभ्यो विग्रहवत्वाभ्युपगमाद्विद्वत्वमपि संभवत्येव । "† अग्ने नय सुपथा राये अस्मान्विश्वानि देववयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनोभूयिष्ठां ते नम उक्तिं विधेम" इत्यादिषु च विद्वत्वाभ्युपगमात् । प्रतिषेधश्च शूद्रादिवद्देवतानां न क्वाप्युपलभ्यते । लिंगमपि देवतानामधिकारसूचकमुपलभ्यते । "‡ तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" "¶ एकं शतं हि वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास" इत्यादि ॥

मू०— §§ नानेकप्रतिपत्तेर्हि विरोधः कर्मणीति चेत् ॥
दर्शनाद्देवतानां च ह्यधिकारः सुनिश्चितः ॥ ३३७ ॥
विरोधो दुष्परिहरः ‡‡ शब्दस्य प्रचुरस्य च ॥
इति चेन्नातः प्रभवाच्छ्रुत्या स्मृत्या च नैव तत् ॥ ३३८ ॥

---

@ ब्र. सू.–२४ अ.–१ पा.–३. § ब्र. सू.-२५ अ.–१ पा.–३.
% ब्र. सू.–२३ अ.–१ पा.–३. ‖ कठवल्ल्युपनिषदि अ.–२ वल्ली–४ मं.–१३.
† ईशावास्योपनिषदि मं.–१८. ‡ बृहदारण्यकोपनिषदि अ.–३ ब्रा.–४ मं.–१०.
¶ छांदोग्योपनिषदि प्र.–८ खं.–११ मं.–४. §§ ब्र. सू.–२६ अ.–१ पा.–३.
‡‡ ब्र. सू.–२७ अ.–१ पा.–३.

§ अत एव च नित्यत्वं वेदतद्धर्मयोर्ध्रुवम् ॥
¶ समाननामरूपत्वादुत्तरा सृष्टिरेव च ॥ ३३९ ॥
आवृत्तावीश्वराणामप्यविरोधोऽत्र निश्चितः ॥
दर्शनाच्च स्मृतेश्चैव ह्यविरोधोऽत्र निश्चितः ॥ ३४० ॥
एतत्सूत्रेषु देवानां मनुष्याणां च निश्चितः ॥
इतःपरं स्त्रीशूद्राणामधिकारोऽस्ति वा नवा ॥ ३४१ ॥
इति संदिह्यते तेषां जैमिनिर्मन्यते मुनिः ॥
‖ असंभवान्नाधिकारं मध्वादिषु तथा भवेत् ॥ ३४२ ॥

व्या०— "× विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" देवतानां विग्रहत्वाभ्युपगमे ऋत्विगादिवत् कर्मसु संनिधानेन भवितव्यं । न च यागादिषु । ऋत्विगादिवद्विग्रहवती काचिदुपलभ्यते । न वा एकस्या देवतायाः युगपद्बहुयागेषु सन्निधानं संभवति । अतः कर्मणि विरोधापत्तेर्नै विग्रहत्वं देवतानामिति नायं विरोधः । कुतः अनेकप्रतिपत्तेः । कथं गम्यते दर्शनात् । "§ कति देवा याज्ञवल्क्येत्युपगम्य त्रयश्च त्री च शतात्रयश्च त्री च सहस्रा इत्याद्युक्त्वा महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति," एकैकस्यानेकरूपतां दर्शयति । ततश्च बहुयागेषु सन्निधानमदृश्यत्वं चांतर्धानशक्तियोगादुपपद्यते । अपि च उद्दिश्य त्यागत्वकर्मवद्यागस्य एकमेव स्वस्थानस्थितां देवतामुद्दिश्य युगपद्बहुभिस्स्वस्वद्रव्यत्यागसंभवाच्च । "* शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यां" देवतानां विग्रहत्वाभ्युपगमे कर्मविरोधपरिहारेऽपि शब्दविरोधो दुष्परिहरः । औत्पत्तिकं हि शब्दार्थयोः संबंधमाश्रित्य वेदस्यापौरुषेयतया प्रामाण्यं व्यवस्थापितं । विग्रहवत्वे च देवतानां विग्रहस्य सादितया तत्संबंधस्यापि देवदत्तादिशब्दवत् संकेतत्वावश्यंभावेन वेदस्यापौरुषेयतया प्रतिपादितं प्रामाण्यं न स्यादिति चेन्नायं दोषः । कुतः अतः प्रभावात् विग्रहस्य सादित्वेऽपि न शब्दार्थसंबंधस्य सांकेतिकत्वं । अत एव हि वाचकाच्छब्दात्पूर्वसिद्धादुपस्थितं वाच्यं देवताविग्रहादि सृज्यते । यथा कुलालादिना घटशब्दाद्बुद्ध्युपस्थितं घटादि सृज्यते । तद्वत्कथं गम्यते प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथा च श्रुतिः "† स भूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत स सुवरिति व्याहरत् स दिवमसृजत" इत्यादि एत इति वै प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिंदव इति पितृन्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रीमभिसौभगेति अन्याः प्रजा इति स्मृतिरपि "अनादिनिधना विद्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय" इति । पुराणं च । "नाम रूपं च भूतानां कर्मणां च प्रवर्तनं । वेदशब्देऽभ्युपादौ निर्ममे स महेश्वर" इति । "§ अत एव च नित्यत्वं" वेद समस्तस्य जगतः वेदस्य नित्यत्वं । कर्तुरस्मरणाच्च । अतोऽपौरुषेयत्वेन वेदस्य प्रामाण्यं सुस्थितमेव । "¶ समाननामरूपत्वाच्चावृत्तावप्यवि-

§ ब्र. सू.-२८ अ.-१ पा.-३. ¶ ब्र. सू.-२९ अ.-१ पा.-३. ‖ ब्र. सू.-३० अ.-१ पा.-३.
× ब्र. सू.-२६ अ.-१ पा.-३. § बृहदारण्यकोपनिषदि अ.-५ ब्रा.-९ मं.-१.
* ब्र. सू.-२७ अ.-१ पा.-३. † तैत्तिरीयब्राह्मणे कां.-२ प्र.-२ अनु.-४.

रोधो दर्शनात्स्मृतेश्च । अथापि स्याद्यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि सादत्येनोद्वेयरन्निरुद्धेरंश्च ततोऽभिधानाभिध्येयाभिधातृव्यवहाराविच्छेदात् व्यक्त्यनित्यत्वेऽप्याकृतेर्नित्यत्वात् । संबंधनित्यानित्यत्वे न विरोधः । शब्दे परिन्हीयते । यदा तु सकलत्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवंति चाव्हनवमिति श्रुतिस्मृतिवादा वदन्ति । तदा कथमविरोध इति तत्रेदमभिधीयते । समाननामरूपत्वादिति । तदापि संसारस्यानादित्वं तावदभ्युपगंतव्यं प्रतिपादयिष्यति चाचार्यः । संसारस्यानादित्वमुपपद्यते चाप्युपलभ्यते चेति अनादौ संसारमध्ये प्रलयेऽपि पूर्वकल्पसमाननामरूपामेवोत्तरां सृष्टिं करोति कथं गम्यते दर्शनात्स्मृतेश्चेति श्रुतेश्च स्मृतेश्चेत्यर्थः । श्रुतिस्तावत् । "† सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो सुवः" स्मृतिरपि "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ॥ शर्वर्यंते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतु लिंगानि नानारूपाणि पर्यये ॥ दृश्यन्ते तानि तान्येव तदाभावा युगादिषु । तथामिमानिनोऽतीताः स्तुल्यास्ते सांप्रतैरिह । देवादेवैरतीतैर्हि रूपैर्नामभिरेव चेति" ततश्च कल्पादौ प्रादुर्भवतां हिरण्यगर्भप्रभृतीनामीश्वरानुग्रहात्सुप्तप्रतिबुद्धन्यायेन कल्पान्तरव्यवहारोपपत्तिः । तथा च श्रुतिः । "¶ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य" इति "स्मरन्ति च शौनकादयः मधुच्छंदप्रभृतिभिर्दाशतधियो दृष्टा इति । अतश्च तुल्यनामरूपत्वात्कल्पांतरव्यवहारानुसंधानक्षमत्वाच्च ईश्वराणामावृत्तावपि महासर्गप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दविरोधः । "* मध्वादिष्वसंभवादनधिकारं जैमिनिः" यदुक्तमस्ति । देवतानामप्यधिकारः स इति तदाक्षिप्यते । देवतानामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् मध्वादिष्वसंभवात् । "× असौ वा आदित्यो देवमधु" इत्यादित्यव्यपाश्रयाप्युपासनानि श्रूयन्ते । तत्रादित्यादयः काननन्यानादित्यादीनुपासीरन् ॥

मू०— तत्र § ज्योतिषि भावाच्च देवानां नाधिकारिता ॥
अचेतनं मंडलं हि चेतनेन सुनिश्चितं ॥ ३४३ ॥
‡ बादरायण आचार्यो मन्यते देवतादिषु ॥
अधिकारं तथैवेति शूद्रादीनां न चाभवत् ॥ ३४४ ॥
संस्कारैः संस्कृता ये च ते सर्वेऽप्यधिकारिणः ॥
% तदनादरपाठाच्च सूच्यते तेष्वनादरः ॥ ३४५ ॥
‖ क्षत्रियत्वगतेश्चापि ** लिंगाच्चैत्ररथेन हि ॥
उत्तरत्र न तेषां तु संस्कारैर्वर्जनं यथा ॥ ३४६ ॥
क्षत्रियाणां च शूद्राणां त्रैवर्णिकनिरूपणम् ॥



† महानारायणोपनिषदि अनु.–१ मं.–१४. ¶ श्वेताश्वतरोपनिषदि अ.–६ मं.–१८.
* ब्र. सू.–३० अ.–१ पा.–३. × छांदोग्योपनिषदि प्र.–३ खं.–१ मं.–१.
§ ब्र. सू.–३१ अ.–१ पा.–३. ‡ ब्र. सू.–३२ अ.–१ पा.–३. % ब्र. सू.–३३ अ.–१ पा.–३.
‖ ब्र. सू.–३४ अ.–१ पा.–३. ** ब्र. सू.–३५ अ.–१ पा.–३.

व्या०— "† ज्योतिषि भावाच्च"। इतश्च न देवतानामधिकारः। यत्कारणमादित्यादयः शब्दात् ज्योतिर्मंडलादावचेतने प्रयुज्यन्ते। न तु विग्रहवद्देवतायां। न चाचेतनस्याधिकारोऽस्ति। "‡ भावं तु बादरायणोऽस्ति हि"। तु शब्दः पक्षं व्यावर्तयति बादरायण आचार्यो देवतानामप्यधिकारं मन्यते। यद्यपि ज्योतिर्मंडलादेरचेतनत्वान्नाधिकारं। तथापि तद्व्यतिरिक्ता विग्रहवती चेतना देवताऽस्त्येव मंत्रार्थवादेतिहासपुराणेभ्योऽष्टैश्वर्योपेताः समधिगम्यन्ते देवताः। न च मंत्रार्थवादादिप्रभवस्य ज्ञानस्य भ्रांतित्वं वदितुं शक्यं। कारणदोषबाधकप्रत्यययोरभावात्। त्रिविधा हि मंत्रार्थवादाः प्रमाणांतरविरुद्धार्थाः प्रमितार्था अविरुद्धार्थाश्चेति। यथा धूमादेवाग्निर्दिवा ददृशे नार्चिरिति "§ अग्निर्हिमस्य भेषजं" "पूत एव तेजस्व्यन्नाद इंद्रियाली पशुमान् भवान् भवति"। तत्र विरुद्धार्थेषु गुणवादोऽवतिष्ठते। तत्रापि पौर्वापर्यन्यायादेव गुणनिष्ठता प्रतीयते। अविरुद्धार्थेषु श्रूयमाणमेवावलंबनं युक्तं। ननु परार्थत्वादर्थवादानां श्रूयमाणार्थत्वं न संभवति। तदिदं समीक्षिताभिधानं न हि परार्थत्वं भ्रांतित्वप्रयोजकं कारणदोषो बाधकप्रत्ययश्चेत्युक्तं। न हि प्रयाजादीनां स्वरूपाभावं परार्थत्वादभ्युपगम्यते। तेनापि गर्भाधानादीनां विद्यमानस्यावहिस्वार्थता परता च न हि शशविषाणास्योभयं दृश्यते। अर्थवादेषु च प्रथमपदार्थप्रतीतिर्दृश्यते। ततो वाक्यार्थावगतिः। ततश्च क्रत्वर्थपुरुषार्थत्वोपयोगित्वाभावात्। पश्चाल्लक्षणया निंदा स्तुतिश्च प्रत्याय्यते। न हि प्रयोजनवदेव सन्न्याय्य इति वक्तुं शक्यं। तृणलोष्ठानां प्रयोजनरहितानामप्यबाधितप्रतीत्या सत्वदर्शनादतो विग्रहवत्वादिकं अर्थवादादिभिः प्रतीयमानं प्रमाणान्तराविरुद्धं प्रतीतिशरणैर्युक्तमभ्युपगन्तुं अपि च विधिभिरेव विग्रहवत्त्वं देवतानामपेक्षितमर्थवादेन समर्प्यते। एवं हि श्रूयते। "यस्यै व देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इति निरूपणस्य च नानुपपत्तेर्मंत्रार्थवादसमर्पितं रूपमाश्रयणीयं स्वर्गादिवन्न बुद्धिपरिकल्पितमित्यलमतिप्रसंगेन। यत्तु मध्वादिविद्यायामादित्यादीनामसंभव इति। तत्तथैवास्तु। न हि तावता सर्वथा सर्वत्रानधिकारः। न हि ब्राह्मणस्य राजसूयानधिकारे कर्मांतरे बृहस्पतिसवनादावनधिकारस्तस्मात्सिद्धं देवतानामधिकारित्वं। "* शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि" यथा "‡‡ तद्यो यो देवानां प्रत्यबुध्यत" इत्यादिलिंगाद्देवानामधिकारोऽस्तीत्युक्तं। तथा संवर्गविद्यायामधिकारिणो जानश्रुतेः "× अह हारे त्वा शूद्र" इति शूद्रशब्देन संबोधनादस्ति। शूद्रस्याप्यधिकार इति प्राप्ते ब्रूमः। नायं शूद्रशब्दो रूढः। किंतु यौगिकः। "$ कम्वर एनमेतत्सन्तं स युग्वानमिव रैक्कमात्थेति" अस्माद्धंसवाक्यादनादरं जानश्रुतेः शुगुत्पथे तया च स हर इत्वमभिदुद्राव स चात्मनः परोक्षज्ञातां ज्ञापयितुं शूद्रशब्देन शुचं सूचयति शुचमभिदुद्राव शुचौ वाक्ये त्वमभिदुद्रावेति वा शूद्र इति शूद्रशब्दस्य त्रैवर्णिकेऽपि वृत्तिसंभवात्। ननु रूढोऽर्थः कस्मान्नाद्रियते। तत्राह। "% क्षत्रियत्वावगतेश्च" "¶ उत्तरत्र चैत्ररथेन लिंगात्" जानश्रुतेर्जातिशूद्रत्वाभावाद्रूढेः संभवात्। क्षत्रियत्वेन योगाश्रवणात्कथं क्षत्रियत्वं गम्यते। उत्तरत्र चैत्ररथेन लिंगात्। संवर्गविद्यायामुत्तरत्र वाक्यशेषे

† ब्र. सू.–३१ अ.–१ पा.–३. ‡ ब्र. सू.–३२ अ.–१ पा.–३.
§ तैत्तिरीयसंहितायां कां.–७ प्र.–४ अनु.–१८. * ब्र. सू–३३ अ.–१ पा.–३.
‡‡ बृहदारण्यकोपनिषदि अ.–३ ब्रा.–४ मं.–१०.
× छांदोग्योपनिषदि प्र.–४ खं.–२ मं.–३. $ छांदोग्योपनिषदि प्र.–४ खं.–१ मं.–३.
% ब्र. सू.–३४ अ.–१ पा.–३. ¶ ब्र. सू.–३५ अ.–१ पा.–३.

चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिंगात् । एवं हि श्रूयते । "£ अथ ह शौनकं च । कापेयमभिप्रतारिणं च काक्ष्यसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इति कथमभिप्रतारिणश्चैत्ररथत्वं कापेये शौनकेन योगात् कापेययोगो हि चित्ररथस्यावगतः । एतेन चैत्ररथं कापेया अयाजयन्निति समानान्वयानां च प्रायेण समानान्वया एव याजका भवन्ति । तस्माच्चैत्ररथो नामैकः क्षत्रपतिर्जायतेति चैत्ररथस्य क्षत्रियत्वावगमात् तत्प्रायपाठाज्जानश्रुतिरपि क्षत्रिय इत्यवगम्यते । अर्थतोऽपि न शूद्रस्याधिकारः ॥

मू०— ‡ तदभावाभिलापाच्च संस्कारस्याभिमर्शनात् ॥ ३४७ ॥
† प्रवृत्तेस्तदभावस्य धारणे च तथेति चेत् ॥
× श्रवणाध्ययनार्थस्य प्रतिषेधात् % स्मृतेरपि ॥ ३४८ ॥
शूद्रादीनां नाधिकार इति सम्यक् सुनिश्चितः ॥
* कंपनाच्च परं ब्रह्म § ज्योतिर्ब्रह्मैव दर्शनात् ॥ ३४९ ॥
"$ आकाशोऽर्थांतरत्वादिव्यपदेशात्" परः स्मृतः ॥
"†† सुषुप्त्युत्क्रांत्योर्भेदेन" पर एवाभिधीयते ॥ ३५० ॥
अतः "‡‡ पत्यादिशब्देभ्यो" ब्रह्मलिंगं सनातनम् ॥
हृदंबुजे सदा धार्यं सदा पूज्यं मुमुक्षुभिः ॥ ३५१ ॥

व्या०— "‡ संस्कारपरामर्शात् तदभावाभिलापाच्च" विद्याप्रदेशेष्वधिकारिणः । संस्कारोपनयनं परामृश्यते "तं होपनिन्ये" इत्यादिर्भगवति होपससाद "¶ समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः" इति शूद्रस्य संस्काराभावोऽभिलप्यते "@ शूद्रश्चतुर्थो वर्ण एकजातिः" "‖ न शूद्रे पातकं किंचिन्न च संस्कारमर्हति" इति "† तदभावनिर्धारणे च प्रवृत्तेः" इतश्च न जातिशूद्रस्याधिकारः । यत्कारणं शूद्रत्वाभावावधारणेनैव विद्योपदेशाय प्रवृत्तिर्दृश्यते "$$ नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्येन सत्यादगा इति" । "× श्रवणाध्ययनार्थप्रतिषेधात्" "% स्मृतेश्च" इतश्च न जातिशूद्रस्याधिकारः । यत्कारणं शूद्रस्य वेदाध्ययनं वेदश्रवणं वेदार्थज्ञानं वेदार्थानुष्ठानं च प्रतिषेधति श्रुतिः । "§† अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणं पिद्युद्वा एतद् यत्श्मशानमयच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यं "$‡ उच्चारणे । जिव्हाच्छेदः धारणे शरीरच्छेदः ।" न शूद्राय दं दद्यादित्यर्थादनुष्ठानस्यापि प्रतिषेधः । तस्मान्नास्ति शूद्रस्याधिकार इति स्थितं "* कंपनात्" । कठवल्लीषु पठ्यते । "*§ यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतं महद्भयं वज्रमुद्यतं य एत-

---

£ छांदोग्योपनिषदि प्र.–४ खं.–१ मं.–५. ‡ ब्र. सू.–३६ अ.–१ पा.–३. % ब्र. सू.–३९ अ.–१ पा.–३.
† ब्र. सू.–३७ अ.–१ पा.–३. × ब्र. सू.–३८ अ.–१ पा.–३. $ ब्र. सू.-४२ अ.–१ पा.–३.
* ब्र. सू.–४० अ.–१ पा.–३. § ब्र. सू.–४१ अ.–१ पा.–३. ¶ प्रश्नोपनिषदि प्रश्न.–१ मं.–१.
†† ब्र. सू.–४३ अ.–१ पा.–३. ‡‡ ब्र. सू.–४४ अ.–१ पा.–३. $$ छांदोग्योपनिषदि प्र.–४ खं.–४ मं.–५.
@ गौतमधर्मे १०–५. ‖ मनुस्मृतौ अ.–१० श्लो.–१२६. *§ कठवल्ल्युपनिषदि अ.–२ वल्ली–६ मं.–२.
§† गौतमधर्मे १२–४. $‡ गौतमधर्मे १२–६.

द्विदुरमृतास्ते भवन्ति" इति तत्र किं प्राणशब्देन पंचवृत्तिप्राणोऽभिधीयते । एतद्ब्रह्मेति संशयः । तत्र प्रसिद्धे प्राण इति, तदधीनत्वाच्च । समस्तजगच्चेष्टाया एवं प्राप्ते ब्रूमः । ब्रह्मैवेति कुतः "§ कंपनात्" एजृकंपन इति स्मरणात् ब्रह्मणो हि जगत्कंपते । "* भीषाऽस्माद्वातः पवत" इति श्रुत्यंतरादिहापि । "** य एतद्विदुरमृतास्ते भवन्ति" इति तद्ज्ञानादमृतत्वाभिधानादित्यर्थः । न हि ब्रह्मज्ञानादन्यतोऽमृतत्वप्राप्तिरस्ति । तस्मात् ब्रह्मैव प्राणः "£ ज्योतिर्दर्शनात्" "¶ एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति श्रूयते । तत्र संशयः । किं ज्योतिःशब्दं न भौतिकं ज्योतिर्गृह्यते उत ब्रह्मेति प्रसिद्धे भौतिकं ज्योतिरिति प्राप्ते ब्रूमः । ब्रह्मैव ज्योतिः कुतः दर्शनात् । "† तं देवा ज्योतिषां ज्योतिः" इत्यादौ ज्योतिःशब्दस्य ब्रह्मणि दर्शनादिहापि । "† स उत्तमः पुरुष" इति ज्योतिःशब्दपरामृष्टस्योत्तमपुरुषत्वाभिधानेन ब्रह्मत्वाध्यवसायाच्च । तस्माज्ज्योतिर्ब्रह्मैव "‡ आकाशोऽर्थांतरत्वादिव्यपदेशात्" । "× आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति स्तूयते । तत्र संशयः । किं भूताकाशः एकः पर इति तत्र प्रसिद्धे भूताकाश इति प्राप्तं अवकाशदानेन तस्यापि नामरूपनिर्वाहसंभवादिति प्राप्ते ब्रूमः । आकाशः पर एव कुतः अर्थांतरत्वादिव्यपदेशात् । नामरूपान्तरानुप्रविष्टत्वव्यपदेशात् । आदिशब्देन ब्रह्मत्वामृतत्वादिकं गृह्यते । एतेभ्यो हेतुभ्यो ब्रह्मैवाकाश इति सिद्धं । "‖ सुषुप्त्युत्क्रान्त्योर्भेदेन" व्यपदेशादित्यनुवर्तते बृहदारण्यके श्रूयते । "% कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्युपक्रम्य बहुप्रपंचमात्मनिरूपणं । तत्किं जीवविषयमुतेश्वरविषयमिति संशयः । "योऽयं विज्ञानमयः प्राणेष्वित्यादि" लिंगाज्जीव इति प्राप्ते ब्रूमः । पर एवेहात्मा प्रतिपाद्यः "‖ सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्सुषुप्तौ तावत् "@ प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंच न वेद नांतरं" उत्क्रांतावपि "❀ प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् यातीति" जीवाद्भेदेन प्राज्ञस्येश्वरस्याव्यपदेशात् । "§‖ पत्यादिशब्देभ्यः" इतश्च पर एव प्रतिपाद्यः । यद्वा किमीश्वरो जीवादत्यंतमभिन्न एव उत भिन्नो वेति संशयः । प्राणेष्वित्युपक्रमादवस्थात्रयसंबंधाच्चाभिन्न एवेति प्राप्ते ब्रूमः । सुषुप्त्युत्क्रान्त्योर्भेदेनेश्वरस्य व्यपदेशात्पत्यादिशब्देभ्यश्च भिन्न एवेति सिद्धं ॥

मू०— शुद्धस्फटिकसंकाशं देवं निष्कलमव्ययम् ॥
कारणं सर्वलोकानां सर्वलोकमयं परम् ॥ ३५२ ॥
अंतर्बहिःस्थितं लिंगमणोरल्पं महत्परं ॥
भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् ॥ ३५३ ॥

---

§ ब्र. सू.–४० अ.–१ पा.–३. * तैत्तिरीयोपनिषदि वल्ली–२ अनु.–८ मं.–१.
** कठवल्ल्युपनिषदि अ.–२ वल्ली–६ मं.–२. £ ब्र. सू.-४१ अ.–१ पा.–३.
¶ छांदोग्योपनिषदि प्र.–८ खं.–१२ मं.–२. † बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–१६.
‡ ब्र. सू.–४२ अ.–१ पा.–३. × छांदोग्योपनिषदि प्र.–८ खं.–१४ मं.–१.
‖ ब्र. सू.–४३ अ.–१ पा.–३. % बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–६.
@ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३. मं.–२१. ❀ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–३५.
§‖ ब्र. सू.–४४ अ.–१ पा.–३.

ब्रह्मेंद्ररुद्रविष्ण्वाद्यैरपि देवैरगोचरम् ॥ वेदसारं च विद्वद्भिरगोचरमिति श्रुतम् ॥ ३५४ ॥
आदिमध्यान्तरहितं भेषजं भवरोगिणां ॥ शिवतत्त्वमिति ख्यातं शिवार्थं जगति स्थितम् ॥ ३५५ ॥
अव्यक्तं लिंगमाख्यातं सर्वतत्त्वैककारणम् ॥ अनाद्यनन्तं विश्वस्य यदुपादानकारणम् ॥ ३५६ ॥
तदेव मूलप्रकृतिर्धार्मिकी गगनात्मिका ॥ तत एव समुत्पन्नं जगदेतच्चराचरम् ॥ ३५७ ॥
अशुद्धं शुद्धवच्छुद्धं शुद्धाशुद्धं च यत्त्रिधा ॥ ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥ ३५८ ॥
भूतानि चेंद्रियैर्जाता लीयन्तेऽत्र शिवाज्ञया ॥ अत एव शिवो लिंगी लिंगमाज्ञापयेत्यतः ॥३५९॥
यत्तदेव ( यत्र तेन ) तदाज्ञातं कार्याय प्रभवेत्स्वतः ॥
ततो जातस्य विश्वस्य तत्रैव विलयो मतः ॥ ३६० ॥
अनेन लिंगता तस्य भवेन्नान्येन केनचित् ॥ लिंगं च शिवयोर्देहं ताभ्यां यस्मादधिष्ठितं ॥३६१॥
अतस्तत्र शिवः सांबो नित्यमेव समर्च्यते ॥ लिंगं वेदिर्महादेवी लिंगी साक्षान्महेश्वरः ॥ ३६२ ॥
तयोः संपूजनादेव स च सा च समर्चितौ ॥ न तयोर्लिंगदेहत्वं विद्यते परमार्थतः ॥ ३६३ ॥
ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकं ॥ तदप्यविदितं तावद्ब्रह्मणा विष्णुना तदा ॥ ३६४ ॥
रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतं ॥ तदा विभक्तमभवच्चतुर्थैकं यदाक्षरम् ॥ ३६५ ॥
अ,उ,मेति च मात्राभिः परस्ताच्चार्धमात्रया ॥ तत्राकाराश्रिते भागे परलिंगस्य दक्षिणे ॥ ३६६ ॥
उकारश्चोत्तरे तस्य मकारस्तस्य मध्यतः ॥ अर्धमात्रात्मको नादः श्रूयते लिंगमूर्धनि ॥ ३६७ ॥
विभक्तेऽपि तथा तस्मिन्प्रणवे परमाक्षरे ॥ विभागार्थं ततो देवौ न किंचिदवजग्मतुः ॥ ३६८ ॥
वेदात्मना तथाव्यक्तः प्रणवो विकृतिं गतः ॥ तत्राकारो ऋगभवदुकारो यजुरव्ययः ॥ ३६९ ॥
मकारः साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥ ऋगुपस्थापयामास समासात्स्वार्थमात्मनः ॥३७०॥
रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥ सृष्टिं लोकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययं ॥ ३७१ ॥
कलाध्वनि निवृत्तिं च वेद्यं ( सद्यं ) ब्रह्मसु पंचसु ॥
लिंगभागेष्वधोभागं बीजाख्यं कारणत्रये ॥ ३७२ ॥
चतुःषष्टिगुणैश्वर्यं बोध्यं यदणिमादिषु ॥ तदित्थमर्थैर्दशभिर्व्याप्तं विश्वमृचा जगत् ॥ ३७३ ॥
अथोपस्थापयामास स्वार्थं दशविधं यजुः ॥ सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ॥३७४॥
स्थितिं लोकेष्वंतरिक्षं विद्यातत्त्वेषु च त्रिषु ॥ कलाध्वनि प्रतिष्ठां च वामं ब्रह्मसु पंचसु ॥ ३७५ ॥
मध्यं च लिंगभागेषु योनिं च त्रिषु हेतुषु ॥ प्राकृतं च तथैश्वर्यं तस्माद्विश्वं यजुर्मयम् ॥ ३७६ ॥
अथोपस्थापयामास सामार्थं दशधाऽऽत्मनः ॥ तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियास्वपि ॥३७७॥
संहृतिं तु त्रिलोकेषु तत्त्वेषु शिवमुत्तमम् ॥ विद्यां कलामघोरं च घोरं ब्रह्मसु पंचसु ॥ ३७८ ॥
लिंगभागेषु पीठोर्ध्वं बीजिनं कारणत्रये ॥ पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ॥ ३७९ ॥
अथाथर्वाऽऽह नैर्गुण्यमर्थं प्रथममात्मनः ॥ ततो महेश्वरं साक्षान्मूर्तिष्वपि सदाशिवम् ॥ ३८० ॥

क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥ भूतानुग्रहणं चैव मुच्यन्ते येन जंतवः ॥ ३८१ ॥
लोकेष्वपि यतो वाचा निवृत्तमनसा सह ॥ तदूर्ध्वमुन्मना लोकात्सोमलोकमलौकिकम् ॥ ३८२ ॥
सोमस्सहोमया तत्र नित्यं निवसतीश्वरः ॥ तदूर्ध्वमुन्मना लोकाद्यं प्राप्य न निवर्तते ॥ ३८३ ॥
शान्तिं च शान्त्यतीतां च व्यापिकां वै कलास्वपि ॥ तत्पूरुषं तथेशानं तत्र ब्रह्मसु पंचसु ॥३८४॥
मूर्धानमपि लिंगस्य भागं भागेष्वनुत्तमम् ॥ तत्र लिंगे समाराध्यः केवलो निष्कलः परः ॥ ३८५॥
तत्त्वेष्वपि तथा विंदुस्ततः शक्तिस्ततः परम् ॥ तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः ॥ ३८६ ॥
कारणेषु क्रियातीतान्मायाविक्षोभकारणात् ॥ अनंताच्छुद्धविद्यायाः परस्ताच्च महेश्वरः ॥ ३८७ ॥
सर्वविद्येश्वराधीशात्तत्पराच्च सदाशिवात् ॥ सर्वमंत्रतनोर्देवाच्छक्तित्रयसमन्वितात् ॥ ३८८ ॥

पंचवक्त्राद्दशभुजात्त्यक्षात्सकलनिष्कलात् ॥
तस्मादपि तथाविंदो ( पराद्धिंदो ) रर्थेंदोश्च ततः परात् ॥ ३८९ ॥

ततः पराच्छिवाधीशान्नादाख्याच्च ततः परात् ॥ ततः परात्सुषुम्नेशाद्ब्रह्मरंध्रेश्वरादपि ॥ ३९० ॥
ततः परस्याः शक्तेश्च परस्ताच्छिवतत्त्वतः ॥ परमं कारणं साक्षात्स्वयं निष्कारणं शिवम् ॥३९१॥
कारणानां च धातारं ध्यातारं ध्येयमव्ययं ॥ हृदयाकाशमध्यस्थं परमात्मोपरि स्थितम् ॥३९२॥
सर्वैश्वर्येण संपूर्णं सर्वेश्वरमनीश्वरम् ॥ ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात् ॥ ३९३ ॥
अपराच्च पराच्चाद्यादविशुद्धाध्वगोचरात् ॥ तत्पराच्छुद्धविद्याद्यात्समनंतात्परात्परात् ॥ ३९४ ॥
परमं परमैश्वर्यमुन्मनोर्ध्वमनादि च ॥ अपरादपराधीनं निरस्तातिशयं स्थिरम् ॥ ३९५ ॥
इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः ॥ यस्माद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात् ॥ ३९६ ॥
ऋग्वेदः पुनराहेदं जगद्रूपं मयोच्यते ॥ येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः ॥ ३९७ ॥
यजुर्वेदोऽवदत्तद्वत्स्वप्नावस्था मयोच्यते ॥ भोग्यात्मना परिणता विद्या वेद्या यतो मयि ॥ ३९८ ॥
साम चाह सुषुप्त्याख्यं सर्वं सर्वं मयोच्यते ॥ ममार्थेन शिवेनेदं तामसेनाभिभूयते ॥ ३९९ ॥
अथर्वाऽऽह तुरीयाख्यं तुरीयातीतमेव च ॥ मयाऽभिभूयते तस्मादध्वातीतः परोऽस्म्यहं ॥ ४००॥
अध्वात्मकं तृतीयं तु शिवविद्यात्मसंज्ञिकम् ॥ तत्त्रैगुण्यं त्रयीसाध्यं शोध्यं पतिपदैषिणाम् ॥४०१॥
अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ॥ तदतीतं तु नैर्गुण्यादध्वनोऽस्य विशोधकम् ॥ ४०२ ॥
द्वयोः प्रमापको नादो नादान्तश्च मदात्मकः ॥ तस्मान्ममार्थस्वातंत्र्यात्प्रधानः परमेश्वरः ॥ ४०३ ॥
यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः ॥ समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते ॥ ४०४ ॥
सदर्थवाचकं तस्माल्लिंगमेव तदक्षरम् ॥ तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः ॥ ४०५ ॥
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ॥ वाच्यवाचकयोर्भेदो नात्यंतं विद्यते यतः ॥४०६॥
चिंतया रहितो रुद्रो वाच्योऽयं मनसा सह ॥ अप्राप्य तन्निवर्तन्ते वाच्यस्त्वेकाक्षरेण सः ॥४०७॥
एकाक्षरादकाराख्यादाद्या ब्रह्माभिधीयते ॥ एकाक्षरादुकाराख्याद्विद्याविष्णुरुदीर्यते ॥ ४०८ ॥

एकाक्षरान्मकाराख्याच्छिवो (त्कला) रुद्र उदाहृतः ॥
दक्षिणांगान्महेशस्य जातो ब्रह्माऽऽत्मसंज्ञिकः ॥ ४०९ ॥
वामांगादभवद्विष्णुस्ततो विद्येतिसंज्ञिकः ॥ हृदयादधिरुद्रोऽभूच्छिवस्य शिवसंज्ञकः ॥ ४१० ॥
सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ॥ संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥ ४११ ॥
तस्मात्त्रयस्ते कथ्यन्ते जगतः कारणत्रयम् ॥ कारणत्रयहेतुश्च शिवः परमकारणम् ॥ ४१२ ॥
अर्थमेनमविज्ञाय रजसा बद्धवैरयोः ॥ तयोर्मध्ये महालिंगं स्वयं तत्र समुत्थितं ॥ ४१३ ॥
एवमोमोमिति प्राहुर्यदिहोक्तमथर्वणम् ॥ ऋचो यजूंषि सामानि शाखाश्चान्यास्सहस्रशः ॥ ४१४ ॥
वेदेष्वेवं स्वयं वक्त्रैर्व्यक्तमर्थं वदत्स्वपि ॥ स्वप्नानुभूतमिव तत्ताभ्यामध्यवसीयते ॥ ४१५ ॥
तत्त्वप्रकाशकं लिंगं स्वयं तत्त्वं समुत्थितम् ॥ ततो लिंगस्य लिंगत्वं लिंगिनोऽपि च लिंगता ॥४१६॥
ततो विश्वस्य जगतो विशेषात्स्वात्मनोऽपि च ॥ उत्पत्तिविलयौ चैव याथार्थ्यं च षडध्वनां ॥४१७॥
निरुत्तरतरं ब्रह्म निष्कलं लिंगमैश्वरम् ॥ पशुपाशमयस्यास्य प्रपंचस्य सदा पतिं ॥ ४१८ ॥
अकुतोभयमत्यंतमवृद्धिक्षयमव्ययम् ॥ बाह्यमाभ्यंतरं प्राप्यं बाह्याभ्यंतरवर्जितम् ॥ ४१९ ॥
निरस्तातिशयं शश्वत् विश्वलोकविलक्षणम् ॥ अलक्षणमनिर्देश्यमवाङ्मानसगोचरम् ॥ ४२० ॥
प्रकाशैकरसं शांतं प्रसन्नं सततोदितं ॥ सर्वकल्याणनिलयं शक्त्या तादृशयाऽन्वितं ॥ ४२१ ॥
एवं लिंगस्य महिमा वेदान्तेषु प्रकाशितः ॥ तद्ज्ञात्वा हृदये धार्यं सामरस्यविधानतः ॥ ४२२ ॥
यो धत्ते लिंगमव्यक्तं स एव परमेश्वरः ॥ इति सूत्रेषु बहुषु तद्धारणमुदाहृतम् ॥ ४२३ ॥

प्रथमाध्याये तृतीयः पादो वृत्तः ॥

---

॥ श्रीगणेशाय नमः ॥

# अथ प्रथमाध्याये चतुर्थः पादः

प्रतिज्ञाय च जिज्ञासा लक्षणं ब्रह्मणः कृतम् ॥
तल्लक्षणं प्रधानेऽपि गतमित्यनुशंकितम् ॥ ४२४ ॥
अशब्दत्वेन तत्पूर्वं निराकृतमिदं पुनः ॥
आशंक्य ( अशक्त्या ) शब्दवत्त्वं हि निराकर्तुं प्रवर्तते ॥ ४२५ ॥
‡ आनुमानिकमित्यादि सूत्रं तस्यार्थनिर्णयः ॥
अनुमानेन निर्णीतं सांख्यादिभिरिहोदितम् ॥ ४२६ ॥
अव्यक्तं हि प्रधानं तदित्येकेषां श्रुतौ पुनः ॥
सांख्यप्रसिद्धमेवात्र पठ्यते महदित्यपि ॥ ४२७ ॥
इति चेन्न शरीरस्य ग्रहणात्तत्पदेन हि ॥
रथरूपकविन्यस्तमव्यक्तेनैव गृह्यते ॥ ४२८ ॥
शरीरमेवाव्यक्तं हि न प्रधानादिकं भवेत् ॥
※ तत्सूक्ष्मं तु तदर्हत्वात् स्थूलं यद्यपि नाभवत् ॥ ४२९ ॥
तथापि सूक्ष्मं तदिति निर्णीतं श्रुतिसूत्रयोः ॥

व्या०— "‡ आनुमानिकमप्येकेषामिति चेन्न शारीररूपकविन्यस्तगृहीतेर्दर्शयति च" । ब्रह्मजिज्ञासां प्रति प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम् । "† जन्माद्यस्य यत" इति तल्लक्षणं प्रधानेऽपि गतमित्याशंक्य तदशब्दत्वे निराकृतमत्र पुनः शब्दवत्वमित्याशंक्य निराक्रियते आनुमानिकमनुमाननिरूपितं प्राधान्येऽप्येकेषां कठानां शाखायां शब्दवदुपलभ्यते कारकेषु पठ्यते । "$ महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इति तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः सांख्यप्रसिद्धास्त एव तन्नामानस्तत्क्रमकाश्च पठ्यन्ते । तस्मात्सांख्यप्रसिद्धमेव प्रधानमव्यक्तशब्दवाच्यमिति चेन्न । शरीरस्य रथरूपकविन्यस्तस्य व्यक्तशब्देन ग्रहणं तेन चित्साद्दश्येन वस्त्वंतरे वस्त्वंतरकल्पनं रूपकं । "§ आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" । इति शरीरादे रथादिक्लृप्तिं दर्शयति अनंतरं च । "£ इंद्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" । इति चोक्त्वा । "¶ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इति पठ्यते । तत्र पूर्वस्यां रथादिरूपकल्पनायां

‡ ब्र. सू.–१ अ.–१ पा.–४. ※ ब्र. सू.–२ अ.–१ पा.–४. † ब्र. सू.–२ अ.–१ पा.–१.
$ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–११. § कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–३.
£ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–१०. ¶ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–९.

नैंद्रियादयो निर्दिष्टास्त एवेंद्रिययोः परा इत्यत्रापि गृह्यन्ते । प्रकृतहानाप्रकृतप्रक्रियापरिहाराय तत्रें-द्रियात्मनो बुद्धयः उभयत्र स्वस्वशब्देनैवोपात्ताः । अर्थास्तु ये ये तत्र विषयशब्देन निर्दिष्टास्ते गृह्यन्ते । शरीरमेकं परिशिष्टं । प्रकृतेषु तदिहाव्यक्तशब्देन गृह्यते । तदतिक्रमणेनासन्निहितप्रधानपरामर्शे माना-भावात् । ननु शरीरस्य व्यक्तत्वान्नाव्यक्तशब्देन ग्रहणं युक्तं तत्राह । "* सूक्ष्मं तु तदर्हत्वात्" । तु शब्दः शंकाव्यावृत्त्यर्थः । यद्यपि स्थूलं शरीरं तथापि सूक्ष्मशरीरमिह गृह्यते । तस्याव्यक्तशब्द-वाच्यत्वादजहल्लक्षणया अभेदोपचारेण वा स्थूलशरीरस्यापि ग्रहणे न दोषः । सर्वथा प्रधानं न गृह्यते । तस्य सन्निधानात् । ननु शरीरस्य कथमात्मनः परत्वमेवात्राह ॥

मू०— § अर्थवत्तदधीनत्वात्परत्वं तस्य गृह्यते ॥ ४३० ॥
$ ज्ञेयत्वावचनाच्चैव न प्रधानमिवाभवत् ॥
‡ वदतीति श्रुतिरपि प्रधानस्येति चेन्न हि ॥ ४३१ ॥
तथा प्रकरणात् प्राज्ञो न प्रधानं तथा भवेत् ॥
अग्निजीवेश्वराणां च † त्रयाणां प्रश्न इत्यपि ॥ ४३२ ॥
एवमेव ह्युपन्यासो ¶ महद्वच्च तथैव च ॥
न सांख्याभिमतं किंतु शरीरमिति निश्चितं ॥ ४३३ ॥

व्या०— "§ तदधीनत्वादर्थवत्" आत्मनो बंधमोक्षादिव्यवहारस्य शरीराधीनत्वाच्छरीरस्यात्मनः सकाशात्परत्वमर्थवत् । यथा अर्थाधीनत्वादिंद्रियव्यापारस्य इंद्रियेभ्यः परत्वमर्थानां तद्वत् । "$ ज्ञेय-त्वावचनाच्च" ज्ञेयत्वेन सांख्यैः प्रधानं स्मर्यते । विभूतिविशेषप्राप्तये न चेहाव्यक्तं । ज्ञेयत्वेनोच्यते । तस्मान्न प्रधानमिहाव्यक्तं "‡ वदतीति चेन्न प्राज्ञो हि प्रकरणात्" यदुक्तं ज्ञेयत्वावचनादिति तद-सिद्धं "× अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च । यदनाद्यनंतं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यत" इति शब्दादिविहीनस्य प्रधानस्य ज्ञेयत्ववचनादिति चेन्न । प्राज्ञो हीह ज्ञेयत्वेनोच्यते । कुतः प्रकरणात् । "‡$ पुरुषान्न परं किंचित्" इत्युपक्रमान्न प्रधानस्य प्रकरणमस्ति । "%† त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इतश्च नाव्यक्तं प्रधानं यतः त्रयाणामेवाग्निजीवपरमात्मना-मुपन्यासः प्रश्नस्यास्मिन्प्रदर्शयते । "% स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं" इत्यग्निप्रश्नः । "@ येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्ट-स्त्वयाऽहं वराणामेष वरस्तृतीय" इति जीवप्रश्नः "‡§ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृ-तादन्यत्र भूताच्च भव्याच्च यत्तत्पश्यति तद्वदेति" परमात्मप्रश्नः । प्रतिवचनमपि । "§* लोका-दिमग्निं तमुवाच तस्मै या इष्टः कायावतीर्वा यथा वा" इत्यग्निविषयं "§¶ योनिमन्ये प्रपद्यन्ते शरीर-

* ब्र. सू.–२ अ.–१ पा.–४. § ब्र. सू.–३ अ.–१ पा.–४. $ ब्र. सू.–४ अ.–१ पा.–४.
‡ ब्र. सू.–५ अ.–१ पा.–४. † ब्र. सू.–६ अ.–१ पा.–४. ¶ ब्र. सू.–७ अ.–१ पा.–४.
× कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं.–१५. %† ब्र. सू.–६ अ.–१ पा.–४.
% कठवल्ल्युपनिषदि अ.–१ वल्ली–१ मं.–१३. @ कठवल्ल्युपनिषदि अ.–१ वल्ली–१ मं–२०.
‡§ कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं–१४. §* कठोपनिषदि अ–१ वल्ली–१ मं–१५.
§¶ कठवल्ल्युपनिषदि अ.–२ वल्ली–५ मं.–७. ‡$ कठवल्ल्युपनिषदि अ.–१ व.–३ मं.–११.

त्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतं" इति जीवविषयं "¶ न जायते म्रियते वा विपश्चित्" इति परमात्मविषयं नैवं प्रधानस्य प्रश्नः । प्रतिवचनं वाऽस्ति । "† महद्वच्च" महच्छब्दो हि सांख्यैः प्रधानविकारे प्रयुक्तः । न तत्रैव वेदे प्रयुज्यते । "‡ बुद्धेरात्मा महान्पर" इत्यादौ महानित्यस्यात्मेति विवरणादेवमव्यक्तशब्दोऽपि न सांख्याभिमते प्रयुज्यते । किंतु शरीर एवेति स्थितम् ॥

मू०— $ अविशेषाच्च चमसमप्राधान्यमिहोच्यते ॥
|| उपक्रमात्तु यज्ज्योतिस्तु शब्दो ह्यवधारणे ॥ ४३४ ॥
तेजोवन्नप्रकृतिरप्यजाशब्देन गृह्यते ॥
तथाह्येकेऽधीयतेऽत्र प्रकृतिः शक्तिरेव च ॥ ४३५ ॥
× तत्कल्पनोपदेशाच्च मध्वादिवदिहोच्यते ॥
अविरोधो ह्यजाशब्दात्प्रकृतिः शक्तिरिष्यते ॥ ४३६ ॥
£ नानाभावातिरेकाच्च तन्न संख्योपसंग्रहात् ॥
तस्मान्न सांख्यवादस्य श्रुतिमात्र (मत्व) मिहेष्यते ॥ ४३७ ॥

व्या०— "$ चमसवदविशेषात्" श्वेताश्वतराणां मंत्रोपनिषदि श्रूयते "@ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति तत्र त्रिगुणात्मिका प्रकृतिः सांख्यप्रसिद्धा प्रत्यभिज्ञायते । अतः प्रधानं गम्यत इति चेन्न । न ह्यनेन मंत्रेण प्रधानं निर्दिश्यत इति नियन्तुं शक्यं । कुतः अविशेषान्न ह्यत्र प्रधानस्य कश्चिद्वैशेषिकशब्दः श्रूयते । चमसवत् यथा "ॐ अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन्मंत्रे अयमसौ चमस इति विशेषो नावगम्यते । तद्वन्निदमतदिर इति वाक्यशेषात् । शिरश्चमसा गम्यते इह कथमविशेषप्रतीतिस्तत्राह "‡¶ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके" तुरवधारणे ज्योतिरुपक्रमात् तेजोवन्नलक्षणैव प्रकृतिरजाशब्देन गृह्यते । न सांख्याभिमते । तथा ह्येके छांदोग्येऽधीयंते । "§* यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं" इति प्रदेशान्तरे विशेषदर्शनाच्छाखान्तरीयसामान्यवचनं तद्विषयं निलीयते । "यथा ज्ञेयं चतुर्था करोतीति" विशेषश्रुत्या पुरोडाशं चतुर्धा करोतीति सामान्यवचनं तद्विषयतया निर्णीयते । तद्वल्लोहितादयः शब्दा रूपविशेषेषु रूढाः सत्वादिगुणेषु गौणाः न च मुख्यसंभवे जघन्याश्रयणं न्यायं तस्मात्तेजोबन्नलक्षणैव प्रकृतिरजेति निर्णयः । ननु कथमिह तेजोवन्नरूपा प्रकृतिरजेति प्रतिपत्तुं शक्या । न हि

---

¶ कठवल्ल्युपनिषदि अ.–१ वल्ली–२ मं.–१८ † ब्र. सू.–७ अ.–१ पा.–४.
‡ कठवल्ल्युपनिषदि अ.–१ वल्ली–३ मं–१० $ ब्र. सू.–८ अ.–१ पा.–४.
|| ब्र. सू.–९ अ.–१ पा.–४. × ब्र. सू.–१० अ.–१ पा.४. £ ब्र. सू.–११ अ.१ पा.४.
@ श्वेताश्वतरोपनिषदि अ.–४ मं.–५. ॐ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–२ मं.३.
‡¶ ब्र. सू–९ अ.–१ पा.–४. §* छांदोग्योपनिषदि प्र.–६ खं.–४ मं.–१.

तस्याकृतिरस्ति । नाप्यजन्मनिमित्तो अजाशब्दः संभवति । जनिमत्त्वादत आह "§ कल्पनोपदेशाच्च मध्वादिवदविरोधः" न चायमजाशब्दो रूढः । नच यौगिकः । किंतु कल्पनोपदेशः । यथा लोके काचिदजा लोहितशुक्लकृष्णा स्याद्बहुबर्करा सरूपबर्करा च तां तु कश्चिदजो जुषमाणोऽनुशयीत । अन्यश्चैनां भुक्तभोगां जह्यादेव । नियतमपि तेजोबन्नलक्षणा प्रकृतिर्बहुरूपं चराचरात्मकं विकारजातं जनयति विमृश्य च त्यजत इति मध्वादिवद्यथा अमधुन आदित्यस्य । "* असौ वा आदित्यो देवमधु" इति मधुत्वकल्पना यथा वा वाचो अधेनोर्धेनुत्वं यथा द्युप्रभृतीनामनग्नीनामग्नित्वकल्पनं । एवमनजाया एव अजात्वं तेजोबन्नप्रकृतेः कल्पितमित्येवं चाजामंत्रे तेजोबन्नप्रकृतिग्रहणे निश्चिते । तत्पूर्वोत्तरवाक्ययोरपि "† देवात्मशक्तिं स्वगुणैर्निगूढां" । "‡ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यनयोरपि तेजोबन्नप्रकृतित्वं व्याख्यातं । एवं तत्प्रकरणगतानां । "¶ यो योनिं योनिमधितिष्ठत्येकः" "‖ क्षरं प्रधानममृताक्षरं हर" इत्यादौ योनिप्रधानादिशब्दानामपि तद्विषयत्वं द्रष्टव्यं "× न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" "@ यस्मिन् पंच पंच जना आकाशश्च प्रतिष्ठितः तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं" इत्यस्मिन्मंत्रे पंचसंख्याविषया परा च संश्रूयते । पंचशब्दद्वयदर्शनात्पंचपंचकाः पंचविंशतिपदार्थाः संपद्यन्ते । तावन्त्येव तत्त्वानि सांख्यैः स्मर्यन्ते । "$ मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष" इति तथा च प्रतीत्यभिज्ञानात् प्राप्तं श्रुतिमत्त्वं प्रधानस्येति प्राप्ते ब्रूमः । न संख्योपसंग्रहादपि प्रधानादिनः श्रुतिमत्त्वप्रत्याशा कार्या । कुतः नानाभावात् । नाना ह्येतानि तत्त्वानि नैषां पंचषः साधारणधर्मोऽस्ति येनांतराले पंचपंचसंख्या निविशेरन् । न ह्येकं निबंधमंत्रेण नानाभूतेषु द्वित्वादिसंख्या निविशन्ते अतिरेकाच्च यस्मिन्निति सप्तम्या आत्मा निर्दिश्यते । आकाशश्च प्रतिष्ठित इत्याकाशश्च तावेतावतिरेकौ ततश्च सप्तविंशतितत्त्वानि प्राप्नुयुः । अतश्च न संख्यावादस्य श्रुतिमत्त्वं । के तर्हि पंच पंच जनास्तत्राह ॥

मू०— ꣸ प्राणादयो वाक्यशेषात्संख्यापूरणमिष्यते ॥
तथा हि £ ज्योतिषैकेषामसत्यन्नेति सूत्रतः ॥ ४३८ ॥
प्राणादिनैव तत्रापि संख्यासंपत्तिसंभवात् ॥
% यथाकाशादिषु पुनः कारणत्वेन चाभवत् ॥ ४३९ ॥
तत्रैव व्यपदिष्टोक्तेरात्मैव परिगृह्यते ॥
$† समाकर्षाच्च ब्रह्मैव वेदितव्यं नचेतरत् ॥ ४४० ॥

---

§ ब्र. सू.—१० अ.—१ पा.—४. * छांदोग्योपनिषदि प्र.—३ खं.—१ मं.—१.
† श्वेताश्वतरोपनिषदि अ.—१ मं.—३. ‡ श्वेताश्वतरोपनिषदि अ.—४ मं.—१०.
¶ श्वेताश्वतरोपनिषदि अ.—४ मं.—११. ‖ श्वेताश्वतरोपनिषदि अ.—१ मं.—१०.
× ब्र. सू.—११ अ.—१ पा.—४. @ बृहदारण्यकोपनिषदि अ.—६ ब्रा.—४ मं.—१७.
$ सांख्यतत्त्वकौमुद्यां श्लोक—२. ꣸ ब्र. सू.—१२ अ.—१ पा.—४. £ ब्र. सू.—१३ अ.—१ पा.—४.
% ब्र. सू.—१४ अ.—१ पा.—४. $† ब्र. सू.—१५ अ.—१ पा.—४.

× तस्माज्जगद्वाचित्वं च वाचित्वाद्ब्रह्म केवलं ॥
तदुक्तं "$ जीवमुख्येति" सूत्रेणापि दृढं स्मृतम् ॥ ४४१ ॥
तथा § प्रश्नव्याख्यानाभ्यामन्यार्थं जैमिनिर्मुनिः ॥
मन्यतेऽस्मिन्प्रकरणे प्राणप्रग्रहणं तथा ॥ ४४२ ॥
‡$ वाक्यान्वयात्परं ब्रह्म यल्लिंगं हृदयांबुजे ॥
उपास्यं तत्परं ब्रह्म वेदितव्यं मनीषिभिः ॥ ४४३ ॥
£ लिंगं प्रतिज्ञासिद्धेश्च हृदब्जे धार्यमव्ययम् ॥
आश्मरथ्यो मुनिस्तत्र मन्यते पुनरादरात् ॥ ४४४ ॥
‡ एवं भावादौडुलोमिरित्येव ह्युत्क्रमिष्यते ॥

व्या०— "* प्राणादयो वाक्यशेषात्" अत्र हि पंचजनशब्दो "¶ दिक्संख्ये संज्ञायां" इति समस्तो वेदितव्यः सप्तर्षिशब्दवन्नाषितस्वरेण एकपदत्वनिश्चयात् "पंचानां त्वा पंचजनानाम्" इत्यन्यत्रापि प्रयोगदर्शनात् च तथा पंचजना नाम केचिच्च पंच सप्त ऋषयः सप्तेति यथा च ते च प्राणादयः। कुतः वाक्यशेषात्। "‖ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति ननु माध्यंदिना पंचसंख्यापूरणं ये प्राणादिषु नान्नमधीयंते। तत्राह "% ज्योतिषैकेषामसत्यन्ने" एकेषामपि वाक्यशेषादन्येऽसत्यपि पूर्वस्मिन्मंत्रे "† तद्देवा ज्योतिषां ज्योतिः" इति ज्योतिषः पाठात्तेनैव पंचसंख्यापूरणं सर्वथा सन्निहितेन प्राणादिनैव संख्यासंपत्तिसंभवान्नासन्निहितस्य स्मार्तस्य प्रधानादेः श्रुतिमत्वं नेति सिद्धं। "ꣽ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः" "@ असद्वा इदमग्र आसीत् ततो वै सदजायते" इति श्रूयते। तत्रासच्छब्देनाव्यक्तं प्रधानमुच्यते। अन्यतोऽसतस्तु शब्दस्य कारणत्वानुपपत्तेः ततश्च प्रधानं शब्दवदेवेति प्राप्ते ब्रूमः। असच्छब्देनानभिव्यक्तनामरूपावस्थापन्न आत्मैवोच्यते कस्मात्कारणत्वेनाकाशादिषु यथा व्यपदिष्टोक्तेः। "§‡ तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिषु कारणत्वे च यथा व्यपदिष्टस्य मुख्यया गौण्या च व्यपदिष्टस्यैवात्मन एवात्राप्युक्तेः। "¶† तदात्मानं स्वयमकुरुत" इति अत्रात्मानमित्यात्मशब्देन कस्माद्वा तस्मादात्मन इत्युक्तेश्चात्मनोऽन्यन्तर आत्माऽऽनंदमय इति प्रतिपादितस्यैव। "$† सोऽकामयत बहुस्यां प्रजायेयेति" पूर्वश्लोके सन्ति तस्य परामर्शनात्। तस्मात्प्रधानपरिग्रहः "*§ समाकर्षात्" तत्तद्धेदं न व्याकृतमित्यव्याकृतशब्देनाभिव्यक्तनामरूप आत्मैवोच्यते। प्रधानं न कुतः समाकर्षात्। "‡$ स एष इह प्रविष्ट आ नखाग्रेभ्य" इत्यादिना तच्छब्देन पूर्वोक्तस्याव्याकृ-

---

× ब्र. सू.–१६ अ.–१ पा.–४. $ ब्र. सू.–१७ अ.–१ पा.–४. § ब्र. सू.-१८ अ.–१ पा.–४.
‡$ ब्र. सू.–१९ अ.–१ पा.–४. £ ब्र. सू.–२० अ.–१ पा.–४. ‡ ब्र. सू.–२१ अ.–१ पा.–४.
* ब्र. सू.–१२ अ.–१ पा.–४. ¶ पाणिनिसू.–५० अ.–२ पा.–१.
‖ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–१८. % ब्र. सू.–१३ अ.–१ पा.–४.
† बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–१६. ꣽ ब्र. सू.–१४ अ.–१ पा.–४.
@ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१. §‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–२.
¶† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१. $† तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–२
*§ ब्र. सू.–१५ अ.–१ पा.–४. ‡$ बृहदारण्यकोपनिषदि अ.–३ ब्रा.–४ मं.–७.

तस्य समाकर्षणेन तस्यात्मत्वस्फुटीकरणात् अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यतानुपपत्तेः तस्मान्न प्रधानस्य क्वापि शब्दवत्वमत एव । "§ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एक" इत्यादौ विनाशिप्रधानशब्दाभिधेयमिति मन्त्रवर्णे विवृतं । "‡ जगद्वाचित्वात्" कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते । "$ यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्य" इति तत्र संदेहः । किमत्र जीवो वेदितव्यत्वेनोच्यते । आहोस्वित्प्राण उत परमात्मेति । जीव इति तावत्प्राप्तं तस्य हि यस्य वै तत्कर्मेति "धर्माय मम लक्षणं" कर्म श्रुतं संभवति । ये बालाकिना न दृष्टाः पुरुषास्तेषामप्यदृष्टद्वारा जीवः कर्ता संभाव्यते । तस्माज्जीव इति यद्वा प्राणः कर्मशब्दस्य क्रियावाचित्वात्परिस्पंदलक्षणायाः क्रियायाः प्राणे संभवात् । ब्रह्मण्यसंभवाच्च तस्मात्प्राण इति प्राप्ते ब्रूमः । पर एवात्र वेदितव्यत्वेनोपदिश्यते । यस्य वैतत्कर्मेत्यत्रैतच्छब्दस्य प्रत्यक्षादिप्रमाणसन्निधापितकृत्स्नजगद्वाचित्वात् । पूर्ववाक्यनिर्दिष्टानां पुरुषाणां च पृथगुपात्तत्वात्कर्मशब्दश्च क्रियत इति व्युत्पत्त्या कार्यवाची ततश्चायमर्थः । य एतेषां पुरुषाणां कर्ता किं विशेषणद्वयस्य वै तदविशेषितं जगत्कृत्स्नं कार्यमिति च ब्रह्मणोऽस्य कृत्स्नजगत्कर्तृत्वं मुख्यं न संभवति । "§ ब्रह्म ते ब्रवाणीति" उपक्रमाच्च । "¶ जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातं" ननु जीवलिंगमवगम्यते यत्कारणं वेदितव्यतयोपन्यस्तस्य वेदनयोपेतं बालाकिं प्रति बुबोधयिषू राजा अजातशत्रुः सुप्तं पुरुषमामंत्र्यामंत्रणशब्दाश्रवणात्प्राणादीनां भोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थापनेन प्राणादिव्यतिरिक्तं भोक्तारं प्रतिबोधयति । तथा मुख्यप्राणलिंगमपि । "× अथास्मिन् प्राण एवैकधा भवति" इति तथा जीवमुख्यप्राणलिंगदर्शनान्न पर उपास्य इति चेन्न । यदिह वक्तव्यं तत्पुरस्तादेवोक्तं नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादित्यत्र "‖ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके" । जैनमते अन्यार्थं ब्राह्मणोपलक्षणार्थमित्यस्मिन्प्रकरणे जीवप्राणग्रहणमिति जैमिनिराचार्यो मन्यते । कुतः प्रश्नव्याख्यानाभ्यां प्रश्नस्तावत् । "$ क्वैष एतद्बालाके पुरुषेऽशयिष्ट तदभूत् कुतः एतदागादिति" । व्याख्यानमपि "× यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति" "× एतस्मादात्मनः प्राणाः यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति च यत्र सुषुप्तिकाले जीवः स प्राणः सकरणग्रामः शेते यतः पुनरागच्छति तद्ब्रह्म वेदितव्यमिति गम्यते । अपि चैवमेके वाजसनेयिनः । एवमधीयंते बालाक्यजातशत्रुसंवादे । प्रश्नप्रतिवचने । "£ य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागादिति" प्रश्नः । प्रतिवचनमपि । "†§ य एषोऽन्तर्हृदय आकाशस्तस्मित् शेते" । इति विज्ञानमयशब्दो जीववाची ब्रह्मणि प्रयुक्तः । तदेवं जीवमुख्यप्राणपरामर्शस्यान्यार्थत्वाद्ब्रह्मैवोपास्यमिति सिद्धं । "† वाक्यान्वयात्" बृहदारण्यके श्रूयते । "*£ न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय इत्युपक्रम्य न वाऽरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदि-

---

§ श्वेताश्वतरोपनिषदि अ.–१ मं.–१०. $ कौषीतकिब्राह्मणोपनिषदि अ.–४ मं.–१८.
‡ ब्र. सू.–१६ अ.–१ पा.–४. ¶ ब्र. सू.–१७ अ.–१ पा.–४.
× कौषीतकिब्राह्मणोपनिषदि अ.–४ मं.–१९. ‖ ब्र. सू. १८ अ.–१ पा.–४.
£ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–१ मं.–१६. †§ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–१ मं.–१७.
† ब्र. सू.–१९ अ.–१ पा.–४. *£ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–५.

ध्यासितव्यो मैत्रेय्यात्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् " इति तत्र संशयः। किमिह जीवो द्रष्टृत्वादिनोपदिश्यते । उत पर इति । तत्र जीव इति । प्रियसंसूचितेन भोक्तृपक्रमात् । मध्येऽपि । " × विज्ञानधन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति न प्रेत्य संज्ञा अस्तीति " । तस्यैव परामर्शात् " § विज्ञातारमरे केन विजानीयादिति " तस्यैवोपसंहारादिति पूर्वः पक्षः । सिद्धान्तस्तु पर एवात्मा द्रष्टव्यत्वादिनोपदिश्यते । कस्माद्वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणान्वीयमानं परमात्मपरमेव लक्ष्यते । तथा हि । " * येनाहं नामृता स्यां किमहं तेन कुर्याम् यदेव भगवान् वेद तदेव मे ब्रूहि " इत्यमृतत्वमाशंसानायै मैत्रेय्यै याज्ञवल्क्यः इदमात्मज्ञानमवतारयति । स च ब्रह्मज्ञानादन्यदमृतत्वसाधनमास्ति । तथाऽऽत्मज्ञानात्सर्वज्ञानमुच्यमानं परमात्मनोऽन्यत्र नोपपद्यते । तथैवं सर्वं यदयमात्मेति सर्वात्मकत्वं न ब्रह्मणोऽन्यत्र संभवति तथाऽस्य । " ‡ महतो भूतस्य निश्वसितमेतदृग्वेद " इति तस्मात्परमात्मन एवायं दर्शनादुपदेश इति गम्यते । यद्येवं तर्हि कथमादिमध्यावसानेषु जीवपरामर्श इत्यत्राह । " ‖ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः " । अत्र ह्यात्मनो वा अरे इत्यादिना एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तत्सिद्धये जीवस्य ब्रह्मविकारत्वात्प्रकृतिविकारयोश्च मृद्घटयोरिव भेदाभेदाभ्युपगमात् । जीवपरयोरप्यभेदं सूचयितुं परमात्मपरेऽपि वाक्ये जीवपरामर्श इत्याश्मरथ्य आचार्यो मन्यते । " ¶ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः " औडुलोमिः पुनरिदानीं जीवपरमयोरत्यंतभेदेऽपि कर्मध्यानादिसंपन्नस्य शरीरादुत्क्रमिष्यतः नामरूपविनिर्मुक्तस्य परेण ब्रह्मणैक्यं भावीति भाव्यभेदमाश्रित्यायं जीवपरामर्श इति मेने । यथाहुः । " आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावत " इति श्रुतिरपि । " £ यथा नद्यः स्यंदमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति " ॥

मू०— ‰ अवस्थितेः काशकृत्स्न इति तद्ब्रह्मजीवयोः ॥ ४४५ ॥
न भेदो नापि चाभेदः सामरस्यात्तयोर्ध्रुवं ॥
भेदाभेदाभ्युपगमाद्विस्फुलिंगाग्निवत्तदा ॥ ४४६ ॥
जीवो ह्युपासकः साक्षादुपास्यं ब्रह्म केवलम् ॥
लिंगांगसामरस्येन भेदाभेदौ व्यवस्थितौ ॥ ४४७ ॥
उपादानं हि * प्रकृतिर्निमित्तं ब्रह्म केवलम् ॥
दृष्टान्तानुपरोधाच्च मृदादिवदिहेष्यते ॥ ४४८ ॥
× तथाभिध्योपदेशाच्च प्रकृतित्वं विचार्यते ॥

× बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–१२. § बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–१४.
* बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–३. ‡ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–१०.
‖ ब्र. सू.–२० अ.–१ पा.–४. ¶ ब्र. सू.–२१ अ.–१ पा.–४.
£ मुंडकोपनिषदि मुं.–३ खं.–२ मं.–८. ‰ ब्र. सू.–२२ अ.–१ पा.–४.
* ब्र. सू.–२३ अ.–१ पा.–४. × ब्र. सू.–२४ अ.–१ पा.–४.

प्रकृतित्वं च कर्तृत्वं ब्रह्मणो वाक्यगौरवात् ॥ ४४९ ॥
§ साक्षादप्युभयाम्नानात्प्रकृतिः कर्तृ च श्रुतम् ॥
† योनिश्च हीति सूत्रेण ब्रह्मणो निश्चितं पुनः ॥ ४५० ॥
कर्तृत्वं प्रकृतित्वे च योनिशब्देन तत्तथा ॥
‡ परिणामात् ¶ आत्मकृतेरात्मानं स्वयमित्यतः ॥ ४५१ ॥
प्रकृतित्वं च कर्तृत्वं तस्मात्सिद्धं परस्य हि ॥
$ एतेन सर्वे व्याख्याता व्याख्याता इति सूत्रतः ॥ ४५२ ॥
एतैश्च हेतुभिः सर्वे वेदान्ता ब्रह्मतत्पराः ॥
तद्ब्रह्म हृदये धार्यं प्रतिसूत्रं व्यवस्थितं ॥ ४५३ ॥
एतदैश्वर्यविभवं लिंगं ब्रह्म हृदंबुजे ॥
सामरस्यविधानेन धार्यं पूज्यं मुमुक्षिभिः ॥ ४५४ ॥

व्या०— "‖ अवस्थितेरिति काशकृत्स्नः" जीवपरयोरग्निविस्फुलिंगयोरिव अंशांशीभावे सर्वदा भेदाभेदाभ्युपगमात् । ब्रह्मणो जीवाभेदेनावस्थानाज्जीवपरामर्श इति काशकृत्स्न आचार्यो मेने । "£ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" ब्रह्मणो जिज्ञासां प्रतिज्ञाय जन्माद्यस्य यत इति लक्षणमुक्तं । तच्च कारणत्वं कुलालादिवत् कर्तृत्वमात्रं उत मृदादिवदुपादानत्वं चेति संशयः । कर्तृत्वमेवेतीक्षणश्रवणादीक्षतेति । ईक्षणात्कुलालादिषु घटकर्तृषु दृष्टं नोपादानत्वं मृदादौ तथा ब्रह्मणः कर्तृत्वादन्येन केनचिदुपादानेन भवितव्यं । तच्च प्रसिद्धं प्रधानमेवेति प्रकृतिश्चोपादानं न केवलं ब्रह्म निमित्तं । कुतः प्रतिज्ञादृष्टान्तानुपरोधात् । "@ उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा श्रूयते । तथा दृष्टान्ताच्च । "% अभिध्योपदेशाच्च" अभिध्योपदेशाच्चात्मानं कर्तृत्वप्रकृतित्वे गमयति । "* सोऽकामयत बहुस्यां प्रजायेयेति" श्रुतेः । "§ साक्षाच्चोभयाम्नानात्" इतश्च ब्रह्म प्रकृतिः कर्तृ च यतः साक्षादेवोभयमाम्नायते । तथाक्षरात्संभवतीह विश्वं । "$† यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते"। इतश्च प्रकृतित्वं कर्तृत्वं च सिद्धं "† योनिश्च हि गीयते" । योनिशब्द उपादानवाची । "पृथिवी योनिरोषधिवनस्पतीनां" इति प्रयोगदर्शनात् । स्त्रीयोनेरपि अवकाशद्वारा उपादानत्वमस्त्येव । तथा "‡¶ मायां तु प्रकृतिं विद्यात्" इति प्रकृतित्वमुक्त्वा तेजोबन्नलक्षणायाः प्रकृतेरेव । "†$ यो योनि

---

§ ब्र. सू.–२५ अ.–१ पा.–४. † ब्र. सू.–२८ अ.–१ पा.–४.
‡ ब्र. सू.–२७ अ.–१ पा.–४. ¶ ब्र. सू.–२६ अ.–१ पा.–४. $ ब्र. सू.–२९ अ.–१ पा.–४.
‖ ब्र. सू.–२२ अ.–१ पा.–४. £ ब्र. सू.–२३ अ.–१ पा.–४.
@ छांदोग्योपनिषदि प्र.–६ खं.–१ मं–३. % ब्र. सू.–२४ अ.–१ पा.–४.
* तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–१. $† मुंडकोपनिषदि मुं.–१ खं.–१ मं.–९.
‡¶ श्वेताश्वतरोपनिषदि अ.–४ मं.–१०. †$ श्वेताश्वतरोपनिषदि अ.–४ मं.–११.

योनिमधितिष्ठत्येकः" इति परामर्शात् ब्रह्मणः प्रकृतित्वकर्तृत्वे। "* आत्मकृतेः" "‡ परिणामात्" "¶ तदात्मनं स्वयमकुरुत"। इत्यात्मानमिति तस्य कर्मत्वं प्रतीयते। अकुरुतेति च कर्तृत्वं। ननु आत्मनः कथं कृतिरुपपद्यत इति तत्राह। परिणामादिति स्वरूपेण प्राक् सिद्धमेवात्मानं तदभिन्न-कार्याकार्येण परिणमयामास इति तस्य कार्यकारणत्वमुपपन्नमेव। तस्मात्सिद्धमात्मनः प्रकृतित्वं कर्तृत्वं च। "£ एतेन सर्वे व्याख्याता व्याख्याताः"। उक्तं न्यायं सर्वत्राप्यतिदिशति श्रुतिलिंगवाक्यप्र-माणादिभिः कानिचिद्वाक्यानि संदिग्धार्थानि ब्रह्मपरतया नीतानि एतैरेव हेतुभिः सर्वेऽपि वेदान्ताः ब्रह्मपरा व्याख्याताः द्विरुक्तिरध्यायपरिसमाप्तिं सूचयति ॥

मू०— तस्मात्सर्वप्रयत्नेन सर्वकर्माणि मानवः ॥
परित्यज्य यथाकालं करपीठे तु पूजयेत् ॥ ४५५ ॥

यतः पापार्णवात्रातुं भक्तिर्नौरिव निर्मिता ॥ तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किं ॥ ४५६ ॥
अंत्यजो वाऽधमो वापि मूर्खो वा पतितोऽपि वा ॥ शिवभावं प्रपन्नश्चेत्पूज्यः सर्वसुरासुरैः ॥४५७॥
तस्मात्सर्वप्रयत्नेन हृदये धारयेच्छिवम् ॥ अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥ ४५८ ॥
वेदैः शास्त्रैर्वेदविद्भिर्विचार्याथ सुनिश्चितम् ॥ ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ॥४५९॥
मातृहा पितृहा वाऽपि वीरहा भ्रूणहाऽपि वा ॥ संपूज्यामंत्रकं भक्त्या शिवलिंगं परात्परम् ॥४६०॥
तैस्तैः पापैः प्रमुच्येत सामरस्यमना यदि ॥ तस्मात्सर्वप्रयत्नेन पतितोऽपि यजेच्छिवं ॥ ४६१ ॥
भक्तश्चेन्नापरः कश्चिद्भिक्षाहारो जितेंद्रियः ॥ कृत्वाऽपि सुमहत्पापं भक्त्या पंचाक्षरेण तु ॥ ४६२ ॥
पूजयेद्यदि तल्लिंगं तस्मात्पापात्प्रमुच्यते ॥ अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥ ४६३ ॥
तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ॥ भक्त्या पंचाक्षरेणैव यो लिंगं सकृदर्चयेत् ॥ ४६४ ॥
सोऽपि गच्छेच्छिवस्थानं शिवलिंगस्य धारणात् ॥ तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्वदक्षिणाः ॥
शिवलिंगार्चनस्यैते कोट्यंशेनापि नो समाः ॥ ४६५ ॥
अरुद्रो वा सरुद्रो वा शिवलिंगं समर्चयेत् ॥ यः सकृत्पतितो वाऽपि मूढो वा मुच्यते नरः ॥४६६॥
षडक्षरेण वा नित्यं तथा पंचाक्षरेण वा ॥ एककालं द्विकालं वा त्रिकालं सर्वदाऽथ वा ॥ ४६७ ॥
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥ जातेनात्मद्रुहा येन नार्चितं लिंगमैश्वरम् ॥ ४६८ ॥
स चिरं संचरत्यस्मिन्संसारे दुःखसागरे ॥ दुर्लभं प्राप्य मानुष्यं तल्लिंगं यो न धारयेत् ॥ ४६९ ॥
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥ हृत्प्रदेशे सदा धार्यं शिवलिंगं मनीषिभिः ॥ ४७० ॥
दुर्लभं प्राप्य मानुष्यं यो लिंगं हृदि धारयेत् ॥ तस्यैव सफलं जन्म कृतार्थः स नरोत्तमः ॥४७१॥
लिंगांगसंभवा ये च शिवलिंगैकतत्पराः ॥ शिवलिंगार्चनपरा न ते दुःखस्य भागिनः ॥ ४७२ ॥

---

* ब्र. सू.–२६ अ.–१ पा.–४ ‡ ब्र. सू.–२७ अ.–१ पा.–४
¶ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–७ मं.–१. £ ब्र. सू.–२९ अ.–१ पा.–४.

ये वांछन्ति महाभोगान् राज्यं च त्रिदशालये ॥ तेऽर्चयन्ति सदा कालं हृदिस्थं लिंगमद्भुतम् ४७३
सौभाग्यं कांतिमद्रूपं सत्यं त्यागः प्रभावता ॥ शौर्यं च जगति ख्यातिर्लिंगमर्चयतो भवेत् ॥ ४७४ ॥
तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ॥ सामरस्यविधिं कुर्याद्यदीच्छेच्छिवमात्मनः ॥ ४७५ ॥
संग्रहेण प्रमाणानि पुराणेष्वागमेषु च ॥ अन्विष्य लिखितान्येतान्येतस्मिन् विषये पुनः ॥ ४७६॥
पौनरुक्त्यमनादृत्य बुद्धिदार्ढ्याय सादरम् ॥ वैदिकत्वं दर्शयता सूत्रतात्पर्यवर्णनम् ॥ ४७७ ॥
कर्तव्यं वचनैरन्यैः किं साध्यमिति चेच्छृणु ॥ वक्ष्यामि संग्रहेणैव व्याससूत्रैकरूपताम् ॥ ४७८ ॥
वीरशैवागमाख्यातपदार्थानां परस्परम् ॥ आगमेषु पदार्था ये त एव व्याससूत्रके ॥ ४७९ ॥
शब्दभेदेन वक्ष्यन्ते संज्ञाभंग्यंतरेण च ॥ "§ शास्त्रयोनित्वसूत्रेण " शास्त्राणां योनिता श्रुता ॥४८०॥
जिव्हांगे गुरुर्लिंगं स्याज्जगुरागमिका इति ॥ उपदेष्टा शिवः साक्षाद्विद्यानां जगतां यतः ॥ ४८१ ॥
"†ज्योतिश्चरणसूत्रेण" "‡ य एषोऽक्षिणि पूरुषः" ॥ परं ब्रह्मेति कथितस्तमेवागमिका जगुः ॥ ४८२ ॥
दृगंगे शिवलिंगं स्यादिति लिंगस्वरूपताम् ॥ अत एव प्राण इति प्राणानां ब्रह्मता श्रुता ॥ ४८३ ॥
आगमेषु समाख्यातं प्राणलिंगं तथाऽन्तरे ॥ दहराख्येऽधिकरणे यद्ब्रह्म समुदीरितम् ॥ ४८४ ॥
तदेवागमशास्त्रेषु महालिंगं हृदीरितम् ॥ आनंदाख्येऽधिकरणे यच्च ब्रह्म समीरितम् ॥ ४८५ ॥
भावलिंगं तदेवाहुरागमार्थविशारदाः ॥ भावार्पणादिभेदेन यदुक्तं त्रिविधार्पणम् ॥ ४८६ ॥
चेतोऽर्पणाधिकरणे स एवार्थो विचार्यते ॥ छंदोविशेषपरतामाशंक्याथ विचारितम् ॥ ४८७ ॥
धीप्रेग्कत्वादित्यादि सर्वभाष्येषु वार्तिके ॥ "×स्थानादिव्यपदेशाच्च" सूत्रे योऽर्थः स एव हि ४८८
स्थलशब्देनागमेषु सर्वत्र समुदीर्यते ॥ प्रतिसूत्रं चैवमेव वक्तुं शक्या सरूपता ॥ ४८९ ॥
ग्रन्थविस्तरभीत्याहं प्रकृतार्थमुपक्रमे ॥ भेदाभेद इति प्रोक्तस्तत्रैवमवधार्यताम् ॥ ४९० ॥
कैश्चित्तु सूत्रितोऽध्यासः शास्त्रस्यादौ समर्थितः ॥ आदिसूत्रे सूचितव्यो विषयो न प्रयोजनम् ४९१
जीवब्रह्मस्वरूपैक्यलक्षणो विषयश्च यः ॥ तद्ज्ञानं चाध्यासतंत्रमिति सूत्रार्थ एव चेत् ॥ ४९२ ॥

जीवब्रह्मस्वरूपैक्यस्यैवाभेदेन ( मेव भावेन ) तस्य च ॥
विषयत्वं न युज्येत तत्त्वदृष्ट्याऽवधार्यताम् ॥ ४९३ ॥
जीवब्रह्मस्वरूपैक्यं न क्वचित्सूत्रितं पुनः ॥
" £अंशा नानेति सूत्रे " तु जीवस्य ब्रह्मणोंऽशता ॥ ४९४ ॥

भिन्नाभिन्नत्वमग्नेस्तु विस्फुलिंगवदीरितम् ॥ न ह्यग्नेर्विस्फुलिंगस्य स्वरूपैक्यं प्रदर्श्यते ॥ ४९५ ॥
जीवस्य ब्रह्मणो येन स्वरूपैक्यं पुनर्भवेत् ॥ न भेदाभेदयोर्युक्तमेकस्मिन्नेव वर्तनम् ॥ ४९६ ॥

§ ब्र. सू.–३ अ.–१ पा.–१ † ब्र. सू.–२५ अ.–१ पा.–१.
‡ छांदोग्योपदिषदि प्र.–४ खं.–१५ मं.–१. × ब्र. सू.–१४ अ.–१ पा.–२.
£ ब्र. सू.–४२ अ.–२ पा.–३.

परस्परविरोधादित्यतो वाच्यं विचक्षणैः ॥ अविद्यालक्षणोपाधिकृतमित्यभिधीयते ॥ ४९७ ॥
"* उभयव्यपदेशादित्यहिकुंडलवत्तथा" ॥ "§ प्रकाशाश्रयवत्त्वाच्च तेजस्त्वात्पूर्ववत्तथा" ॥४९८॥
"+अनुज्ञापरिहारौ च देहसंबंधतस्तथा ॥ ज्योतिरादिवदित्येवं" तत्संभाव्यामितस्तथा ॥ ४९९ ॥
"¶उपपत्तेः" "£प्रदीपवदावेशस्तदनंतरं ॥ तथा हि दर्शयतीति च" भेदाभेदयोः पुनः ॥ ५०० ॥
प्रमाणतोऽपि सिद्धत्वात् दृष्टान्तेषु च दर्शनात् ॥ विजानीयात्तदन्योन्यमविरोधव्यवस्थितिम् ॥५०१॥
तथा च वक्ष्यते तैश्च तथा "%भोक्त्रादिसूत्रके" ॥ अविरोधं संप्रदर्श्य व्याख्यातं सूत्रमप्यथ॥५०२॥
ब्रह्मकारणवादश्च यदि चेदन्यथा पुनः ॥ सम्यक् तर्कबलेनैव क्षिप्यते यद्यपि श्रुतिः ॥
प्रमाणं स्वस्य विषये स्वयं भवितुमर्हति ॥ ५०३ ॥
तथापि स्वस्य विषये प्रमाणान्तरतो हृते ॥ स्वयमन्यपरैव स्यात्कृष्णलश्रवणे यथा ॥ ५०४ ॥
यथा मंत्रार्थवादौ च तर्कोऽपि स्वस्य गोचरात् ॥ अप्रतिष्ठित एव स्यादन्यस्यैवं किल स्थितिः ॥५०५
धर्माधर्मस्थले दृष्टा तर्कदुर्बलता पुनः ॥ प्रमाणांतरसिद्धार्थबोधितं यच्छ्रुतेः पुनः ॥ ५०६ ॥
अयुक्तं तदिदं विद्याद्यद्येवं संमतं तव ॥ प्रमाणांतरसिद्धोऽर्थः श्रुत्या को वाऽत्र बोध्यते ॥५०७॥
भोक्तृभोज्यविभागो हि प्रसिद्धो जगति ह्ययम् ॥ शरीरश्चेतनो भोक्ता भोग्याः शब्दादयस्त्विमे ॥५०८
यथा भोक्ता देवदत्तो भोग्यास्ते चोदनादयः ॥ भोक्तृभोग्यविभागस्याभावः सर्वस्थले भवेत् ॥५०९
यदि भोक्ता भोग्यभावं भोग्यं भोक्तृत्वमेव वा ॥ तयोरन्योन्यतापत्तिर्ब्रह्मणः परकारणात् ॥५१०॥
अनन्यत्वात्प्रसज्येत न युक्तं यदि बाधनं ॥ प्रसिद्धस्य विभागस्य न युक्तमत एव हि ॥ ५११ ॥
ब्रह्मकारणतायाश्च निश्चयो नेति यो वदेत् ॥ स्याल्लोकवदिति ब्रूयात्तं मूर्खं पुरुषं प्रति ॥ ५१२ ॥
उपपद्यत एवेदमस्मत्पक्षे विभाजनम् ॥ एवं लोके च दृष्टत्वात्समुद्रादुदकात्मनः ॥ ५१३ ॥
अनन्यत्वेऽपि वीच्यादेर्विभाग उपपद्यते ॥ न चोदकात्मनो वार्धेरनन्यत्वेऽपि वै पुनः ॥ ५१४ ॥
फेनादीनामनेकेषामितरेतरता मता ॥ न च वीचितरंगादेरनन्यत्वेत्वसंभवे ॥ ५१५ ॥
उदात्मनः सरिद्भर्तुरनन्यत्वं न सिध्यति ॥ इहाप्येवं भोक्तृभोग्यविभागोऽपि समर्थितः ॥ ५१६ ॥
सदात्मकाद्ब्रह्मणो वाऽप्यनन्यत्वं न सिध्यति ॥ नन्वेतदविरोधस्य वादमात्रं समर्थनम् ॥ ५१७ ॥
"‡तदनन्यत्वमारंभणशब्दादिभ्यसूत्रके" "@वाचारंभणमित्यादि" श्रुत्या सर्वस्य सर्वथा ॥ ५१८ ॥
न च भेदप्रपंचस्य बाधिततत्त्वसमर्थनात् ॥ न चानेन हि सूत्रेण श्रुत्या वाचादिरूपया ॥ ५१९ ॥
कृत्स्नस्यापि प्रपंचस्य बाधितत्वं समर्थ्यते ॥ ५२० ॥
न प्रत्यक्षप्रमाणेन सिद्धो ( शुद्धो ) भेदप्रपंचकः ॥

---

* ब्र. सू.–२६ अ.–३ पा.–२. § ब्र. सू.–२७ अ.–३ पा.–२. + ब्र. सू.–४७ अ.–२ पा.–३.
¶ ब्र. सू.–३४ अ.–३ पा.–२. £ ब्र. सू.–१५ अ.–४ पा.–४ % ब्र. सू.–१४ अ.–२ पा.–१.
‡ ब्र. सू.–१५ अ.–२ पा.–१. @ छांदोग्योपनिषदि प्र.–६ खं.–१ मं.–४.

शक्यते वाधितुं श्रुत्या किं तु न्याय्य इतीर्यते ॥ ५२१ ॥
श्रुतेरेवान्यपरता प्रत्यक्षादिविरोधतः ॥ यथा हि पूर्वतंत्रे च कृष्णलं श्रपयेद्विधेः ॥ ५२२ ॥
प्रत्यक्षेण स्वर्णमाषे विकृतौ वाधिते सति ॥ उष्णीकरणमात्रार्थपरता लक्षणा कृता ॥ ५२३ ॥
यत्सोमेन यजेतेति विधौ यागेन भावयेत् ॥ इत्यर्थस्वीकृतौ सोमेन यागेनेति चैतयोः ॥ ५२४ ॥
सामानाधिकरण्येन ह्यन्वये सोमयागयोः ॥ प्रत्यक्षाभेदबाधेन भेदो लक्षणया यथा ॥ ५२५ ॥
अपि चाद्यापि कृत्स्नस्य प्रपंचस्य च बाधनं ॥ तर्हि श्रुतिस्वरूपस्य पदार्थस्मरणस्य च ॥ ५२६ ॥
तथा वाक्यार्थज्ञानस्य प्रपंचांतर्गतत्वतः ॥ बाधे तेषामपि सति प्रपंचो बाध्यतां कथम् ॥५२७॥
कथं मज्जननी वंध्या मम जिव्हा न चेति च ॥ न च प्रपंचबाधेऽपि तिष्ठत्येवं स्वरूपकम् ॥ ५२८॥
तस्मात्कार्यं चोपपन्नमिति वक्तुं हि शक्यते ॥ प्रतियोग्यनिषेधे सत्यभावो वादमात्रतः ॥ ५२९ ॥

न च श्रुत्या प्रपंचस्य स्वरूपं न हि बाध्यते ॥
येन वा स्याद्धि व्याघातः सत्यत्वं तस्य किंत्विति ॥ ५३० ॥

स्वरूपबाधाभावे च बाध्यतारूपसत्यता ॥ प्रपंचेऽभ्युपगंतव्या न स्यात्सत्यत्वबाधनम् ॥ ५३१ ॥

( तस्यां ) तस्मान्नानेन सूत्रेण श्रुत्या बाधः समर्थ्यते ॥
किंत्वभिन्नत्वमेवेति न भेदाभेदयोः पुनः ॥ ५३२ ॥
विरोध इति मंतव्यं तथाऽन्यत्रापि ( प्रदर्श्यते ) दृश्यते ॥
* इतरव्यपदेशाच्च स्वहिता करणादितः ॥ ५३३ ॥

दोषप्रसक्तिरित्याद्यैस्तथा "‡ तत्त्वमसीति" च ॥ जीवस्य ब्रह्मणः सम्यगभेदव्यपदेशतः ॥५३४॥
किं जीवकर्तृका सृष्टिः किं वा ब्रह्मैककर्तृका ॥ सृजेज्जीवः स्वस्य हितं नाहितं नरकादिकम् ॥५३५॥
£ इत्याद्याशंक्याधिकं तु भेदनिर्देशसूत्रतः ॥ कर्ता जीवो न किं त्वत्र कर्तृ ब्रह्मैव चाधिकम् ॥५३६॥
तज्जीवस्याहितमपि सृज्यते वेत्युदीर्यते ॥ कथं वाऽभेदकथने हीनताधिकते उभे ॥ ५३७ ॥
कथं सर्वेश्वरः साक्षात् सर्वज्ञत्वेन सर्वतः ॥ जीवान्स्वात्मतया पश्यंस्तेषु शोकादिकं सृजेत् ॥५३८॥
स्वनिष्ठत्वेन शोकादेरनुभूतिप्रसंजनात् ॥ † इत्याशंक्याश्म्यादिवच्च तदसंगतिरीरिता ॥ ५३९ ॥
अनेन चाश्मनां सूर्यकांतवैडूर्यभेदिनाम् ॥ पाषाणत्वेन सामान्यमनाभेदे समाहिते ॥ ५४० ॥
व्यक्तिभेदाद्धीनरूपमध्यमोत्तमभावतः ॥ स्वरूपाणां च वैचित्र्यं कार्यवैचित्र्यमेव च ॥ ५४१ ॥
एवं च जीवपरयोरपि व्यक्तिभिदा कृता ॥ हीनताऽधिकता कार्यवैचित्र्यं चोपपद्यते ॥ ५४२ ॥
न पाषाणत्वसामान्यं विभिन्नं व्यक्तयः पुनः ॥ भिन्ना एवेति नैकत्र भेदाभेदावुभाविति ॥ ५४३ ॥

---

* ब्र. सू.–२१ अ.–२ पा.–१. £ ब्र. सू.–२२ अ.–२ पा.–१.
‡ छांदोग्योपनिषदि प्र.–६ खं.–८ मं.–७. † ब्र. सू.–२३ अ.–२ पा.–१.

पाषाणत्वादिसामान्यावच्छिन्नप्रतियोगिकः ॥ यो भेदस्तदभावस्वरूपाभेदस्य चाप्यथ ॥ ५४४ ॥
वैडूर्यत्वाद्यवच्छिन्नप्रतियोगीव चेत्तया ॥ भिदाव्यक्तिषु तस्याश्चोभयस्य प्रतिपादनात् ॥ ५४५ ॥
न चैवं शंकितुं शक्यं वज्रवैडूर्ययोर्द्वयोः ॥ सामानाधिकरण्यादिव्यवहारप्रसंजनम् ॥ ५४६ ॥
इष्टत्वात्तस्य सामान्यभेदोल्लेखनमत्र च ॥ विशेषाभेदविरहादत एवेश्वरेऽपि च ॥ ५४७ ॥
आत्मत्वेनैव जीवाद्भेददृष्टिः सूत्रिता पुनः ॥ * आत्मेति तूपगच्छन्ति ग्राहयन्ति च सूत्रके ॥५४८॥
अत एव परैश्चापि व्यक्तिस्थानीयमत्र च ॥ विहायाहंकृतेरंशं सामान्यस्थानिनं पुनः ॥ ५४९ ॥
चैतन्यस्यैव चाभेदो ह्यादरेण समर्थितः ॥ विशिष्टं च स्वरूपं वा भेदाभावोपलक्षितं ॥ ५५० ॥
सामानाधिकरण्योक्तेर्विषयस्त्विति यद्यपि ॥ सर्वात्मना यत्र भेदग्राहि नास्ति प्रमाणकम् ॥५५१॥
विषयस्तत्स्वरूपैक्यं सोऽयं देवादिके स्थले ॥ भेदग्राहि प्रमाणं स्याद्यत्र कार्ये च कारणे ॥ ५५२॥
पृथक्सत्तावच्छेदकभेदाभावोपलक्षितम् ॥ स्वरूपद्वयमेवं वा भेदः सामान्य एव यः ॥ ५५३ ॥
तदभावोपलक्षितस्वरूपद्वयमेव वा ॥ विषयः प्रकृते "‡ चोत तमादेशमिति" श्रुतौ ॥ ५५४ ॥
एकविज्ञानतः सर्वविज्ञानोक्त्या तदंतरं ॥ सर्वात्मत्वं प्रतिज्ञाय श्रुतौ तदुपपादके ॥ ५५५ ॥
"‡‡ ऐतदात्म्यमिदं सर्वं" नवकृत्वोपदेशतः ॥ सामानाधिकरण्यस्य व्यपदेशो यथा पुनः ॥ ५५६ ॥
ब्रह्मस्वरूपयोर्न स्वरूपैक्यविषयस्तथा ॥ तत्त्वमस्यादिवाक्योक्तव्यपदेशोऽपि दृश्यते ॥ ५५७ ॥
भेदाभेदापदेशस्य तुल्यत्वादुभयत्र च ॥
"‡§ नान्योऽतोऽस्ति" तथा "†¶ यत्र नान्यत्पश्यति" चाप्यथ ॥५५८॥
% यस्मात्परं नापरंचेति विहितस्य श्रुतौ पुनः ॥ दृश्यभेदनिषेधस्य चेतनाचेतनत्वतः ॥५५९॥
संसार्यसंसारित्वाभ्यां विरुद्धाभ्यां परस्परम् ॥ विरुद्धधर्मवत्तस्य चोभयत्रापि तुल्यता ॥५६० ॥
ततोऽभेदनिषेधाच्च भेदस्य प्रतिपादनात् ॥ भेदाभेदौ सिध्यतस्तौ न विरोधस्तदेतयोः ॥५६१॥
अविद्यालक्षणोपाधिकृता मिथ्याभिधा इति ॥ यदुक्तं तदविद्याया मिथ्यायाश्चैव कुत्र चित् ॥५६२॥
अविद्योपाधिकायाश्चेत्ययुक्तं प्रतिभाति तत् ॥
न $ चाऽऽनुमानिकामिति "§ सूक्ष्मं तु" तादिति स्थले ॥ ५६३ ॥
अविद्यासूत्रितैवेति वाच्यं तत्र परात्परम् ॥
"‡* महतोऽव्यक्तमित्यत्र" प्रधानं त्रिगुणं पुनः ॥ ५६४ ॥
गृह्यतेऽव्यक्तशब्देनेत्येवं शंका समुद्भवेत् ॥ शरीररूपविन्यस्तगृहीतेरित्यनेन तु ॥ ५६५ ॥

* ब्र. सू.–३ अ.–४ पा.–१. ‡ छांदोग्योपनिषदि प्र.–६ खं.–१ मं.–३.
‡‡ छांदोग्योपनिषदि प्र.–६ खं.–८ मं.–७. % श्वेताश्वतरोपनिषदि अ.–३ मं.–९.
‡§ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–२३. †¶ छांदोग्योपनिषदि प्र.–७ खं.–२४ मं.–१.
$ ब्र. सू.–१ अ.–१ पा.–४. § ब्र. सू.–२ अ.–१ पा. –४. ‡* कठोपनिषदि अ.–२ वल्ली–१ मं.–७.

"× आत्मानं रथिनं विद्धि शरीरं रथमेव तु" ॥ इति मंत्रे रथत्वेन रूपितं देहमेव हि ॥ ४६६ ॥
गृह्यते न प्रधानमित्युक्त्वा च समनंतरम् ॥ व्यक्तत्वात्तु शरीरस्य कथमव्यक्तता भवेत् ॥ ४६७ ॥
इत्याशंक्याथ "§ सूक्ष्मं तु तदर्हत्वादिना" पुनः ॥ सूक्ष्मं शरीरमेवात्र व्यक्तशब्देन गृह्यते ॥५६८॥
स्थूलं शरीरं नेत्युक्तं नाविद्या त्रिगुणा पुनः ॥ अव्यक्तशब्दग्राह्यः स्यात्सूक्ष्मदेहस्य संभवे ॥५६९॥
अप्रसिद्धा च या विद्या न ग्राह्या वै यतश्च सा ॥ अविद्याया उपादानतया शब्दे प्रकारतः॥ ॥५७०॥
ब्रह्मांडव्यापितायास्तु चाहमज्ञ इति स्वतः ॥ सर्वप्रत्यक्षतायाश्चाप्यंगीकारेण वै पुनः ॥ ५७१ ॥
सूक्ष्मत्वाव्यक्तशब्दार्हत्वयोः पुनरसंभवात् ॥ अन्यथा पूर्वसूत्रे तु गृह्यते व्यक्तशब्दतः ॥ ५७२ ॥
गृह्यते देहमित्युक्त्वा तत उत्तरसूत्रके ॥ अविद्या गृह्यतेत्येव माने व्याहतिसंभवात् ॥ ५७३ ॥
प्रधानवादापत्तेश्च शंकितव्यं न चाप्यथ ॥ "¶ अर्थवत्तदधीनत्वादित्यनेन" प्रधानकम् ॥ ५७४ ॥
स्वतंत्रमीश्वराधीनवैलक्षण्यमुदीरितम् ॥ इति सेश्वरसांख्यानां योगानां च मते पुनः ॥ ५७५ ॥
प्रधानस्येश्वराधीनतांगीकारेण तावता ॥ वैलक्षण्यं न चासिद्धेरुक्ता रीतिर्न संगता ॥ ५७६ ॥
यथेंद्रियप्रवृत्तीनामर्थाधीनतया पुनः ॥ इंद्रियेभ्यः परत्वं स्यादर्थानां चैवमेव हि ॥ ५७७ ॥
आत्मप्रवृत्तेर्देहस्याधीनत्वाद्वर्ष्मणः पुनः ॥ परत्वमात्मनश्चैवमर्थकं सूत्रमत्र हि ॥ ५७८ ॥
किंचाविद्या सूत्रिता चेदुत्तराधिकरणं तत् ॥ अनारब्धव्यमेव स्यादजामंत्रेऽपि तद्ग्रहे ॥ ५७९ ॥
संभाविते प्रधानस्य ग्रहणे च विशेषतः ॥ कारणाभावतः पूर्वपक्षानुत्थानतः पुनः ॥ ५८० ॥

"† देवात्मशक्तिं स्वगुणैर्निगूढामुत्तरत्र च" ॥
"‡ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" ॥ ५८१ ॥
इत्यादिनेश्वराधीनत्वस्यैव प्रकृतेः पुनः ॥
उपात्तत्वेन तन्मंत्रे मध्येऽपि प्रकृतेः पुनः ॥ ५८२ ॥
परामर्शस्य न्याय्यत्वात्तथा "@ ज्योतिरुपक्रमात् ॥
तथा ह्यधीयते एके" "⁂ मध्वादिवदिति ह्यथ ॥ ५८३ ॥

तत्कल्पनोपदेशाच्चेत्येवं हि स्यादसंगतम् ॥ अनादिभूताविद्यायाः सम्यग्ग्रहणसंभवे ॥ ५८४ ॥
मुख्यत्वात्प्रकृतत्वाच्च तत्परित्यागतस्ततः ॥ अजाशब्देन प्रकृतिं तां तेजोबन्नलक्षणाम् ॥५८५ ॥
शाखान्तरानुसारेण पूर्वरीतिं विहाय च ॥ गृहीत्वा जनिमत्वेनाप्यजत्वाभावतः पुनः ॥ ५८६ ॥

---

× कठोपनिषदि अ.–१ वल्ली–३ मं.–३. § ब्र सू.–२ अ.–१ पा.–४.
¶ ब्र. सू.–३ अ.–१ पा.–४.
† श्वेताश्वतरोपनिषदि अ.–१ मं.–२. ‡ श्वेताश्वतरोपनिषदि अ.–४ मं.१०.
@ ब्र. सू.–९ अ.–१ पा.–४. ⁂ ब्र. सू.–१० अ.–१ पा.–४.

अजाशब्दासंगतिरित्याशंक्य मधुनो यथा ॥
% आदित्यस्यासावादित्यो देवमध्विति मंत्रतः ॥ ५८७ ॥
मधुत्वकल्पनं चैवमनजायाश्च केवलम् ॥
तेजोवन्नादिप्रकृतेरजावदियमित्यजा ॥ ५८८ ॥
अजत्वकल्पनमिति वचनस्याप्यसंगतेः ॥
तस्मात्तेजोवन्नरूपप्रकृतिव्यतिरेकतः ॥ ५८९ ॥
अनादिभूता विद्या न सूत्रिताऽभिमता न च ॥
अस्ति प्रमाणभावेन न चाविद्यां विना पुनः ५९० ॥
ब्रह्मणोऽवयवाभावात्परिणामोपपादनम् ॥
"† कृत्स्नप्रसक्तिसूत्रस्य" व्याख्यानावसरे मया ॥ ५९१ ॥
आशंक्य परिहारोऽपि विस्तरेण प्रदर्श्यते ॥
भेदाभेदाविमौ सिद्धौ तस्मादित्युपरम्यते ॥ ५९२ ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकंठकृते निगमागमसारसंग्रहे क्रियासारे प्रथमोपदेशः ॥

व्या०— यतः पूर्ववृत्तं सर्वं चतुर्थोपदेशे सौत्राधिकरणविचारानंतरं स्पष्टीभविष्यति । विशेषवक्तव्यत्वात्तत्र प्रतिपादनेन गतार्थमित्युपरम्यते । "वीरशैवानुसारेण निर्वाणार्येण मंत्रिणा । उपदेशः प्राथमिको व्यांख्यातो विदुषां मुदे" ।

इति श्रीमदनादिवीरशैवसिद्धान्तपारावारराकाशशांकगाम्भीर्यमाधुर्यधैर्यौदार्यशौर्याद्यखिलगुणगणालंकृतपदवाक्यप्रमाणपारावारपारीणकरदीकृतनिखिलभूमंडलीमंडितकेळदिसंस्थानाधीश्वरसोमशेखरभूपालसाम्राज्यधुरंधरावनीमंडलाखंडलनिर्वाणमंत्रिराजविरचितायां क्रियासारव्याख्यायां वीरशैवक्रियासारसारसर्वस्वभूषणाभिख्यायां प्रथमोपदेशः संपूर्णः । श्रीः श्रीः ॥

% छांदोग्योपनिषदि प्र.—३ खं.—१ मं—१. † ब्र. सू.—२६ अ.—२ पा.—१.

॥ श्रीगिरीशाय नमः ॥

# अथ क्रियासारे द्वितीयोपदेशप्रारंभः

" निर्वाणेंद्रनरर्षभः प्रकटयन्नारात्क्रियासारवाग्गुंभोज्जृंभदपारशैवपदवीं कैवल्यलक्ष्मीप्रदाम् ॥
व्याख्यामाद्युपदेशमादिमगिरा बध्दं द्वितीयं क्रमादार्यैश्क्षुण्णपथा तथा विवृणुते सौलभ्यसंवित्कृते " ॥

मू०— तत्रादिमोपदेशेऽस्मिन् सर्वज्ञे सर्वशक्तिके ॥
उपादाने प्रपंचस्य निमित्ते ब्रह्मणि क्रमात् ॥ १ ॥

सर्ववेदान्तवाक्यानां दर्शितस्तु समन्वयः ॥ स्मृत्यादिभिर्विरोधेन बाधाभावो द्वितीयके ॥ २ ॥
उपदेशे युक्तिभिस्तु बहुभिः संप्रदर्श्यते ॥ तत्र वेदान्तवाक्यानि जगतां ब्रह्म कारणम् ॥ ३ ॥
उपादानमिति प्राहुः प्रधानमिति सांख्यकाः ॥ ततो विरोधाद्वक्तव्यो बाधस्त्वन्यतरस्य हि ॥ ४ ॥
तत्र श्रुतेरनुष्ठेयधर्मादौ सावकाशतः ॥ स्मृतेरनवकाशत्वाद्बाधो युक्तस्तया श्रुतेः ॥ ५ ॥
आर्षप्रत्यक्षतः पश्यत्प्रधानं दृश्यकारणम् ॥ प्रणिनाय स्मृतिं चर्षिस्ततः प्रत्यक्षमूलता ॥ ६ ॥
स्मृतेस्ततश्च बाधस्तु युक्त एव तया श्रुतेः ॥ नैवं स्मृत्या श्रुतेर्बाधोऽन्यस्मृत्यनवकाशतः ॥ ७ ॥
दोषप्रसंगान्नानास्मृत्यनुरोधेन चेत्पुनः ॥ नानाकारतया वक्तुं शक्यं नैवेति वै पुनः ॥ ८ ॥
वस्तुनि स्वेच्छया नानाविकल्पानुपपत्तितः ॥ अतः शैवीयधर्माणां प्रमाणैस्तु श्रुतीतरैः ॥ ९ ॥
निषेधे च क्वचिद्दृष्टे चामृतस्यादिवाक्यतः ॥ तेषां बाधनमेव स्यान्नैव तैः श्रुतिबाधनम् ॥ १० ॥
ननु शैवीयधर्माणां प्रामाण्येऽङ्गीकृते सति ॥ पूर्वकांडप्रसिद्धानामग्निष्टोमादिकर्मणाम् ॥ ११ ॥
वीरशैवीयधर्माणां परस्परविरोधतः ॥ अग्निष्टोमादिमंत्राणामेवं तदुपयोगिनाम् ॥ १२ ॥
सर्वेषां वेदभागानां वीरशैवीयकर्मणि ॥ केषां चिदुपयुक्तानाममृतस्यादिरूपिणाम् ॥ १३ ॥
परस्परविरोधेन बहुवेदानुसारतः ॥ वीरशैवोपयुक्तानां मंत्राणामेव वै पुनः ॥ १४ ॥
अर्थान्तरपरत्वं तु वक्तव्यमिति चेच्छृणु ॥ पूर्वकांडोक्तधर्माणामनुष्ठानविधौ ततः ॥ १५ ॥
" * सर्वमन्यत्परित्यज्येत्यादौ " श्रुतिभिरन्यथा ॥ उपात्तत्वाद्बवद्भिर्वा कथमत्रोपपद्यते ॥ १६ ॥
कर्मकांडोक्तकर्मभ्यो वाच्यं प्राबल्यमेव हि ॥ ब्रह्मकांडस्य काचाश्मरत्नयोरिव यत्तयोः ॥ १७ ॥
अंगांगित्वस्य चोक्तत्वात् ज्ञानप्राबल्यवादतः ॥
" × न कर्मणा न प्रजया धनेनेत्यादि " वाक्यतः ॥ १८ ॥
ज्ञानैकनाश्यता पाशस्येत्येवं च व्यवस्थितेः ॥ न कर्मकांडवैय्यर्थ्यात्तद्दृष्टान्तपुरःसरम् ॥ १९ ॥
श्रुतिमात्रस्य वैय्यर्थ्यानुमितौ वेदमूलता ॥ न वक्तव्येति प्रक्रान्तक्रमभंगः समापतेत् ॥ २० ॥
न क्वचिद्वेदभागस्य वेदमात्राप्रमाणताम् ॥ किंतु वच्मः कर्मकांडाद्ज्ञानकांडस्य मुख्यताम् ॥ २१ ॥

* अथर्वशिखोपनिषदि-२. × कैवल्योपनिषदि मं.-२.

तत्रापि वीरशैवानां तत्र दृष्टान्त उच्यते ॥ रत्नापणे निविष्टानां विविधानां क्रमेण हि ॥ २२ ॥
काचमुक्तामरकतप्रभृतीनां यथा पुनः ॥ क्रियाधिकारानुगुणा(द्)दर्शयेत्तदतिक्रयम् ॥ २३ ॥
गृहीतारः स्वसामर्थ्यानुगुण्येनैव केवलम् ॥ गृण्हन्ति नैव चान्यस्य दूषणायैव कल्पते ॥ २४ ॥
एवं सामान्यतो वेदप्रामाण्ये सति तत्पुनः ॥ स्वाधिकारानुसारेण वैदिकेषु प्रवर्तते ॥ २५ ॥
क्रमसोपानमार्गेषु त्रयाणामथ वा द्वयोः ॥ अतिक्रमेण चारूढे सोपानोत्पाटनं न हि ॥ २६ ॥
कुर्वन्ति तद्वदेवात्र सर्वेषां च प्रमाणता ॥ तर्हि शैवः क्वचिद्वापि सर्वकर्माणि यत्नतः ॥ २७ ॥
अनुतिष्ठेत्प्रमाणं चेदित्येवं नापलप्यताम् ॥ राजा धनी वा लोकेषु सत्सु रत्नेषु भूरिशः ॥ २८ ॥
अल्पक्रयमणिं धत्ते तावता तन्न दूष्यते ॥ एवं प्रमाणं वेदाश्चेत्यास्तां किं विस्तरेण तु ॥ २९ ॥
अत्र सैद्धान्तिकीयं मे सरणिर्दर्शयिष्यते ॥ सर्ववेदान्तवाक्यानां सर्वज्ञे सर्वशक्तिके ॥ ३० ॥
लिंगे जगदुपादाने निमित्ते परमेश्वरे ॥ आद्योपदेशे कथितं वाच्यवाचकयोर्बलात् ॥ ३१ ॥
समन्वयो दर्श्यतेऽत्र लिंगांगैक्यस्य दर्शनात् ॥ तस्य * स्मृतिविरोधेन सावकाशत्वदोषतः ॥ ३२ ॥
तद्बाधपरिहाराय द्वितीयोऽध्याय इष्यते । परं जगदुपादानमिति वेदा वदन्ति हि ॥ ३३ ॥
स्मृतिः प्रधानं वदतीत्येतदन्यतरत्तदा ॥ बाधितव्यं विरोधेन तयोः कस्येति संशयः ॥ ३४ ॥
तत्रानुष्ठेयधर्मादौ सावकाशा श्रुतिः स्मृता ॥ स्मृतिर्निरवकाशा स्यात्तत्रैव प्रतिपादिका ॥ ३५ ॥
तस्मात्स्मृत्या श्रुतेर्बाधो युक्त इत्यब्रवीन्मुनिः ॥ आर्षप्रत्यक्षयोगेन जगत्कारणमेव तत् ॥ ३६ ॥
इति निश्चित्य तदनु स्मृतिमाशु चकार सः ॥ ततः प्रत्यक्षमूलत्वाच्छ्रुतेः प्राबल्यमत्र हि ॥ ३७ ॥
इति चेन्न प्रधानस्य कारणत्वं न युज्यते ॥ नानास्मृत्यनुरोधेन नानाहेतुत्वकल्पनात् ॥ ३८ ॥

विकल्पानुपपत्तेश्च वस्तुनि श्रुतदोषतः ( श्रुतिदोषतः ) ॥
महर्षित्वाविशेषाच्च परस्परविरोधतः ॥ ३९ ॥
पौरुषेयतया तासामप्रामाण्यं न च श्रुतेः ॥
प्रत्यक्षमानमूलत्वं प्रधानोक्तेस्तदोच्यते ॥ ४० ॥

व्या०— "* स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्" तत्र प्रथमेऽध्याये सर्वज्ञे सर्वशक्तौ जगदुपादाने ब्रह्मणि निमित्तभूते च वेदान्तवाक्यानां समन्वयो दर्शितः । तस्य स्मृत्यादिविरोधेन बाधपरिहाराय द्वितीयोऽध्याय आरभ्यते । तत्र वेदान्ता ब्रह्म जगदुपादानमिति प्रतिपादयन्ति । सांख्यस्मृतिप्रधानमिति । ततश्च विरोधादन्यतरद्बाधितव्यं तत्र श्रुतेरनुष्ठेयधर्मादौ सावकाशत्वात्स्मृतेश्च तत्रमात्रप्रतिपादकत्वेन निरवकाशत्वात्तयैव श्रुतेर्बाधो युक्तः कपिलो हि महर्षिः प्रत्यक्षतः जगत्कारणतया प्रधानमुपलभ्य स्मृतिं प्रणीतवान् । ततश्च प्रत्यक्षवेदमूलत्वात्स्मृतेः प्राबल्यं ततश्च तयैव श्रुतेर्बाध इति प्राप्ते ब्रूमः । न सांख्यस्मृत्या श्रुतिबाधो युक्तः । अन्यस्मृत्य-

* ब्र. सू.–१ अ.–२ पा.–१.

नवकाशदोषप्रसंगात् । यदि सांख्यस्मृतिवशात् । प्रधानं जगत्कारणमभ्युपगम्येत । तर्हि परमाणुकारणतावादिकाणादादिस्मृतीनामनवकाशः प्रसज्येत । न च नानास्मृत्यनुरोधान्नानाकारणत्वमभ्युपगंतुं शक्यं । वस्तुनि विकल्पानुपपत्तेर्न च स्मृतिषु कस्याश्चित्प्राबल्यं स्मृतित्वाविशेषान्महर्षिप्रणीतत्वाविशेषाच्च । तस्मात्स्मृतीनां परस्परविरुद्धार्थतया अप्रामाण्यस्यावश्यकत्वात्पौरुषेयतया । कारणदोषसंभवाच्च । अपौरुषेयतया निर्दोषवेदविरोधे तासामेवाप्रामाण्यं । यत्तु कपिलप्रत्यक्षमूलत्वं प्रधानवादस्योक्तं । तत्राह ॥

मू०— ×इतरेषां चानुपलब्धेरित्येवानुशासनात् ॥
आर्षदर्शनसंपन्नैः कणादप्रमुखैः किमु ॥ ४१ ॥

तन्नोपलभ्यते तस्मात्प्रधानांशे स्मृतेर्न हि ॥ शिवलिंगस्य भावस्य विश्वमेतच्चराचरम् ॥ ४२ ॥
तदेतन्न विजानन्ति पशवः पाशगौरवात् ॥ तमेकमेव बहुधा वदन्ति ब्रह्म शाश्वतम् ॥ ४३ ॥
अजानन्तः परं भावमविकल्पं महर्षयः ॥ अपरं ब्रह्म रूपं च परं ब्रह्मात्मकं तथा ॥ ४४ ॥
केचिदाहुर्महादेवमनादिनिधनं प्रभुं ॥ भूतेंद्रियान्तःकरणप्रधानविषयात्मकम् ॥ ४५ ॥
अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ॥ बृहत्वात् बृंहणत्वाच्च ब्रह्मणी ते परावरे ॥ ४६ ॥
अनेन ब्रह्मरूपेण ब्रह्मणोऽधिपतेः प्रभो ॥ विद्याऽविद्यास्वरूपीति कैश्चिदीशो निगद्यते ॥ ४७ ॥
विद्येति चेतनां प्राहुस्तथाऽविद्यामचेतनां ॥ विद्याऽविद्यात्मकं चैतद्विश्वं विश्वगुरोर्विभोः ॥ ४८ ॥
रूपमेव न संदेहो विश्वं तस्य वशे यतः ॥ भ्रांतिविद्यापरं चेति शार्वं रूपं परे विदुः ॥ ४९ ॥
अयथाबुद्धिरर्थेषु बहुधा भ्रांतिरुच्यते ॥ यथात्माकारसंपत्तिर्विद्येति परिकीर्त्यते ॥ ५० ॥
विकल्परहितं तत्त्वं परमित्यभिधीयते ॥ तत्रेदं शांकरं रूपं तदाज्ञाधिष्ठितं यतः ॥ ५१ ॥
सदसद्रूप इत्याहुः सदसत्पतिरित्यपि ॥ सत्ये साधौ च सच्छब्दः सद्भिरेव प्रयुज्यते ॥ ५२ ॥
विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः ॥ "*सच्चासच्च" जगद्विश्वं शरीरं परमेष्ठिनः ॥ ५३ ॥
यदिदं सदिति प्रोक्तं यच्चासदिति कथ्यते ॥ तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते ॥ ५४ ॥
क्षराक्षरात्मकं प्राहुः क्षराक्षरपदं परे ॥ "‡क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" ॥ ५५ ॥
उभे ते परमेशस्य रूपं तस्य वशे यतः ॥ तयोः शिवः परः शांतः क्षराक्षरपरः स्मृतः ॥ ५६ ॥
समष्टिव्यष्टिरूपं च समष्टिव्यष्टिकारणम् ॥ वदन्ति मुनयः केचिच्छिवं परमकारणम् ॥ ५७ ॥
समष्टिं विदुरव्यक्तं व्यष्टिं व्यक्तं तथैव च ॥ ते रूपे परमेशस्य तदिच्छामनुवर्तनात् ॥ ५८ ॥
तयोः कारणभावेन शिवलिंगं परात्परं ॥ कारणार्थविदः प्राहुः समष्टिव्यष्टिकारणम् ॥ ५९ ॥
जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः ॥ यत्पिंडेष्वनुवर्तेत सा "§जातिरिति" कथ्यते ॥६०॥

× ब्र. सू.–२ अ.–२ पा.–१. * प्रश्नोपनिषदि प्रश्न–४ मं.–५.
‡ भगवद्गीतायां अ.–१५ श्लो.–१६. § मीमांसादर्शने सू.–२४ अ.–१ पा.–४.

व्यक्त ( क्ति ) व्यावृत्तरूपं तत्पिंडं जातेः समाश्रयः ॥
व्यक्तयो जातयश्चैव तदाज्ञापरिपा ( लिताः ) लकाः ॥ ६१ ॥
यतस्ततो महादेवो जातिव्यक्तिवपुः स्मृतः ॥ प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः ॥ ६२ ॥
प्रधानं प्रकृतिं प्राहुः क्षेत्रज्ञं पुरुषं तथा ॥ त्रयोविंशतितत्त्वानि व्यक्तमाहुर्मनीषिणः ॥ ६३ ॥
कालः कार्यप्रपंचस्य परिणामैककारणम् ॥ एषामीशः शिवो धाता प्रवर्तकनिवर्तकः ॥ ६४ ॥
प्रादुर्भावतिरोभावहेतुरेकः स्वराडजः ॥ तस्मात्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥ ६५ ॥
हेतुर्नोऽधिपतेस्तेषां धाता "£ भोक्ता महेश्वरः" ॥
विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥ ६६ ॥
हिरण्यगर्भो लोकानां हेतुर्विश्वेश्वरो विराट् ॥ अंतर्यामी परश्चेति कथ्यते कविभिः शिवः ॥ ६७ ॥
प्राज्ञतैजसविश्वात्मेत्यपरे संप्रचक्षते ॥ माता मानं च मेयं च मतिमाहुरथापरे ॥ ६८ ॥
कर्ता क्रिया च कार्यं च करणं कारणं परे ॥ जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते ॥ ६९ ॥
तुरीयमपरे प्राहुस्तुरीयातीतमित्यपि ॥ केचित्संसारिणं प्राहुस्तमसंसारिणं परे ॥ ७० ॥
स्वतंत्रमपरे प्राहुरस्वतंत्रं परे विदुः ॥ घोरमित्यपरे प्राहुः सौम्यमित्यपरे विदुः ॥ ७१ ॥
तमाहुर्निर्गुणं केचिद्गुणवंतं परे विदुः ॥ रागवंतं परे प्राहुर्वीतरागं तथाऽपरे ॥ ७२ ॥
निष्क्रियं तं परे प्राहुः सक्रियं तं परे जनाः ॥ निरिंद्रियं परे प्राहुः सेंद्रियं च तथाऽपरे ॥७३॥
ध्रुवमित्यपरे प्राहुस्तमध्रुवमथा परे ॥ अरूपं केचिदाहुर्वै रूपवंतं परे विदुः ॥ ७४ ॥
दृश्यमित्यपरे प्राहुस्तमदृश्यमितीतरे ॥ वाच्यमित्यपरे प्राहुस्तमवाच्यमितीतरे ॥ ७५ ॥
शब्दात्मकं परे प्राहुः शब्दातीतमथाऽपरे ॥ केचिच्चिंतामयं प्राहुश्चिंतया रहितं परे ॥ ७६ ॥
ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे ॥ केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन ॥ ७७ ॥
केचिदेकं तमेवाहुरनेकमिति चापरे ॥ एवं विकल्पमानेषु याथार्थ्यं परमेशितुः ॥ ७८ ॥
नाध्यवस्यन्ति मुनयो नानाप्रत्ययकारणात् ॥ ये पुनः सर्वभावेन प्रपन्नाः परमेश्वरम् ॥
ते विजानन्त्ययत्नेन शिवं परमकारणम् ॥ ७९ ॥
यावत्पश्यो नैष पश्यत्यनीशं कविं पुराणं भुवनस्येशितारम् ॥
तावद्दुःखे वर्तते बद्धपाशः संसारेऽस्मिंश्चक्रनेमिक्रमेण ॥ ८० ॥
"† यदा पश्यन् पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम् ॥
तदा विद्वान्पुण्यपापे विहाय" निरंजनः परमुपैति साम्यम् ॥ ८१ ॥
न शिवस्याणवो बंधः कार्मो मायेय एव च ॥ प्राकृतो वाऽथ बौद्धो वाऽप्यहंकारात्मकस्तथा ॥८२॥

£ भगवद्गीतायां अ.–१३ श्लो.–२२. † मैत्र्युपनिषदि प्र.–६ मं.–१८.

नैवास्य मानसो बंधो न चैत्तो नेन्द्रियात्मकः ॥ न च तन्मात्रबंधोऽस्य भूतबंधो न कश्चन ॥ ८३ ॥
न च कालः कला चैव न विद्या नियतिस्तथा ॥ न रागो न च विद्वेषः शंभोरमिततेजसः ॥८४॥
न चाप्यभिनिवेशोऽस्य कुशलाकुशलान्यपि ॥ कर्माणि तद्विपाकाश्च सुखदुःखे न तत्फले ॥ ८५ ॥
आशया नास्य संबंधः संसारैः कर्मणामपि ॥ भोगैश्च भोगसंस्कारैः कालत्रितयगोचरैः ॥ ८६ ॥
न तस्य कारणं कर्ता नादिरंतस्तथाऽन्तरम् ॥ न कर्म करणं वापि नाकार्यं कार्यमेव च ॥८७॥
नास्य बंधुरबंधुर्वा नियंता प्रेरकोऽपि वा ॥ न पतिर्न गुरुस्त्राता नाधिको न समस्तथा ॥ ८८ ॥
न जन्ममरणे तस्य नाकांक्षितमकांक्षितम् ॥ न विधिर्न निषेधश्च न मुक्तिर्न च बंधनं ॥ ८९ ॥
नास्ति यद्यदकल्याणं तत्तदस्य कदाचन ॥ कल्याणं सकलं चास्ति परमात्मा शिवो यतः ॥९०॥
स शिवः सर्वमेवेदमधिष्ठाय स्वशक्तिभिः ॥ अप्रच्युतस्वतो भावास्थितः स्थाणुरतः स्मृतः ॥९१॥
शिवेनाधिष्ठितं यस्माज्जगदेतच्चराचरम् ॥ सर्वरूपस्थितः शर्वस्तथा ज्ञात्वा न मुह्यति ॥ ९२ ॥
“¶ सर्वो रुद्रो नमस्तस्मै पुरुषः स परो महान्” ॥ हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः ॥९३॥
अंबिकापतिरीशानः पिनाकी वृषवाहनः ॥ एको रुद्रः परं ब्रह्म पुरुषः कृष्णपिंगलः ॥ ९४ ॥
बालाग्रमात्रो हृन्मध्ये ध्येयोऽयं दहरान्तरे ॥ हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च ॥ ९५ ॥
योऽवसर्पत्यसौ देवो नीलग्रीवो हिरण्मयः ॥ सौम्यो घोरस्तथा मिश्रश्चाक्षरश्चामृतोऽव्ययः ॥९६॥
स पुंविशेषः परमो भगवानंतकान्तकः ॥ चेतनाचेतनान्मुक्तः प्रपंचाच्च परात्परः ॥ ९७ ॥
लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते ॥ शिवेनातिशयत्वेन स्थितिं प्राहुर्मनीषिणः ॥ ९८ ॥
प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरं ॥ उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ ९९ ॥
कालावच्छेदमुक्तानां गुरूणामप्यसौ गुरुः ॥ सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥ १०० ॥
शुद्धा स्वाभाविकी तस्य शक्तिः सर्वातिशायिनी ॥ ज्ञानमप्रतिघं नित्यं वपुरत्यंतनिर्मलं ॥ १०१ ॥
ऐश्वर्यमप्रतिद्वंद्वं सुखमात्यन्तिकं बलं ॥ तेजः प्रभावो वीर्यं च क्षमा कारुण्यमेव च ॥ १०२ ॥
परिपूर्णस्य सर्गाद्यैर्नात्मनोऽस्ति प्रयोजनम् ॥ परानुग्रह एवास्य फलं सर्गस्य कर्मणः ॥ १०३ ॥
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ॥ शिवरुद्रादिशब्दानां प्रणवोऽतिपरः स्मृतः ॥ १०४ ॥
शंभोः प्रणववाच्यस्य भावनात्तज्जपादपि ॥ या सिद्धिः सा परा प्राप्या भवत्येव न संशयः ॥१०५॥
तस्मादेकाक्षरं लिंगमाहुरागमपारगाः ॥ वाच्यवाचकयोरैक्यं मन्यमाना यशस्विनः ॥ १०६ ॥
अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि ॥ अकारश्चाप्युकारश्च मकारो नाद एव च ॥ १०७ ॥
अकारं बह्वृचं प्राहुरुकारो यजुरुच्यते ॥ मकारः सामनादस्तु श्रुतिराथर्वणी श्रुता ॥ १०८ ॥
अकारस्तु महद्बीजं रजः स्रष्टा चतुर्मुखः ॥ उकारः प्रकृतिर्योनिस्तत्त्वं पालयिता हरिः ॥ १०९ ॥
मकारः पुरुषो बीजी तमस्संहारको हरः ॥ नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥११०॥

¶ महानारायणोपनिषदि अनु–१२ मं.–१४.

एवं तिसृभिरेताभिर्मात्राभिर्निखिलं त्रिधा ॥ अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ॥ १११ ॥

"* यस्मात्परं नापरमस्ति किंचित् ॥ यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ॥

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं" ॥ ११२ ॥

शक्तिः स्वाभाविकी तस्य वेद्या विश्वविलक्षणा ॥ एकाऽनेकस्वरूपेण भाति भानोरिव प्रभा ॥ ११३ ॥

अनंताः शक्तयस्तस्य चेच्छाज्ञानक्रियादयः ॥ मायाद्याश्च भवेद्वह्नेर्विस्फुलिंगा यथा तथा ॥ ११४ ॥

सदाशिवेश्वराद्याश्च विद्याऽविद्येश्वरादयः ॥ अभवन्पुरुषाश्चान्या प्रकृतिश्च परात्परा ॥ ११५ ॥

महदादिविशेषान्तास्त्वजाद्याश्चापि मूर्तयः ॥ यच्चान्यदपि तत्सर्वमस्याः कार्यमितीरितम् ॥ ११६ ॥

सा शक्तिः सर्वगा सूक्ष्मा प्रबोधाऽऽनंदरूपिणी ॥

शक्तिमानुच्यते देवः शिवः शीतांशुभूषणः ॥ ११७ ॥

वेद्यः शिवः शिवा विद्या प्रज्ञा चैव श्रुतिः स्मृतिः ॥

धृतिरेषा स्थितिर्निष्ठा ज्ञानेच्छाकर्मशक्तयः ॥ ११८ ॥

आज्ञा चैवं परं ब्रह्म द्वे विद्ये च पराऽपरे ॥ शुद्धविद्या शुद्धकला सर्वं शक्तिकृतं यतः ॥ ११९ ॥

न मायाप्रकृतिर्जीवो विकारो विकृतिस्तथा ॥ न सन्नासच्च यत्किंचित्तया सर्वमिदं ततम् ॥ १२० ॥

सा देवी मायया सर्वं ब्रह्माद्यं सचराचरम् ॥ मोहयत्यप्रयत्नेन मोचयत्यपि लीलया ॥ १२१ ॥

अनया सह सर्वेशः सप्तविंशप्रकारया ॥ विश्वं व्याप्य स्थितस्तस्मान्मुक्तिरत्र प्रवर्तते ॥ १२२ ॥

श्रुतिस्मृतिषु सर्वत्र पुराणेष्वागमेषु च ॥ बहुधोल्लेखिताः पक्षास्तर्केण वचसा श्रुतेः ॥ १२३ ॥

तस्मात्सिद्धान्तपंथानमाश्रित्य ब्रह्मवादिनः ॥ सूत्राणां वेदशिरसामैक्यार्थं प्राप्यमादरात् ॥ १२४ ॥

लिंगांगसामरस्यार्थे प्रवृत्ते वेदमूर्धनि ॥ लिंगे ब्रह्मणि सर्वत्र ह्यन्वयो निश्चितो ध्रुवम् ॥ १२५ ॥

अप्रामाण्ये तु सांख्यस्य स्मृतेर्योगस्मृतेः परम् ॥ प्रामाण्यमुररीकार्यं श्रोतव्येति विधानतः ॥ १२६ ॥

तां योगमिति वाक्येन वेदचिन्हस्य दर्शनात् ॥ योगस्मृत्या प्रधानस्य कारणत्वस्य निश्चयात् ॥ १२७ ॥

ब्रह्मकारणतावादी लिंगांगैक्यान्वयः परे ॥ इति चेत्पौरुषेयत्वभ्रांतिदोषकलंकतः ॥ १२८ ॥

अपौरुषेयया श्रुत्या बाधो युक्तः स्मृतेर्ध्रुवम् ॥

ध्यानाद्यंशे स्मृतेस्तस्याः प्रामाण्यं न्यायगौरवात् ॥ १२९ ॥

श्रवणं मननं ध्यानं श्रुतिस्मृत्यागमेषु च ॥ ऐककंठ्येन सर्वत्र योगोऽयं प्रतिपादितः ॥ १३० ॥

योगो नाम हि संबंधो जीवात्मपरमात्मनोः ॥ ध्यानयोगेति वाक्येन योगनिष्ठा उदाहृताः ॥ १३१ ॥

अंगं जीवः परं लिंगं सामरस्यं तयोः शुभम् ॥ योग इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥ १३२ ॥

वालाग्रमात्रं विश्वेशं जातवेदस्वरूपकम् ॥ हृत्पद्मकर्णिकामध्ये ध्यात्वा धार्यं मुमुक्षुभिः ॥ १३३ ॥

सर्वज्ञं सर्वकर्तारं समस्ताधारमद्भुतम् ॥ प्रणवेनावृतं लिंगं प्रणवार्थं परात्परम् ॥ १३४ ॥

---

* श्वेताश्वतरोपनिषदि अ.-३ मं.-९.

सर्वस्य जगतः साक्षात्सृष्टिस्थित्यंतकारणम् ॥ उमासहायं कल्याणं नीलकंठं त्रिलोचनम् ॥ १३५ ॥
प्रशान्तं प्रभुमीशानं धारयेद्धृदयांबुजे ॥ ब्रह्म यत्सच्चिदानंदं परिपूर्णं च सर्वतः ॥ १३६ ॥
सर्वत्र दृश्यते नैव करणागोचरत्वतः ॥ दृश्यते तच्छरीरेऽस्मिंस्तस्माद्ब्रह्मपुरं च तत् ॥ १३७ ॥
तस्मिंस्तु कमलाभं यद्दहरं हृदयांबुजे ॥ दहरं पुंडरीकाख्यं वेश्म प्रोक्तं मनीषिभिः ॥ १३८ ॥
तस्मिन्नवस्थितं ब्रह्म तेन वेश्मेति कीर्तितम् ॥ तद्वेश्म वर्तते देहे तेन देहः पुराभिधः ॥ १३९ ॥
यदस्मिन्वर्तते लिंगं पुंडरीकाख्यवेश्मनि ॥ वियत्प्रमाणरूपत्वादाकाशाख्यं च तद्भवेत् ॥ १४० ॥
कल्याणगुणरत्नानां निधिमव्ययमद्भुतम् ॥ आत्मा तु देहे सर्वत्र वर्तमानोऽपि शंकरः ॥ १४१ ॥
अतीव हृदये त्वस्य प्रकाशो नेतरे तथा ॥ अहंशब्दाभिधो ह्यात्मा न विवादोऽत्र कस्यचित् ॥१४२॥
अहंशब्दं प्रयुंजानो लोकः सर्वोऽपि दृश्यते ॥ हृदयं निर्दिशत्येव ह्यहं तत्र स्थितस्ततः ॥ १४३ ॥
यतोऽस्य हृदये नित्यं प्रकाशोऽतीव विद्यते ॥ न तथान्यत्र तस्माच्च हृदयं हि विशिष्यते ॥१४४॥
तस्माध्दृदंबुजे धार्यं लिंगमाद्यं पुरातनम् ॥ अतिवर्णाश्रमी सोऽयं साक्षान्मोक्षैकभाजनम् ॥१४५॥
अयमेव हि योगोऽत्र सर्वशास्त्रार्थसंमतः ॥ * योगः स्मृतेस्तदंशे तु प्रामाण्यं नेतरत्र च ॥ १४६ ॥
यत्तु सांख्योक्ततर्केण विरोधो ह्युपपादितः ॥ § यद्विलक्षणं सर्वं न तत्प्रकृतिकं विदुः ॥ १४७ ॥
रुचकाद्या यथा सर्वे न मृत्प्रकृतिकाभवन् ॥ विमतं च जगत्सर्वं ब्रह्मोपादानकं न हि ॥ १४८ ॥
श्रुतिरैतिह्यमात्रत्वाद्दुर्बला तर्कतो भवेत् ॥ तस्मात्तर्काच्छ्रुतेर्बाधाज्जगन्न ब्रह्म हेतुकम् ॥ १४९ ॥

जगतोऽचेतनत्वं तु " % विज्ञानं चेति " वाक्यतः ॥
ब्रह्मणश्चेतनत्वं तु " ¶ यः सर्वज्ञेति " वाक्यतः ॥ १५० ॥
जगद्विलक्षणं ब्रह्म कथं ननु न हेतुकम् ॥
§† अपाणिपादतावाक्याच्चेतनत्वस्य निश्चयात् ॥ १५१ ॥
भोक्तॄणामपि भोज्यानां वैलक्षण्यं विलोकितम् ॥
श्वभ्य इत्यादिवाक्यानामधिष्ठानपरत्वतः ॥ १५२ ॥

बाधो दृढीकृतस्तस्माज्जगन्न ब्रह्महेतुकम् ॥ इति प्राप्ते "£ दृश्यते तु" यदुक्तं तन्मृषा भवेत् ॥१५३॥
अचेतनाच्चेतनानामुत्पत्तिः श्रूयते श्रुतौ ॥ चेतनाद्वाऽचेतनानामिष्यते श्रुतिसूत्रयोः ॥ १५४ ॥
यथा केशा वृश्चिकाद्याः पुरुषाद्गोमयात्तथा ॥ सर्वात्मना † प्रागसत्वे ह्यसत्कार्यं तथा भवेत् ॥१५५
कार्यात्मना निषेधो हि न तावत्कारणात्मना ॥ सत्वान्नासत्कार्यवादस्ततोऽत्राकारणात्मना ॥१५६॥
परपक्षेऽपि दोषोऽयं तुल्यश्चायं भविष्यति ॥ शब्दहीनात्प्रधानाद्धि शब्दवत्कार्यनिश्चयात् ॥ १५७॥

* ब्र. सू.–२ अ.–२ पा.–१. § ब्र. सू.–४ अ.–२ पा.–१.
% तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–३.- ¶ मुंडकोपनिषदि मुं.–१ खं.–१ मं.–९.
§† श्वेताश्वतरोपनिषदि अ–३ मं.–१९. £ ब्र. सू.–६ अ.–२ पा.–१. † ब्र. सू.–७ अ.–२ पा.–१.

‡‡न तु दृष्टान्तभावाच्च यथा वृक्षादयः श्रुताः ॥
तथा "**स्वपक्षदोषाच्च" न सांख्यस्यावकाशता ॥ १५८ ॥
यश्चोभयोः समो दोषः परीवादोऽपि वा समः ॥
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ १५९ ॥
†§ तर्केण प्रत्यवस्थानं श्रुत्युक्तेऽर्थे न रोचते ॥

व्या०— "%इतरेषां चानुपलब्धेः" यदि प्रधानं जगत्कारणं आर्षप्रत्यक्षयोग्यं तर्हि कणादप्रभृतिभिरप्यार्षदर्शनसंपन्नैः किमिति नोपलभ्यते तस्मादितरेषामनुपलब्धेरेव नास्ति प्रधानं यद्वा महदहंकारादीनां लोकवेदयोरनुपलब्धेस्तत्स्मृतेरप्रामाण्यमिति प्रधानांशेऽपि तथा "¶$एतेन योगः प्रत्युक्तः" ननु सांख्यस्मृतेरप्रामाण्येऽपि योगस्मृतेः प्रामाण्यमवश्यमभ्युपगंतव्यं "£श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्यैव निदिध्यासनविधानात्तां योग इति मन्यन्ते "$ विद्यामेतां योगविधिं च कृत्स्नं" इति वैदिकलिंगदर्शनाच्च तथा च प्रमाणीभूतया योगस्मृत्या प्रधानकर्तृत्वगमात् ब्रह्मकारणतावादिसमन्वयस्य बाध इति चेन्न । तत्राप्यपौरुषेयतया निर्दोषया श्रुत्या संभवात् । भ्रांतिकर्तृकपुरुषस्मृतेरेव बाधः । यद्यपि ध्यानाद्यंशे श्रुत्यनिरोधात्प्रामाण्यं संभवति । तथापि तत्त्वांशे श्रुतिविरोधादप्रामाण्यमेव योगस्मृतेः । "†न विलक्षणत्वादस्य तथात्वं च शब्दात्" इदानीं ब्रह्मकारणतावादिसमन्वयस्य सांख्योक्ततर्कविरोधादप्रामाण्यं न वेति संशयः । किं तावत्प्राप्तमधुना अप्रामाण्यमिति । कुतः तर्कविरोधात् । तथा हि लोके रुचकादयः स्वर्णविकाराः स्वसदृशोनोपादानेनान्विता उपलभ्यन्ते । ततश्चाचेतनस्य जगत अचेतनं प्रधानमेव कारणं युक्तं । न चेतनं ब्रह्म ततश्च प्रयोगः विमतं जगन्न ब्रह्मोपादानं तद्विलक्षणत्वाद्यद्यद्विलक्षणं न तत्तत्प्रकृतिकम् । यथा मृद्विलक्षणरुचिकादयो न मृत्प्रकृतिका इति तर्कश्च प्रत्यक्षदृष्टः । दृष्टान्तावष्टंभेन प्रवर्तमानः प्रबलः । "श्रुतिरैतिह्यमात्रत्वात्ततस्तर्केण दुर्बला" श्रुतेर्बाधः कथं गम्यते । ब्रह्मणो विलक्षणत्वं जगत इति तत्राह । तथात्वं च शब्दादिति । "¶विज्ञानं चाविज्ञानं चेति" जगतोऽचेतनत्वं दर्शयति । "§यः सर्वज्ञः सर्वविदिति" ब्रह्मणश्चेतनत्वं विलक्षणत्वं ननु कथं जगतो विलक्षणत्वं "मृदब्रवीदापोऽब्रुवन्" । इत्यादीनामपि चेतनत्वावगमात्तत्राह "@अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां" मृदब्रवीदित्यादौ मृदाद्यभिमानिनी देवतैव व्यपदिश्यते । न मृदादयः । एवं भोक्तॄणां भोग्यानां च चेतनाचेतनत्वलक्षणविशेषणस्य सर्वलोकसिद्धत्वाद्ब्रह्मणोऽस्योपादेयतया मृदादावनुगतत्वाच्च "*तत्सृष्ट्वा तदेवानुप्राविशदिति" श्रुतेः ततश्च मृदब्रवीविदित्यादेरभिमानिदेवताविषयत्वाज्जगतः अचेतनत्वान्न चेतनादुत्पत्तिः संभवतीति । प्राप्ते ब्रूमः । "‡दृश्यते तु" तु शब्दः पक्षं व्यावर्तयति । यदुक्तं जग-

‡‡ ब्र. सू.–९ अ.२ पा.–१. ** ब्र. सू.–१० अ.–२ पा.–१.
†§ ब्र. सू.–११ अ.–२ पा.–१. % ब्र. सू.–२ अ.–२ पा.–१. ¶$ ब्र. सू.–३ अ.–२ पा.–१.
£ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–५. $ कठोपनिषदि अ.–२ वल्ली–६ मं.–१८.
† ब्र. सू.–४ अ.–२ पा.–१. ¶ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–६ मं.–३.
§ मुंडकोपनिषदि मुं.–१ खं.–१ मं.–९. @ ब्र. सू.–५ अ.–२ पा.–१.
* तैत्तिरीयोपनिषदि वल्ली–२ अनु.६ मं.–३. ‡ ब्र. सू.–६ अ.–१ पा.–१.

ब्रह्मप्रकृतिकं तत्तद्विलक्षणत्वादिति । तद्विलक्षणयोरप्युपादानोपादेयभावस्य लोकदृष्टत्वात् गोमयाद्वृश्चिको जायते पुरुषात्केशादय इति । यदि तत्रापि पार्थिवत्वादिना सालक्षण्यं तर्हि जगद्ब्रह्मणोरपि सत्वेन सालक्षण्यं तुल्यं । अत्यंतसाम्ये च प्रकृतिविकारभाव एव न स्यात् । ननु यद्यचेतनमशुद्धं जगच्छुद्धाच्चेतनाज्जायत इत्यभ्युपगम्येत । तर्हि प्रागत एवोत्पत्त्यभ्युपगमात् असत्कार्यकारणतापत्तिस्तत्राह । "‖असदितिचेन्न प्रतिषेधमात्रत्वात्" सर्वात्मना प्रागसत्वे हि असत्कार्यवादो भवति । इह च कार्यात्मना प्रतिषेधमात्रं न कारणात्मना । ततश्च कारणात्मना प्रागपि सत्वान्नासत्कार्यवादतुल्यश्चायं परपक्षेऽपि दोषः । शब्दादिविहीनात्प्रधानात् । शब्दादिमतः कार्यस्य उत्पत्त्यभ्युपगमात् । "%अपीतौ तद्वत्प्रसंगादसमंजसं" यदि शुद्धं ब्रह्म अशुद्धादिमतो जगतः उपादानमभ्युपगम्येत । तर्ह्यपीतौ प्रलये कारणमपि गच्छत्कार्यं कारणमात्मीयदोषेण दूषयेत् । ततश्च ब्रह्मणोऽप्यशुद्धादिप्रसंग उच्यते । न तु दृष्टान्ताभावात् । यत्तु कारणमपि गच्छत्कार्यं कारणमात्मीयदोषेण दूषयेदिति । "*न तु दृष्टांतभावात्" यथा वृक्षादयः पृथिवीविकाराः । पृथिवीमपि गच्छन्ति । न पृथिवीमात्मीयेन दोषेण दूषयन्ति । तद्वज्जगदपि ब्रह्मापि गच्छन्न ब्रह्म दूषयेदिति । "¶स्वपक्षदोषाच्च" सांख्यस्यापि प्रधानं शब्दादिविहीनं शब्दादिमतः प्रपंचस्य कारणमिति पक्षेऽप्यस्य दोषस्य तुल्यत्वान्नैकः पर्यनुयोक्तव्यः । "‡तर्काप्रतिष्ठानात्" । "£अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः" । इतश्च नागमगम्येऽर्थे शुद्धतर्केण प्रत्यवस्थानं युक्तं तर्काणामप्रतिष्ठितत्वात् । तथा हि यः कश्चिदर्थः कैश्चिदभियुक्तैः । तर्केण प्रतिष्ठापित एवान्यैरभियुक्ततरैस्तर्कान्तरेणाभासीक्रियते । यथाऽऽहुः "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपद्यते" । यत इति । तन्नु तथा वयमनुमन्यामहे । यथा प्रतिष्ठितत्वदोषो न भवति । न हि प्रतिष्ठिततर्क एव नास्तीति शक्यं । तर्काणामप्रतिष्ठितदोषोऽपि तेनैव प्रतिष्ठापनीयः । केषांचित्तेषामप्रतिष्ठितत्वदर्शनात् अन्येऽप्यप्रतिष्ठिता इति सर्वतर्काप्रतिष्ठाने हीदमेव प्रतिष्ठितत्वं न सिध्येत् । तथा भोजनादौ प्रवृत्तिरपि न सिध्येत् । तस्यापि तर्कमूलत्वादिति चेन्न । एवमप्यनिर्मोक्षप्रसंगः । विशेषव्याप्तिमूलकानां यत्र धूमस्तत्राग्निरित्येवमादितर्काणां प्रतिष्ठितत्वेऽपि जगत्कारणविषये तेषामप्रतिष्ठितत्वादनिर्मोक्ष एव । सामान्यतो दृष्टानुमानस्य संभवात् । अत एव जगत्कारणवादिनां प्रतिपत्तिर्दृश्यते । यथाहुः "अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत् । तथा च श्रुतिः "×नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" "§एतेन शिष्टापरिग्रहा अपि व्याख्याताः ।

मू०— तर्काणामप्रतिष्ठानां शुष्काणामन्यथा भवेत् ॥ १६० ॥
अभियुक्तैः कैश्चिदत्र कैश्चिदन्यैर्निरूपितः ॥
अभियुक्ततरैरन्यैराभासीक्रियते तथा ॥ १६१ ॥
यत्नवानुमितोऽप्यर्थः कुशलैरनुमातृभिः ॥
अभियुक्ततरैरन्यैरन्यथैवोपपद्यते ॥ १६२ ॥

---

‖ब्र. सू.–७ अ.–२ पा.–१. %ब्र. सू.–८ अ.–२ पा.–१ *ब्र. सू.–९ अ.–२ पा.–१.
¶ब्र. सू.–१० अ.–२ पा.–१. ‡ब्र. सू.–११ अ.–२ पा.–१. ×कठोपनिषदि अ.–१ वल्ली–२ मं.–९.
£ब्र. सू.–१२ अ.–२ पा.–१. §ब्र. सू.–१३ अ.–२ पा.–१.

तर्काप्रतिष्ठितत्वं हि तर्केणैव निवार्यते ॥
केचित्तर्काः प्रतिष्ठाप्याः केचित्तर्काः प्रतिष्ठिताः ॥ १६३ ॥
सर्वं "‡ तर्काप्रतिष्ठाने" दोषलेशो न चाभवत् ॥
इदं तर्काप्रतिष्ठित्वं न सिध्येत्तर्कनिर्णये ॥ १६४ ॥
भोजनादौ यथा तर्कमूलत्वमिति चेन्न हि ॥
"¶ अनिर्मोक्षप्रसंगेन" लौकिकस्तर्कसंग्रहः ॥ १६५ ॥
युक्तोऽपि कारणे युक्त्या पूर्वदोषो हि दृश्यते ॥

व्या०— इदं सर्वं व्याख्यातं अथ व्याख्येयं ।

मू०— § शिष्टापरिग्रहास्सर्वे व्याख्यातास्तेन कारणे ॥ १६६ ॥

व्या०— प्रधानवादस्य श्रुतिप्रत्यासन्नत्वान्महर्षिभिश्च कैश्चित्सृष्ट्याद्यंते परिगृहीतत्वाच्च तन्निराकरणं प्रधानमनिराकरणन्यायेन प्रथमं कृतं । एतेनैव परमाण्वादिकारणवादा अपि निराकृताः द्रष्टव्याः । तर्काप्रतिष्ठितत्वदोषस्य तत्रापि तुल्यत्वाच्छ्रुतिविरोधाच्च ।

मू०— ‖ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवद्ध्रुवम् ॥
ब्रह्मात्मना भोक्तृभोग्यभोगानां लोकवद्यथा ॥ १६७ ॥
अभेदेऽपि स्वरूपेण विभागो निश्चितः परः ॥
अभेदः कारणात्तस्मात्कार्यस्याध्यवसीयते ॥ १६८ ॥

व्या०— "‖ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" । अन्यथा पुनर्ब्रह्मकारणवाद आक्षिप्यते । यदि ब्रह्म जगत्कारणं तर्ह्यैतदात्म्यादिश्रुतेः सर्वाभिन्नं ब्रह्माभ्युपगंतव्यं तच्च भोक्तृभोग्यानामेकत्वापत्तावयं भोक्ता इदं भोग्यमित्यादि विभागः प्रत्यक्षसिद्धो भज्येतेति । सा लोकवदिति ब्रह्मात्मना भोक्तृभोग्याद्यभेदेऽपि स्वरूपेण विभागः स्यादेव । यथा लोके समुद्रात्मना भेदेऽपि वीच्यादीनां परस्परमभेदः ।

मू०— "* तदारंभणशब्दादिभ्योत्तया" तन्निश्चयस्तथा ॥
स "× भावे चोपलब्धेश्च" स "£ सत्वाच्चापरस्य" च ॥ १६९ ॥
"% असद्व्यपदेशान्नेति चेन्न वाक्यशेषात्स निश्चितः ॥

व्या०— "* तदनन्यत्वमारंभणशब्दादिभ्यः" सिद्धं कृत्वा कार्यकारणयोगविचारः कृतः । तमेवेदानीं साधयति । किं कार्यकारणयोरत्यंतं भेदोऽस्ति नेति संशयः । अभेदे कार्यकारणभावानुपपत्तेर्दंडघटयोरिव भेद एवात्यंतमिति प्राप्ते ब्रूमः । तदनन्यत्वं तस्मात्कारणादनन्यत्वं अभेदः । का-

---

‡ ब्र. सू.–११ अ.–२ पा.–१. ¶ ब्र. सू.–१२ अ.–२ पा.–१.
§ ब्र. सू.–१३ अ–२ पा.–१. ‖ ब्र. सू.–१४ अ.–२ पा.–१. * ब्र. सू.–१५ अ.–२ पा.–१.
× ब्र. सू.–१६ अ.–२ पा.–१. £ ब्र. सू.–१७ अ. -२ पा.–१. % ब्र. सू.–१८ अ.–२ पा.–१.

र्थस्य आरंभणशब्दादिभ्य उत "§ तमादेशमप्राक्ष्य" इत्यादि श्रुत्या एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय कथमन्यद्विज्ञानादन्यज्ञानमिति शंकायामेकमृत्पिंडेन यथा सर्वमृण्मयविज्ञानं स्यात्तद्वदित्युक्त्वा। कथं तत्राप्यन्यज्ञानेनान्यज्ञानमिति शंकायां। तत्रोपपत्तिर्वाचारंभणमित्यस्यायमर्थः आरभ्यत इत्यारंभणं। तच्च नाम विशेषणं वाचा केवलमारभ्यते। न तु मृद्व्यतिरिक्तो घटो नाम कश्चिदारभ्यते किंतु तस्या एव विकारः उभयत्रापि "ॐ मृत्तिकेत्येव सत्यमिति" न चैवं कार्यकारणयोरत्यंताभेद इति शंकनीयम्। कार्यकारणभावानुपपत्तेः तथा च मृद्घटयोरिव ब्रह्मप्रपंचयोरप्यभेदसिद्धिः। "×भावे चोपलब्धेः" नन्वस्य भावेनोपलब्धेः। कारणादन्यत्वं कार्यस्य यत्कारणं भाव एव कार्यं नियमेनोपलभ्यते। सत्यमेव मृदि घट उपलभ्यते नान्यथा। न तु गोर्भाव अश्व उपलभ्यते। नन्वस्य भावनोपलब्धिर्दृष्टा वन्हेर्भाव एव धूमोपलंभनात्। न शान्तेऽप्यग्नौ धूमदर्शनात्। भावे चोपलब्धेरिति सूत्रं। तस्य चायमर्थः। न केवलमारंभणादिभ्यः कार्यकारणयोरभेदः मृद्घटः। सुवर्णं कुंडलमित्यादौ प्रत्यक्षमुपलभ्यते। "‡ सत्त्वाच्चापरस्य" इतश्च कारणानन्यत्वं कार्यस्य यत्कारणमवरस्यावकालीनस्य कार्यस्य "$ सदेव सोम्येदं' इत्यादाविदंशब्दवाच्यकार्यस्य प्राक्काले सत्त्वावगमात्। "¶ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्" यदुक्तं कार्यस्य सत्त्वं प्रागेवावक्रम्यत इति तन्न। असदेवमित्यादिना प्रागसत्त्वस्यैव व्यपदेशादिति चेन्न। अयमसत्त्वव्यपदेशः कार्यात्यंतसत्त्वाभिप्रायेण तेन तर्हि धर्मांतरेणाभिव्यक्तनामरूपत्वं तेनासत्त्वव्यपदेशः। लोकेऽपि हि यदस्पष्टमुच्यते। तदसदित्युच्यते। कथं गम्यते। धर्मान्तरेणासद्व्यपदेशः वाक्यशेषात्। "*तत्सदासीत्" "§‡ ततो वै सदजायत तदात्मानं स्वयमकुरुतेति" च न हि प्रागत्यंतासतः सत्त्वं संगच्छते। नापि "§‡ तदात्मानं स्वयमकुरुत" इत्येतत्। "§¶ तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत" इति च श्रुत्यन्तरेऽनभिव्यक्तनामरूपात्मना प्राक्सत्त्वं पश्चात्तस्यैव व्याकृतनामरूपात्मना निष्पत्तिश्च स्पष्टं गम्यते।

मू०— धर्मान्तरे तद्वाक्यं च तदर्थे पर्यवस्यति ॥ १७० ॥

व्या०— व्याख्यातं।

मू०— £ युक्तेः शब्दान्तराच्चात्र ॥ पटवच्च तथा भवेत् ॥
@ इतरव्यपदेशाद्धि सूत्रेणापि स निश्चितः ॥ १७१ ॥

व्या०— "£ युक्तेः शब्दान्तराच्च" इतश्च कार्यस्य कारणादनन्यत्वं प्राक्सत्त्वं च युक्तेर्नहि तिलात्मना प्रागसतस्तैलस्य तिलेभ्य उत्पत्तिः संभवति। अन्यथाऽसत्त्वाविशेषात्सिकताभ्योऽपि तैलस्योत्पत्तिप्रसंगः ननु तिलानां शक्तत्वात्ततस्तैलमुत्पद्यते न सिकताभ्यः। तत्र शक्त्यभावादिति चेन्न। शक्तिरपि कार्यादत्यन्तं भिन्ना असती वा कार्यं न नियच्छेत् अनन्यत्वाविशेषादसत्त्वात्। "‖ पटवच्च" यथा संवेष्टितः पटः प्रसारिताच्च विशेषाच्च। तस्माच्छक्तिरप्यनन्यैवेति वक्तव्यं।

---

§ छांदोग्योपनिषदि प्र.—६ खं.—१ मं.—२. ॐ छांदोग्योपनिषदि प्र.—६ खं.—१ मं.—३. $ छांदोग्योपनिषदि प्र—६ खं—२ मं.—१.
× ब्र. सू.—१६ अ.—२ पा.—१. ‡ ब्र. सू.—१७ अ.—२ पा.—१. ¶ छांदोग्योपनिषदि प्र.—३ खं.—१९ मं.—१.
¶ ब्र. सू.—१८ अ.—२ पा.—१. * छांदोग्योपनिषदि प्र.—३ खं.—१९ मं.—१. §¶ बृहदारण्यकोपनिषदि अ.—३ ब्रा.—४ मं.—७.
§‡ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—७ मं.—१. @ ब्र. सू.—२१ अ.—२ पा.—१.
£ ब्र. सू.—१८ अ.—२ पा.—१. ‖ ब्र. सू.—१९ अ.—२ पा.—१.

पटान्नात्यंतं भिन्नः स एवायं पट इति प्रत्यभिज्ञानादेवमनभिव्यक्तनामरूपकारणावस्थमभिव्यक्तनाम रूपं च नात्यंतं भिन्नः "$*इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" अन्यथा पुनश्चेतनकारणवादः आक्षिप्यते । "*स आत्मेति" जीवपरयोरभेदव्यपदेशात् । ब्रह्मकर्तृका सृष्टिर्जीवकर्तृकेति । स्वस्य हितमेव सृजेन्नाहितं तथा सृष्टमप्यहितमिच्छया परिहरेत् । न च शक्तोऽतिहितमेव सृष्टमहितं च परिहर्तुं तस्माद्धि कारणादिप्रयोजको दोषो ब्रह्मणि प्रसज्येतेति चेन्नायं दोषः ।

मू०— "+अधिकं भेदनिर्देशात्" ब्रह्मसृष्टौ तु नेतरत् ॥
§अश्मादिवच्च तदनुपपत्तिर्दृश्यते यतः ॥ १७२ ॥
"¶उपसंहारसूत्रेण" ब्रह्मणः परिणामिता ॥
अंगीकृतप्रपंचस्य क्षीरवद्धीति निश्चयः ॥ १७३ ॥
"‡कृत्स्नप्रसक्तिसूत्रेण" स एव प्रतिपादितः ॥
तथा हि परिणामः किं कार्त्स्न्येनांशेन वा भवेत् ॥ १७४ ॥

कार्त्स्न्येन परिणामश्चेद्ब्रह्मभावः प्रसज्यते ॥ अंशेन परिणामश्चेद्ब्रह्म सावयवं भवेत् ॥ १७५ ॥
तदर्थकश्रुतिः कुप्येत् "ꣿनिष्क्रियं निष्कलं त्विति" ॥ पूर्वरूपपरित्यागेनास्य रूपसमुद्भवः ॥१७६॥
तथा सति जडं ब्रह्म स्यान्न स्यादजडं पुनः ॥ "£श्रुतेस्तु शब्दमूलत्वात्" ब्रह्मणो जगदात्मनः ॥
परिणामोऽजडं ब्रह्म पृथगेवेति गीयते ॥ उक्त्वा तेजोबन्नसृष्टिं तत् "$$सेयं देवतैक्षत" ॥१७८॥
"$$हंताहमिति" वाक्येन तेजोबन्नत्रयं विना ॥ उक्तत्वादीक्षितृत्वेन देवतायाश्च शब्दतः ॥१७९॥
अंगीकार्यं यथा शब्दं देवतावस्थितिः पृथक् ॥ प्रयोजनं न तर्केण श्रुत्या यत्र विधीयते ॥ १८० ॥
"£श्रुतेस्तु शब्दमूलत्वात्" "§+देवादिवदपीष्यते" ॥ "‡आत्मकृतेश्च" सूत्रेण परिणामोऽत्र निश्चितः ॥
एवं "@स्वपक्षदोषाच्च" स एव सुदृढीकृतः ॥ देवानां परिणामोऽत्र शक्तियोगान्नतु श्रुतौ ॥१८२॥
न ब्रह्मणस्ततः सूत्रं "‖¶सर्वोपेतेति" दर्शितम् ॥ नन्वेवमपि देवानां स्रष्टृत्वं करणैर्यतः ॥ १८३ ॥
ब्रह्मणोऽ"*‖करणत्वेन नेति चेदुक्तमेव तत्" ॥ करणत्वान्नेति चेत्तदत्रैवानुपदं यतः ॥१८४॥
"£+न प्रयोजनवत्त्वात्" तद्ब्रह्मणो न तथेति चेत् ॥
"+ꣿलोकवत्त्विति" सूत्रेण यथा राज्ञां तथाऽभवत् ॥ १८५ ॥
वैषम्यं निर्घृणत्वं च ब्रह्मणो नैव युज्यते ॥ तस्मात्कथं ब्रह्मणस्तदिति चेदुत्तरत्र च ॥१८६॥

---

$* ब्र. सू.–२१ अ.–२ पा.–१. *छांदोग्योपनिषदि प्र.–८ खं.–१२ मं.–४. +ब्र. सू.–२२ अ.–२ पा.–१.
§ब्र. सू.–२३ अ.–२ पा.–१. ¶ब्र. सू.–२४ अ.–२ पा.–१. ‡ब्र. सू.–२६ अ.–२ पा.–१
£ब्र. सू.–२७ अ.–२ पा.–१. ꣿश्वेताश्वतरोपनिषदि अ.–६ मं.–१९.
$$छांदोग्योपनिषदि प्र.–६ खं.–३ मं.–२. ‡ब्र. सू.–२६ अ.–१ पा.–४. @ब्र. सू.–२९ अ.–२ पा.–१.
‖¶ब्र. सू.–३० अ.–२ पा.–१. *‖ब्र. सू.–३१ अ.–२ पा.–१. £+ब्र. सू.–३२ अ.–२ पा.–१.
+ꣿब्र. सू.–३३ अ.–२ पा.–१. §+ब्र. सू.–२५ अ.–२ पा.–१.

"§ वैषम्येति" च सूत्रेण परिहारः प्रदर्श्यते ॥
ततः संदिग्धदोषेऽपि न ब्रह्मेति च सूत्रतः ॥ १८७ ॥
¶ उपपद्यत इत्यादिसूत्रेणापि समर्थितं ॥
"$ सर्वधर्मोपपत्तेश्च" साक्षित्वं ब्रह्मणोऽभवत् ॥ १८८ ॥
तस्माच्छक्तिविशिष्टं तद्ब्रह्मैकं शाश्वतं परं ॥
उपादानं निमित्तं च ब्रह्मैवेति प्रदर्शितम् ॥ १८९ ॥

व्या० "†§ अधिकं तु भेदनिर्देशात्"। न जीवो जगतः स्रष्टा यनोक्तदोषः स्यात्। किंतु तस्मादधिकं भिन्नं ब्रह्मैव जगतः स्रष्टा तत्र च नोक्तदोषप्रसंगः कथं गम्यते। जीवादधिकं ब्रह्मेति भेदनिर्देशात्। "* आत्मा वा अरे द्रष्टव्य" इत्यादिना कर्मकर्तृत्वेन भेदनिर्देशात् कथमभेदे जीवपरयोर्हीनाधिकभावः। तत्राह "† अश्मादिवच्च तदनुपपत्तिः"। यथाऽश्मनां वैडूर्यसूर्यकांतप्रभृतीनां पार्थिवानां चंपकाशोककिंशुकानां पाषाणत्वपार्थिवत्वादिना अभेदेऽपि स्वरूपभेदात्। स्वरूपवैचित्र्यं कार्यवैचित्र्यं हीनमध्यमोत्तमभावश्च। एवं जीवपरयोरपि अतस्तदनुपपत्तेः। "‡ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" चेतनद्वितीयं ब्रह्मैव जगतः कारणमित्यनुपपन्नं। कुतः उपसंहारदर्शनात्। लोके कुलालादयो मृद्दंडचक्रचीवरसलिलादीनि कारणांतराण्युपसंहृत्य तस्मै कार्याय प्रभवन्तो दृश्यन्ते। अतो ब्रह्मणोऽसहायस्य कारणत्वमनुपपन्नमिति चेन्न। क्षीरवद्धि यथा क्षीरं साधनांतरमनपेक्ष्यैव स्वयमेव दध्याकारेण परिणमते। एवं ब्रह्माप्यनपेक्ष्यैव साधनांतरं जगदाकारेण परिणमत इति युक्तं। न च देवतान्तराद्यपेक्षाऽस्तीति वाच्यं। तदभावेऽपि परिणामदर्शनात्। "$¶ देवादिवदपि लोके" यथा हि देवादयोऽनपेक्ष्यैव बाह्यं साधनांतरमैश्वर्ययोगाद्विचित्रप्रासादादि निर्मिमते। एवं ब्रह्मापि। न च यथैकस्य सामर्थ्यं तथेतरस्यापि इति नियंतुं शक्यं। विचित्रयोगात्पुंसा। "‖ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" क्षीरादिवद्ब्रह्मान्यनिरपेक्षं जगदाकारेण परिणमत इत्युक्तं। तत्र वक्तव्यं। किं कार्त्स्न्येन परिणमते उतैकदेशेनेति। तत्राद्ये प्रपंचकाले ब्रह्माभावप्रसंगः। कृत्स्नस्य ब्रह्मणो जगदाकारेण परिणतत्वात्पूर्वरूपपरित्यागेन न रूपान्तरापत्तिर्हि। परिणामो नाम तथा च अजडं ब्रह्म न स्यात्। अन्ते निरवयवत्वशब्दकोपः प्रसज्येत। "§ निष्कलं निष्क्रियं" इत्यादिश्रवणात्। "% श्रुतेस्तु शब्दमूलत्वात्" ब्रह्म जगदाकारेण परिणमते। "अजडं ब्रह्म पृथगवतिष्ठते"। चेति श्रुतेरवगम्यते। तेजोबन्नानां सृष्टिमुक्त्वानंतरमिदमाम्नायते। "@ सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" तेजोबन्नव्यतिरेकेणैक्षित्र्याः परस्या देवतायाः पृथगवस्थानप्रतीतेः शब्दमूलत्वाच्चार्थस्य यथाशब्दमिवाभ्युप-

---

§ ब्र. सू.–३४ अ.–२ पा.–१. ¶ ब्र. सू.–३५ अ.–२ पा.–१. $ ब्र. सू.–३६ अ.–२ पा.–१.
†§ ब्र. सूत्र–२२ अ.–२ पा.–१. * बृहदारण्यकोपनिषदि अ.–६ ब्रा.–५ मं.–६.
† ब्र. सू.–२३ अ.–२ पा.–१. ‡ ब्र. सू.–२४ अ.–२ पा.–१. $¶ ब्र सू.–२५ अ.–२ पा.–१.
‖ ब्र. सू.–२६ अ.–२ पा.–१ § श्वेताश्वतरोपनिषदि अ.–६ मं.–१९.
% ब्र. सू.–२७ अ.–२ पा.–१. @ छांदोग्योपनिषदि प्र.–६ खं.–३ मं.–२.

गन्तुं युक्तं । नात्र तर्केण प्रयोजनमस्ति । “‖* आत्मनि चैवं विचित्राश्च हि” जीवात्मनि स्वरूपानुपमर्देनैव विचित्रा बुद्धीच्छादयो लोकेऽपि दृश्यन्ते । तद्वत् ब्रह्मणोऽपि स्वानुपमर्देनैव जगत्परिणाम उपपद्यते । “‡† स्वपक्षदोषाच्च” प्रधानकारणवादिनामपि समानोऽयं दोषः । इतश्च ब्रह्मपरिणामेन काप्यनुपपत्तिः । “× सर्वोपेता च तद्दर्शनात्” सर्वशक्तियुक्ता च परदेवता श्रुतिः “§ न तस्य कार्यं करणं च विद्यते” इत्यादि “§ स्वाभाविकी ज्ञानबलक्रिया च” “% सत्यकामः सत्यसंकल्पः” इत्यादि च “† विकरणत्वान्नेति चेत्तदुक्तं” विकरणस्यापि कर्तृत्वं दर्शयति श्रुतिः । “‖ अपाणिपादो जवन” इत्यादि “$ न प्रयोजनवत्त्वात्” प्रयोजनोद्देशाभावे वा प्रवृत्तिरेव न स्यादिति कर्तृत्वानुपपत्तिरिति चेत् । “¶ लोकवत्तु लीलाकैवल्यं” यथा राजप्रभृतयः प्रयोजनमनुद्दिश्यैव केवललीलया विहारादिषु प्रवर्तन्ते । एवमादावकामः ईश्वरः स्वभावादेव जगदुत्पत्त्यादौ प्रवर्तते । अपरमितशक्तेरीश्वरस्य जगद्रचना लीलयैव । न च प्रयोजनवत्त्वं कल्पयितुं शक्यं । “£ आप्तकामत्वश्रुतिविरोधात्” “‡† वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति” यदि ईश्वरः स्वयमेव पक्षपातेन विषयान्सृजति । यदि च द्वेषेण सर्वप्रजाः संहरति । तदाऽस्य दोषप्रसक्तेः । तत्तत्कर्मापेक्षया कर्मानुगुणं फलं सृजति । श्रुतिश्च “§£ रमणीयचरणा रमणीयां योनिमापद्येरन् । कपूयचरणाः कपूयां योनिं” इत्यादि । “†§ न कर्माविभागादिति चेन्नानादित्वात्” अनादौ तु संसारे बीजांकुरन्यायेन पूर्वकर्मसापेक्षा उत्तरोत्तरसृष्टिरित्यभ्युपगमे दोषाभावात् । “†§उपपद्यते चाप्युपलभ्यते च” उपलभ्यते च श्रुतावनादित्वं । “‡‖ सूर्याचंद्रमसौ धाता यथा पूर्वमकल्पयत्” इत्यादौ । “£§सर्वधर्मोपपत्तेश्च” इदानीं परपक्षनिराकरणप्रधानं प्रकरणमारप्स्यमानः स्वपक्षमुपसंहरति । यस्माच्चेतने ब्रह्मणि जगत्कारणे परिगृह्यमाणे सर्वोपयोगिनः सर्वे धर्माः सर्वज्ञत्वसर्वशक्तित्वादय उपपद्यन्ते । तस्माद्ब्रह्मैव जगत्कारणमिति स्थितम् ॥

मू०— आत्मलिंगेत्यादिवाक्यैर्यन्निर्णीतं मनीषिभिः ॥
विचारितं तदेवात्र श्रुतिस्मृत्युपबृंहणैः ॥ १९० ॥
आस्माकीनार्थसिद्धान्तसरणिः संप्रदर्श्यते ॥
यदुक्तं परिणामांशे तदग्रे विस्तरान्मया ॥ १९१ ॥

व्या०— द्वितीयेऽध्याये वृत्तोऽयं प्रथमः पादः ॥

---

‖* ब्र. सू.–१८ अ.–२ पा.–१. ‡† ब्र. सू.–२९ अ.–२ पा.–१ × ब्र. सू.–३० अ.–२ पा.–१.
§ श्वेताश्वतरोपनिषदि अ.–६ मं.–८. % छांदोग्योपनिषदि प्र.–८ खं.–१ मं.–५.
† ब्र. सू.– ३१ अ.–२ पा.–१. ‖ श्वेताश्वतरोपनिषदि अ.–३ मं.–१९. $ ब्र. सू.–३२ अ.–२ पा.–१.
¶ ब्र. सू.–३३ अ.–२ पा.–१. £ श्वेताश्वतरोपनिषदि अ.–१ मं–११. ‡† ब्र. सू.–३४ अ.–२ पा.–१.
§£ छांदोग्योपनिषदि प्र.–५ खं.–१० मं. ७. †§ ब्र. सू.–३५ अ.–२ पा.–१.
‡‖ महानारायणोपनिषदि अनु.–१ मं.–१४. £§ ब्र. सू.–३६ अ. २ पा.–१.

॥ श्रीगणेशाय नमः ॥

# अथ द्वितीयाध्याये द्वितीयः पादः

मू०— ब्रह्मकारणतावादे सांख्याद्यैर्दूषणं च यत् ॥
पुरस्तात्तत्परिहृतमधुना तेषु दूषणं ॥ १९२ ॥

क्रियते तत्र प्रेक्षावत्प्रवृत्तिर्न भवेदिति ॥ एवं हि सांख्या मन्यन्ते ये विकारा यदन्विताः ॥१९३॥
दृष्टास्ते तत्प्रकृतिका यद्घटाद्या मृदन्विताः ॥ यथा ते मृत्प्रकृतिका एवमेवाखिलं जगत् ॥ १९४ ॥
सुखदुःखाद्यन्वितं च तादृक्प्रकृतिकं भवेत् ॥ यद्यत्सुखादिसामान्यात्मकं तत्त्रिगुणं भवेत् ॥ १९५ ॥
ये वै परिमिता भावास्ते वै संसर्गपूर्वकाः ॥ यथाऽङ्कुरादयस्तद्वदेतत्परिमितं जगत् ॥ १९६ ॥
सत्वं रजः तमश्चैतत्त्रयं संसर्गपूर्वकम् ॥ कार्यकारणभावेन प्रधानमनुमीयते ॥ १९७ ॥
न जगत्कारणं ब्रह्म चैतन्यानन्वयाज्जडे ॥ न प्रधानं जगद्धेतु ‡रचनानुपपत्तितः ॥ १९८ ॥
प्रासादशय्यारचना प्रज्ञावच्छिल्पिकर्तृका ॥ नाचेतनैस्तु पाषाणै रचनीयमिदं जगत् ॥ १९९ ॥

नानाकर्मोपभोगानां स्थानं ब्राह्मं च विग्रहः ॥
संभावितैः शिल्पिभिर्वा मनसाऽचिंत्यभेदवान् ॥ २०० ॥

अचिंत्यशक्तिविभवसर्वज्ञेश्वरनिर्मितं ॥ नाचेतनप्रधानेन तथेत्युक्त्वाऽप्यदर्शनात् ॥ २०१ ॥
समुच्चिनोति वै शब्दोऽनन्वयानुपपत्तिकां ॥ कल्पनाया अथ नहि भावास्ते च घटादयः ॥२०२॥
सुखदुःखान्विता दृष्टाः सुखादेरान्तरत्वतः ॥ बाह्यत्वाच्च घटादीनां सुखहेतुत्वदर्शनात् ॥ २०३॥
संसर्गपूर्वकत्वानुभूतेः परिमितत्वतः ॥ तदनैकांतिकं सत्वादीनां परिमितावपि ॥ २०४ ॥
संसर्गपूर्वकत्वस्याभावाच्चापि प्रवृत्तितः ॥ प्रधानस्याचेतनस्य चेतनाधिष्ठितस्य च ॥ २०५ ॥
प्रवृत्तिर्नोपपन्ना हि तथा लोकेष्वदर्शनात् ॥ चेतनाधिष्ठितरथे प्रवृत्तिर्नैव केवले ॥ २०६ ॥
औदासीन्याभ्युपगमात्पुरुषो न प्रवर्तकः ॥ अचेतनमपि *क्षीरं वत्सवृध्यै प्रवर्तते ॥ २०७ ॥

स्वयं लोकोपकाराय स्यन्दते च नदीजलम् ॥
नैवं तत्र व्यपेक्षायाः सत्ता श्रुत्याऽपि दर्शिता ॥ २०८ ॥
"¶ योऽप्सु तिष्ठन्निति" ततो व्यतिरेकानवस्थितेः ॥
प्रधानं नाम सांख्यानां सत्वादीनां समानता ॥ २०९ ॥

नैव × तद्व्यतिरेकेण प्रधानस्य प्रवर्तकम् ॥ निवर्तकं वा यत्किंचिदुदासीनस्तु पूरुषः ॥ २१० ॥
नैव प्रवर्तको नापि निवर्तक इति स्मृतः ॥ ततस्तदनपेक्षत्वात्सर्गः स्यात्सर्वदा पुनः ॥ २११ ॥

---

‡ ब्र. सू.–१ अ.–१ पा.–२. * ब्र. सू.–२ अ.–२ पा.–२. × ब्र. सू.–३ अ.–२ पा.–१.
¶ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–४.

प्रलयो न कदाचित् स्यान्न प्रधानमतो भवेत् ॥
उपयुक्तं तृणजलं स्वयमेव पयो यथा ॥ २१२ ॥
स्वयमेव प्रधानं च महदाद्याकृतिं व्रजेत् ॥
नैवं तृणादि नमते स्वयं क्षीरात्मना पुनः ॥ २१३ ॥
†अन्यत्र तु तथाऽभावाल्लोके ह्यनडुदादिभिः ॥
उपयुक्ततृणादीनि क्षीरतां यान्ति किं पुनः ॥ २१४ ॥
किं तु धेन्वैवोपयुक्तं प्रवृत्तिरथ वा भवेत् ॥

व्या०— "* रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च" ब्रह्मकारणतावादे सांख्यादिभिर्यद्दूषणमुक्तं । तत्पुरस्तात्संहृतमिदानीं तु सांख्यादिमतं निराक्रियते । तेषामपि तत्त्वनिर्णयोद्देशेन प्रवृत्तत्वात्तत्रापि प्रवृत्तिर्माभूदिति । एवं हि सांख्या मन्यन्ते । ये विकारा यदन्विततया प्रतीयन्ते । ते तत्प्रकृतिका दृष्टा एवं हि सर्वं जगत् सुखदुःखमोहान्वितत्तया प्रतीयमानं सुखदुःखमोहसामान्यप्रकृतिकं भवितुमर्हति । यद्यत्सुखदुःखमोहसामान्यात्मकं तत्त्रिगुणं प्रधानं । तथा ये परिमिताभावास्ते संसर्गपूर्वका दृष्टा यथांऽकुरादयः । तथा चेदं जगत्परिमितत्वात्सत्वरजस्तमस्संसर्गपूर्वकम् वक्तव्यं । एवं कार्यकारणभावादिभ्यो हेतुभ्यः प्रधानमनुमीयते । न तु ब्रह्म जगतः कारणं । जगति चैतन्यानन्वयादिति प्राप्ते ब्रूमः । नानुमानं प्रधानं जगतः कारणं । कुतः रचनानुपपत्तेः । लोके हि शय्याप्रासादादीनि प्रज्ञावद्भावितत्तमैः शिल्पिभिः रचितानि दृश्यन्ते । न केवलैरचेतनैः । पाषाणादिभिस्तथेदमपि जगत् नानाकर्मोपभोगस्थानं बाह्यं पृथिव्यादि कर्माभ्यन्तरं शरीरादिकं संभावितत्तमैः शिल्पिभिरपि मनसाऽप्यचिंत्यरचनानुरूपं अचिंत्यशक्तियोनिना सर्वज्ञेनेश्वरेणैव रचितं वक्तव्यं । नाचेतनेन प्रधानेन । अचेतनमात्रात्कार्यरचना दृष्टेर्दृष्टानुसारित्वाच्च कल्पनायाश्च शब्दान्वयाद्यनुपपत्तिं समुच्चिनोति । न हि घटादयो भावाः सुखदुःखमोहान्विततया प्रतीयन्ते । सुखदुःखादीनामांतरत्वप्रतीतेर्घटादीनां बाह्यत्वप्रतीतेः सुखादिहेतुत्वप्रतीतेश्च । यच्च परिमितत्वेनासंसर्गपूर्वकत्वानुमानं । तदनैकान्तिकं सत्त्वादीनां संसर्गपूर्वकत्वानुमानं तदनैकान्तिकं सत्वादीनां परिमितत्वेऽपि संसर्गपूरकत्वाभावात् । प्रवृत्तेश्च । अनुपपत्तेरित्यनुवर्तनेन ह्यचेतनस्य चेतनाधिष्ठितस्य प्रधानस्य प्रवृत्तिरुपपद्यते । लोके अदृष्टत्वाच्चेतनाधिष्ठितानामेव हि रथादीनां प्रवृत्तिर्दृष्टा न केवलानां । न च पुरुषस्य प्रवर्तकत्वं संभवति । औदासीन्याभ्युपगमात् । तस्मादप्यनुपपन्नं कापिलमतं । "¶ पयोऽम्बुवच्चेत्तत्रापि" । नन्वचेतनमपि पयः वत्सविवृद्धये यथा स्वयमेव प्रवर्तते । यथा वा नदीजलं लोकोपकाराय स्वयमेव स्यंदते । एवमचेतनमपि प्रधानं पुरुषार्थाय स्वयमेव प्रवर्तेत इति चेन्न । यतस्तत्राप्यपेक्षा वर्तत एव पयसः तावन्मातृस्नेहात्प्रवृत्तिर्वत्सचूषणेनोत्कृष्यमाणत्वाच्च । एवं नदीजलस्यापि नात्यंतमनपेक्षा निम्नदेशाद्यपेक्षादर्शनात् । दर्शितैव तत्रापि चेतनापेक्षा । श्रुतयो "× अप्सुतिष्ठन् योऽपांमंतरो यमयतीति" । "‡ एतस्य वा अक्षरस्य प्रशासने गार्गि" "‡ प्राच्योऽन्या नद्यः स्यन्दन्त" इत्या-

† ब्र. सू.–४ अ.–१ पा.–२ * ब्र. सू.–१ अ.–२ पा.–२. ¶ ब्र. सू.–२ अ.–२ पा.–२.
× बृहदारण्यकोपनिषदि अ.–५ ब्रा.–७ मं.–४. ‡ बृहदारण्यकोपनिषदि अ.–५ ब्रा.–८ मं.–९.

दिना । " * व्यतिरेकानवस्थितेश्चानपेक्षत्वात् " सांख्यानां सत्वरजस्तमोगुणसाम्येऽवतिष्ठमानं प्रधानं नाम न तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिदपि लक्ष्यमस्ति पुरुषस्तूदासीनः न प्रवर्तको नापि निवर्तकः । ततश्चानपेक्षत्वात् । सर्वदा सर्ग एव स्यान्न कदाचित्प्रलय इति । " ¶ अन्यत्राभावाच्च न तृणादिवत् " यथा तृणोदकमुपयुक्तं स्वयमेव क्षीरभावेन परिणमते तथा प्रधानमपि स्वयमेव महदाद्याकारेण परिणमत इति चेन्न । तृणादीनामपि न स्वयमेव परिणामः अन्यत्राभावात् । न ह्यनडुहादिभिरुपयुक्तं तृणादिक्षीरं भवति । किंतु धेन्वैव ॥

मू०— न तथापीह युज्येत यतो नास्ति प्रयोजनम् ॥ २१५ ॥
$ प्रवृत्तेरभ्युपगमेऽप्यंतरेण प्रयोजनम् ॥
प्रवृत्तिः पुरुषार्थाय प्रतिज्ञाभंगसंभवात् ॥ २१६ ॥
अतः प्रयोजनं वाच्यं न प्रधानस्य युज्यते ॥
अचेतनत्वात्तस्याथ पुरुषस्य भवेद्यदि ॥ २१७ ॥
भोगो वाऽप्यपवर्गो वा चोभयं वेति संशयः ॥
नानादेयाद्यतिशये पुरुषे भोगसंभवः ॥ २१८ ॥
अनिर्मोक्षप्रसंगश्च नापवर्गोऽपि वै पुनः ॥
अपवर्गस्य सिद्धत्वान्नित्यमुक्तो हि पूरुषः ॥
नोभयार्थविरोधान्न पर्यायेणोभयार्थता ॥ २१९ ॥
भोक्तव्यार्थस्य चानंत्याद्भोगापरिसमाप्तितः ॥
अपवर्गासिद्धिरेव न चौत्सुक्यनिवृत्तये ॥ २२० ॥
प्रवृत्तिर्हि तदौत्सुक्यं धर्मो यच्चेतनस्य तत् ॥
न प्रधाने संभवति न प्रवृत्तिरथो भवेत् ॥ २२१ ॥

व्या०— " $ अभ्युपगमेऽप्यर्थाभावात् " । एवं तावदचेतनस्य स्वतः प्रवृत्तिर्न संभवतीत्युक्तं । अस्तु वा प्रवृत्तिरचेतनस्यापि । लोके तथापीह न संभवति प्रयोजनादंतरेणापि प्रयोजनप्रवृत्त्यभ्युपगमे पुरुषार्थाय प्रधानप्रवृत्तिरिति प्रज्ञाविरोधप्रसंगात् । प्रयोजनमवश्यं वक्तव्यं । तच्च न तावत्प्रधानस्य संभवति । अचेतनत्वात् । तस्य पुरुषस्य चेद्भोगो वाऽपवर्गो वा उभयं वेति न तावदनादेयाति-शयस्य पुरुषस्य भोगः संभवति । अनिर्मोक्षप्रसंगश्च नाप्यपवर्गार्थः । प्रागेव प्रवृत्तेरपवर्गस्य सिद्ध-त्वात्पुरुषस्य नित्यमुक्तत्वान्नाप्युभयार्थाविरोधान्न च पर्यायेणोभयार्थता भोक्तव्यानामानंत्यात् । भोगप-रिसमाप्तेरपवर्गासिद्धिप्रसंगात् । न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः । औत्सुक्यस्य चेतनधर्मत्वेन प्रधा-नेऽसंभवात् । तस्मादपि न प्रवृत्तिः ॥

मू०— कश्चिद्दृक्छक्तिसंपन्नः प्रवृत्तौ शक्तिवर्जितः ॥
पंगुर्दृक्छक्तिहीनं तु प्रवृत्तौ शक्तिमन्नरं ॥ २२२ ॥

* ब्र. सू.–३ अ.–२ पा.–२. ¶ ब्र. सू.–४ अ.–२ पा.–२ $ ब्र. सू.–८ अ.–१ पा.–२.

प्रवर्तयत्यधिष्ठाय तथा कांतो मणिः स्वयं ॥
प्रवृत्तिरहितोऽपि स्यादयसस्तु प्रवर्तकः ॥ २२३ ॥
एवं दृक्छक्तिसंपन्नः पुरुषस्तु प्रवर्तयेत् ॥
प्रवृत्तिशक्तिसंपन्नं प्रधानमिति चेन्न च ॥ २२४ ॥
दोषान्निर्मोक्षविरहादभ्युपेत विरोधतः ॥
प्रधानस्य स्वतंत्रस्य प्रवृत्तिरुपवर्ण्यते ॥ २२५ ॥
प्रवर्तकत्वाभावेन पुरुषस्य कथं पुनः ॥
यदनादेयातिशयपुरुषः स्यात्प्रवर्तकः ॥ २२६ ॥
वाग्व्यापारेण चेदन्धं स्वयं पंगुः प्रवर्तयेत् ॥
न पुरुषेऽस्ति व्यापारः कान्तश्चेत्संनिधानतः ॥ २२७ ॥
परिमार्जनतो वा स्यादयसस्तु प्रवर्तकः ॥
नैव सांनिध्यमात्रेण पुरुषः स्यात्प्रवर्तकः ॥ २२८ ॥
सन्निधेरत्र नित्यत्वात्प्रवृत्तेः संगसंभवः ॥
‡ पुरुषाश्मादिवदिति न वक्तुं शक्यते ततः ॥ २२९ ॥

व्या०— "‡ पुरुषाश्मवदिति चेत्तथाऽपि"। यथा हि पुरुषः कश्चिद्दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिहीनश्च पंगुः दृक्शक्तिविहीनं प्रवृत्तिशक्तिसंपन्नमधिष्ठाय प्रवर्तयति । तथा अयस्कान्तो मणिः स्वयंप्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति। एवं पुरुषोऽपि दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिसंपन्नं प्रधानं प्रवर्तयतीति चेत् । तथापि नैव दोषान्निर्मोक्षोऽभ्युपगमविरोधप्रसंगात् । प्रधानस्य स्वतंत्रस्य प्रवृत्त्यभ्युपगमात् । पुरुषस्य प्रवर्तकत्वानभ्युपगमाच्च कथं वा अनाधेयातिशयस्य पुरुषस्य प्रवर्तकत्वं पंगुर्हि वाग्व्यापारेणान्धं प्रवर्तयति । नैवं पुरुषस्य कश्चिद्वाग्व्यापारोऽस्ति । कांतश्च सन्निधानेन परिमार्जनादिव्यापारेण चायसः प्रवर्तको भवति । नैवं पुरुषस्य सन्निधिमात्रेण प्रवर्तकत्वं । तथा सति सन्निधिनित्यत्वात्प्रवृत्तिसांतत्यप्रसंगात् । तस्मात्पुरुषाश्मवदित्यनुपन्यासः ॥

मू०— "* अंगित्वानुपपत्तेश्च" प्रवृत्तिर्न प्रधानके ॥
साम्येनैवावस्थितानां सत्त्वादीनां परे लये ॥ २३० ॥
वैषम्यहेत्वभावेन नांगित्वं हि परस्परं ॥
वैषम्यं यदि वर्ण्येत तदानीं कारणं विना ॥ २३१ ॥
प्रवृत्तिः सर्वदैव स्यान्नैवं वक्तुं हि शक्यते ॥
अनंतरोक्तदोषः स्यान्न तथा चानुमीमहे ॥ २३२ ॥

‡ ब्र. सू.–५ अ.–२ पा.–२. * ब्र. सू.-९ अ.–२ पा.–२.

अनपेक्षस्वभावास्ते कूटस्थाश्च गुणा यदि ॥
स्वभावश्च तथा तेषां यथा कार्योपपत्तिकः ॥ २३३ ॥
गुणवृत्तं चलमिति ततो वैषम्यसंभवात् ॥
प्रवृत्तिरुपपद्येतेत्येवं चेदुपवर्ण्यते ॥ २३४ ॥
प्रधानस्याज्ञया शक्त्या योगेन स्वरसेन तु ॥
रचनानुपपत्त्याद्या दोषास्ते तदवस्थिताः ॥ २३५ ॥
§ ज्ञशक्तिं च मिमानस्तु वादित्वात्स निवर्तते ॥
ब्रह्मवादप्रसंगाच्च नैतद्युक्तिसहं भवेत् ॥ २३६ ॥
गुणवैषम्ययोग्यास्तु निमित्ताभावतो लये ॥
वैषम्यं न भवेन्नैवं निमित्ताभावतः पुनः ॥ २३७ ॥
कदाचिदपि वैषम्यं न भजेरन् गुणास्तु ते ॥
अभावेन निमित्तानां विशेषादेव चेत्ततः ॥ २३८ ॥
अनित्यानुपपत्तिस्तु तदवस्थितमेव तत् ॥
परस्परविरुद्धश्च सांख्याभ्युपगमस्त्वयं ॥ २३९ ॥

व्या०— "¶ अंगित्वानुपपत्तेश्च"। इतश्च न प्रवृत्तिः प्रधानस्य सत्वरजस्तमसां प्रलये साम्येनावस्थितानां वैषम्यहेत्वभावात् परस्परमंगित्वानुपपत्तेर्विनापि कारणं वैषम्याभ्युपगमे सर्वदा प्रवृत्तिप्रसंगश्च "§ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्"। अथापि स्यादन्यथा वयमनुमीमहे। यथाऽयमनंतरोक्तदोषो न भवति। न ह्यनपेक्षस्वभावाः कूटस्थाश्च गुणा अभ्युपगम्यन्ते। यथा कार्योपपाद उपपद्यते। तथा तेषां स्वभावोऽभ्युपगम्यते। चलं गुणवृत्तमित्यभ्युपगमात्। ततश्च वैषम्यसंभवात्प्रवृत्तिरुपपद्यत इति। एवमपि प्रधानस्य ज्ञशक्तियोगाद्रचनानुपपत्त्यादयो दोषास्तदवस्था एव। ज्ञशक्तिमप्यनुमिमानः प्रतिवादित्वान्निवर्तते। ब्रह्मवादप्रसंगाद्वैषम्ययोग्या अपि गुणा यथा प्रलयावस्थायां निमित्ताभावादेव कदाचिदपि वैषम्यं न भजेरन्। निमित्ताभावाद्विशेषादेव। ततश्चांगित्वानुपपत्तिस्तदवस्थैव ॥

मू०— क्वचित्सप्तेंद्रियाण्येवोत्क्रामन्त्येकादश क्वचित् ॥
क्वचिद्वदन्ति महतः पंचतन्मात्रसंभवः ॥ २४० ॥
तथा क्वचिदहंकारस्त्रीण्यंतःकरणानि च ॥
क्वचिदेकमिति प्राहुरित्येवं बहुधा पुनः ॥ २४१ ॥
श्रुत्या कारणवादिन्या स्मृत्या चापि परस्परं ॥

§ ब्र. सू.—७ अ.—२ पा.—२. ¶ ब्र. सू.—६ अ.—२ पा.—२.

विरोधात्कापिलं चैतन्मतं * तदसमंजसम् ॥ २४१ ॥

व्या०— "* विप्रतिषेधाच्चासमंजसं" परस्परविरोधश्चायं सांख्यानामभ्युपगमः । क्वचित्सप्तेंद्रियाण्यनुक्रामन्ति । क्वचिदेकादश तथा क्वचन महत्तन्मात्रसर्गमुपदिशन्ति । क्वचिदहंकारात्तथा क्वचित् त्रीण्यंतःकरणानि क्वचिदेकमिति प्रसिद्ध एव च श्रुत्या कारणवादिन्या तदनुसारिण्या च स्मृत्या विरोधस्तस्मादप्यसमंजसं कापिलं मतं ॥

मू०— तथा चैवं प्रधानस्य कारणत्वं निराकृतं ॥
इदानीं परमाणूनां कारणत्वं निरस्यते ॥ २४३ ॥

परमाणुश्चतुर्थादौ निश्चिते प्रलये परे ॥ † पारिमांडल्यसंज्ञावत्परिमाणेन योगिनः ॥ २४४ ॥
यथा स्वस्पर्शवन्तश्च तिष्ठन्ति परमाणवः ॥ पश्चात्तस्मिन् सृष्टिकाले परमेशसिसृक्षया ॥ २४५ ॥
सादृष्टसात्मका ज्ञेयाः संयोगाच्च परस्परं ॥ अणुष्वाद्यं भवेत्कर्म कर्मणा तेन चाप्यणुः ॥२४६॥
परमाण्वंतरयुतो द्वाभ्यां द्वाभ्यां ततः परं ॥ संयुक्ताभ्यामणुभ्यां स्यादेकैकं द्व्यणुकं ततः ॥२४७॥
न त्वेकस्मात्तु संयुक्तं तंतूनां दर्शनेन तु ॥ पटारंभकतायास्तु तथा मूलेऽपि कारणे ॥ २४८ ॥
तच्चद्वौ परमाणू तु कारणं समवायि च ॥ तत्संयोगः कारणं स्यात्संज्ञया समवायि तु ॥ २४९ ॥
अदृष्टादि निमित्तं स्यात्परमाणुगतास्तु ते ॥ स्पर्शादयो गुणास्तेभ्यो द्व्यणुके तुल्यजातयः ॥२५०॥
स्पर्शादयो गुणा जाताः करणस्था गुणा यतः॥ कार्ये गुणानारंभंत इति न्यायात्तथा त्रिभिः॥२५१॥
द्व्यणुकैर्योगसचिवैरेकैकं त्र्यणुकं ततः ॥ महदारभ्यत इति द्व्यणुकस्थाः पुनर्गुणाः ॥ २५२ ॥
त्र्यणुके स्पर्शमुख्यानां स्मृता आरंभका इति ॥ महत्तरं च त्र्यणुकैर्महत्तममिति क्रमात् ॥ २५३ ॥
महान्वायुर्महत्तेजो महापो महती मही ॥ उत्पद्यन्ते ब्रह्मणो न जगदुत्पत्तिरुच्यते ॥ २५४ ॥
चैतन्यस्य गुणस्यास्य चैतन्यांतरहेतुता ॥ तत्र वैशेषिकैर्ब्रह्म कारणत्वे यदुच्यते ॥ २५५ ॥
स दोषोऽनेन सूत्रेण सम्यगेव निवार्यते ॥ महत्ययं न नियमः साधुः सर्वत्र संमतः ॥ २५६ ॥
यत्कारणगुणाः कार्ये सजातीयं गुणान्तरं ॥ आरभन्तेऽवश्यमिति यतश्च परमाणुषु ॥ २५७ ॥
पारिमांडल्यसंज्ञस्य द्व्यणुके तादृशस्य तु ( तत् ) ॥ आरंभानाभ्युपगमात्तस्याणुत्वादिदर्शनात् ॥२५८
यथा कारणनिष्ठे येऽणुता-ह्रस्वते उभे ॥ द्व्यणुकेऽणुत्व-ह्रस्वत्वे सजातीये न कारणे ॥ २५९ ॥
महत्वं चैव दीर्घत्वं त्र्यणुके दृश्यते यतः ॥ तथा च कारणस्थानां गुणानामेव कार्यता ॥२६०॥
सजातीयगुणानारंभकत्वमिति वै स्थितिः ॥ एवं ब्रह्मगुणस्यापि चैतन्यस्य तु कार्यता ॥२६१॥
चैतन्यान्तरहेतुत्वं सहसा नोपपद्यते ॥ ब्रह्मप्रपंचहेतुत्वे नैव काचिदसंगतिः ॥ २६२ ॥
सविशेषगुणानां तु सजातिगुणहेतुता ॥ परिमाणादिसामान्यगुणानां नोच्यतामिति ॥ २६३ ॥
सामान्यत्वं विशेषत्वं गुणानां वादमात्रतः ॥

* ब्र. सू.–९ अ.–२ पां.–२. † ब्र. सू.–१० अ–२ पा.–२.

व्या०— "$ महद्दीर्घवद्वा ऱ्हस्वपरिमंडलाभ्यां"। प्रधानकारणवादो निराकृतः। इदानीं परमाणुकारणवादो निराकर्तव्यः। स च वाद इत्थं चतुर्विधास्तावत्परमाणवः। प्रलयावस्थायां निश्चलाः। पारिमांडल्यपरिमाणयोगिनः यथा स्वं स्पर्शादिमंतश्चावतिष्ठन्ते। पश्चात्सृष्टिकाले ईश्वरस्य सिसृक्षावशाददृष्टवदात्मसंयोगाच्च। अणुष्वाद्यं कर्मोत्पद्यते। तेन च कर्मणा परमाणुः परमाण्वंतरेण संयुज्यते। तथा संयुक्ताभ्यां द्वाभ्यां द्वाभ्यां परमाणुभ्यामेकैकं द्व्यणुकमुत्पद्यते। न त्वेकस्मात् संयुक्तानामेव तंतूनां पटाद्यारंभकत्वदर्शनेन मूलकारणेऽपि तथैवानुमानं। तत्र द्वौ परमाणू समवायिकारणं द्व्यणुकस्य तत्संयोगोऽसमवायिकारणमदृष्टादि निमित्तकारणं। परमाणुगतेभ्यः स्पर्शादिभ्यश्च द्व्यणुके स्पर्शादयः सजातीया गुणा आरभ्यन्ते। "कारणगुणा हि कार्यगुणानारभंत" इति न्यायात्। तथा त्रिभिस्त्रिभिर्द्व्यणुकैः संयोगसचिवैरेकैकं त्र्यणुकं महदारभ्यत इति द्व्यणुकगतेभ्यः स्पर्शादिभ्यश्च त्र्यणुके स्पर्शादय आरभ्यंते। त्र्यणुकैश्च महत्तरं ततो महत्तममित्येवं क्रमेण महान् वायुर्महत्तेजः महत्यः आपः महती पृथिवी उत्पद्यन्ते। न तु ब्रह्मणः जगदुत्पद्यते। ब्रह्मगुणस्य चैतन्यस्य जगति चैतन्यगुणान्तरारंभकत्वप्रसंगादिति। तत्र वैशेषिकैर्ब्रह्मकारणवादे यो दोष उक्तः। स दोषोऽनेन सूत्रेण परिन्हियते। मा गतिर्नायं नियमः साधुः। यत्कारणगुणाः कार्ये सजातीयं गुणान्तरमवश्यमारभन्त इति। परमाणुगतपारिमांडल्यस्य द्व्यणुके पारिमांडल्यान्तरारंभाभ्युपगमात्। तस्याणुत्वऱ्हस्वत्वपरिमाणाभ्युपगमात्। तथा च यथा कारणयताभ्यामणुत्वऱ्हस्वत्वाभ्यां त्र्यणुकेष्वणुत्वऱ्हस्वत्वे सजातीये नारभ्येते। त्र्यणुकेषु महद्दीर्घत्वपरिमाणान्तराभ्युपगमात्। तथा च कारणगुणानामपि पारिमांडल्यादीनां कार्ये सजातीयगुणानारंभकत्वमेवं ब्रह्मणो गुणस्यापि चैतन्यस्य कार्ये चैतन्यांतरानारंभकत्वोपपत्तेः। न ब्रह्मजगत्कारणवादे काचिदनुपपत्तिः। न च विशेषगुणानामेव सजातीयगुणारंभकत्वं न सामान्यगुणानां परिमाणादीनामिति वाच्यं। सामान्यविशेषव्यवस्थायाः परिभाषामात्रत्वात्॥

मू०— इदानीं परमाणूनां कारणत्वं निवार्यते॥ २६४॥
प्रलये निश्चलेष्वेषु चायुक्तपरमाणुषु॥
संयोगोत्पत्तये चाद्यं कर्म तत्र निमित्तकम्॥ २६५॥
किंचिदस्ति न वा नैवं निमित्ताभावतस्तदा॥
† कर्माभावस्तथांते किं निमित्तं दृष्टमेव वा॥ २६६॥
अभिघातप्रयत्नादि किमुताद्दष्टमुच्यते॥
नाद्यः शरीराभावेन प्रयत्नादेरसंभवात्॥ २६७॥
अदृष्टत्वाच्चेतनत्वान्न कर्मोत्पादकं त्वतः॥
पुरुषोऽजातचैतन्योऽजडप्रायो भवेद्यतः॥ २६८॥
ईशज्ञानस्य नित्यत्वात्कर्मोत्पत्तिः सदा भवेत्॥
तथादृष्टवदात्माश्रासंयोगस्यापि संभवात्॥ २६९॥

$ ब्र. सू.—१० अ.-२ पा.—२. † ब्र. सू.—११ अ.—२ पा.—२.

आगंतुकनिमित्तस्याप्यभावाद्यस्य कस्य चित् ॥
अणुष्वाद्यं न कर्म स्यात्संयोगस्तन्निबंधनः ॥ २७० ॥
न स्यात्संयोगाभावेन द्व्यणुकत्वनिबंधनम् ॥
तस्मान्नोपपन्नः परमाणोः ( नोपपन्नमणोः ) कारणवादकः ॥ २७१ ॥

व्या०— "§ उभयथाऽपि न कर्मातस्तदभावः" इदानीं परमाणुकारणवादं निराकरोति । प्रलये निश्चलेषु परमाणुष्वसंयुक्तेषु संयोगोत्पत्त्यर्थमाद्यं कर्म तत्र किंचिन्निमित्तमस्ति न वा । न चेन्निमित्ताभावात्कर्माभावः । आद्ये किं प्रयत्नाभिघातादि दृष्टं निमित्तमुतादृष्टं । नाद्यः शरीराद्यभावेन प्रयत्नादेरभावादन्तेऽप्यदृष्टस्याचेतनत्वान्न स्वातंत्र्येण कर्मोत्पादकत्वं पुरुषस्य चानुत्पन्नचैतन्यत्वेनाचेतनप्रधानत्वादीश्वरज्ञानादेश्च नित्यतया सर्वदा कर्मोत्पादप्रसंगात् । तथा दृष्टवदात्मानं योगस्यापि सत्वादन्यस्य कस्य चिदागंतुकस्य निमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात् । कर्माभावात्तन्निबंधनः संगोऽपि न स्यात् । तदभावात्तन्निबंधनद्व्यणुकादि कार्यजातं न स्यात् । तस्मादनुपपन्नः परमाणुकारणवादः ॥

मू०— परमाणोर्हेतुवादे कार्यं यद्द्व्यणुकादिकं ॥
अणुभ्यामतिभिन्नं हि ¶ समवायाभिधेन च ॥ २७२ ॥
संबंधेन ह्यणुभ्यां तु संबंधं वर्णयन्ति हि ॥
तद्वर्णनं नोपपन्नं साम्यादप्यनवस्थितेः ॥ २७३ ॥
यथा हि कार्यमत्यन्तभिन्नत्वात्समवायिनां ॥
संबंधेन तु संबंधं वर्णयन्ति विपश्चितः ॥ २७४ ॥
एवं च समवायस्य समवायित्वतस्तथा ॥
तस्मादत्यन्तभिन्नत्वाद्भाव्यमन्येन केन चित् ॥ २७५ ॥
संबंधेन तथा तस्य तस्यापीत्यनवस्थितेः ॥
न स्वयं समवायस्य संबंधैकस्वरूपिणः ॥ २७६ ॥
अनपेक्ष्यान्यसंबंधं संबध्यत इति भ्रमः ॥

व्या०— "¶ समवायाभ्युपगमाच्च साम्यादनवस्थितेः" । परमाणुकारणवादे अणुभ्यामत्यंतभिन्नं द्व्यणुकादि कार्यं समवायिलक्षणेन संबंधेनाणुभ्यां संबंधमभ्युपगच्छंति । स तेषामभ्युपगमोऽनुपपन्नः । साम्यादनवस्थितेः यथा हि कार्यमत्यंतभिन्नत्वात्समवायलक्षणसंबंधेन संबद्धमभ्युपगम्यते । एवं समवायस्यापि समवायित्वादत्यंतभिन्नत्वादन्येन केन चित्संबंधेन भवितव्यं । एवं तस्य तस्यापीत्यनवस्था प्रसज्येत । न च समवायस्य स्वयं संबंधरूपत्वादनपेक्षैवान्यं संबंधं न च बध्यत इति वाच्यं । तथाप्यत्यंतभेदे संबंधस्यावश्यापेक्षितत्वादन्यथा संयोगस्यापि समवायापेक्षा न स्यात् । न च तस्य गुणत्वात्समवायापेक्षेति वाच्यं । द्रव्यगुणादिव्यवस्थायां परिभाषामात्रत्वात् ॥

§ ब्र. सू.—११ अ.—२ पा.—२. ¶ ब्र. सू.—१२ अ.—२ पा.—२.

मू०— तथाप्यत्यंतभेदेऽस्मिन्संबंधस्यात्यपेक्षणात् ॥ २७७ ॥
संयोगस्यान्यथा तस्य समवायानपेक्षणात् ॥
न च तस्य गुणत्वेन संयोगाद्यनपेक्षणं ॥ २७८ ॥
गुणद्रव्यव्यवस्थायाः परिभाषणमात्रतः ॥
ते प्रवृत्तिस्वभावाः किं किं निवृत्तिस्वभावकाः ॥ २७९ ॥
अथोभयस्वभावा वा नोभये परमाणवः ॥
नाद्यः क्षोदक्षमः पक्षः † प्रवृत्तेर्नित्यतावशात् ॥ २८० ॥
आपतेत्प्रलयाभावो न द्वितीयो निवृत्तितः ॥
सर्गाभावप्रसंगाच्च न तृतीयोऽपि युज्यते ॥ २८१ ॥
द्वयोः स्वभावयोस्तत्र विरोधादप्यसंभवः ॥
न च पक्षस्तुरीयोऽपि विदुषां हृदि रोचते ॥ २८२ ॥
यन्नोभयस्वभावत्वे प्रवृत्तिस्तु निमित्ततः ॥
अदृष्टादेर्निमित्तस्य सन्निधानेन सर्वदा ॥ २८३ ॥
नित्यं प्रवृत्तिः सज्जेत नाणुकारणता ततः ॥

व्या०— "† नित्यमेव च भावात्"। अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वा उभयस्वभावा वा अनुभयस्वभावा वा सर्वथा नोपपद्यते। प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसंगः। निवृत्तिस्वभावत्वे नित्यमेव निवृत्तेर्भावात् सर्गाभावप्रसंगः। उभयस्वभावत्वं च विरोधादसंभाव्यं। अनुभयस्वभावत्वे निमित्तवशात्प्रवृत्तिनिवृत्त्यभ्युपगमे अदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यं प्रवृत्तिप्रसंगः। तस्मादप्यनुपपन्नः परमाणुकारणवादः॥

मू०— विभज्यमानं यद्द्रव्यं तच्च सावयवं पुनः ॥ २८४ ॥
यतः परं विभागाय नार्हेयुः परमाणवः ॥
चतुर्विधा रूपवन्तश्चतुर्भेदस्य रूपिणः ॥ २८५ ॥
भूतभौतिकजालस्य नित्या आरंभका इति ॥
वैशेषिकाणां सिद्धान्त आपातरमणीयकः ॥ २८६ ॥
§ रूपादिमत्पराणूनामणुत्वं नित्यता द्वयं ॥
विपर्येति तथा लोके दृष्टत्वाद्यद्धि रूपवत् ॥ २८७ ॥
स्वकारणापेक्षया तदनित्यं स्थूलमेव च ॥
यथा पटादि तद्वच्च रूपिणः परमाणवः ॥ २८८ ॥

† ब्र. सू.–१३ अ.–२ पा.–२. § ब्र. सू.–१४ अ.–२ पा.–२.

स्थूला अनित्यास्ते च स्युर्ननु द्रव्यविनाशने ॥
हेतोरंशविनाशस्य तद्विभागस्य चात्र तु ॥ २८९ ॥
अभावात्परमाणूनां विनाश इति मा वद ॥
गुणद्रव्यव्यवस्थायाः परिभाषणमात्रतः ॥ २९० ॥
यथावयवनाशादिविरहेऽपि पराणुषु ॥
रूपादीनां संगतानां वन्हिसंयोगनाश्यता ॥ २९१ ॥
संभवेत्परमाणूनां नाशस्तस्मादनित्यता ॥

व्या०— "* रूपादिमत्वाच्च विपर्ययो दर्शनात्" सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः पराविभागो न संभवति । ते चतुर्विधा रूपादिमन्तः परमाणवः चतुर्विधस्य रूपादिमतो भूतभौतिकस्यारंभका नित्याश्चेति यो वैशेषिकाणामभ्युपगमः सोऽनुपपन्नः । रूपादिमत्वे परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत । एवं लोके दृष्टत्वाद्धि लोके रूपादितत्स्वकारणापेक्षया स्थूलमलमनित्यं च दृष्टं । यथा घटादि तथा परमाणवः रूपादिमन्तोऽभ्युपगम्यन्ते । तस्मात्तेऽपि स्थूला अनित्याश्च भवेयुः । न च द्रव्यविनाशहेतोरवयवनाशस्यावयवविभागस्य चाभावात्परमाणूनां न विनाश इति वाच्यं । द्रव्यगुणादिव्यवस्थायाः परिभाषामात्रत्वेन यथा अवयविनाशाद्यभावेऽपि परमाणुगतरूपादीनामग्निसंयोगादिना विनाशोऽभ्युपगम्यते । एवं परमाणूनामपि विनाशसंभवादनित्यत्वं दुर्वारमेव॥

मू०— गंधरूपरसस्पर्शगुणस्थूला मही तथा ॥ २९२ ॥
रसरूपस्पर्शगुणसूक्ष्मा आपः समीरिताः ॥ रूपस्पर्शगुणं सूक्ष्मं परं तेजः प्रदृश्यते ॥ २९३ ॥
स्पर्शसूक्ष्मतया वायुर्भूतान्येतानि वै पुनः ॥ गुणैरुपचितैश्चापि तथैवापचितैर्गुणैः ॥ २९४ ॥
भूतानि स्थूलसूक्ष्माणि तारतम्यान्वितानि च ॥ तद्वत्पराणवोऽप्यत्र गुणैरपचितैस्तथा ॥२९५॥
युक्ता गुणैरपचितैः कल्पेरन्निति तार्किकाः ॥ न † वाचोभयथा दोषः परिहारः स युक्तिभिः ॥२९६
तावत्कल्प्या उपचिता गुणा अपचिताश्च चेत् ॥ मूर्तेरुपचयश्चापचयश्चापि प्रसज्यते ॥ २९७ ॥
मूर्तेरुपचयं चापि तथैवापचयं विना ॥ न गुणानामुपचयस्तथैवापचयो न हि ॥ २९८ ॥
तथा कार्येषु दृष्टत्वाल्लोके विद्वज्जनैः सदा ॥ मूर्तेरुपचये वापि तथैवापचये सति ॥ २९९ ॥
भवेदपरमाणुत्वप्रसंगस्तदतो न च ॥ आकल्प्यमानेऽपचये तथैवोपचये गुणे ॥ ३०० ॥
तथा चतुर्गुणास्सर्वे जले गंधोपलंभनं ॥ तेजस्येवं गंधरसौ गंधरूपरसास्तथा ॥ ३०१ ॥
वायौ सर्वे यदि पुनरेकैकगुणशालिनः ॥ तदा तेजसि न स्पर्शो जले रूपरसौ न हि ॥३०२॥
पृथ्व्यां रूपरसस्पर्शाः न स्युर्नैवं हि दृश्यते ॥ तदतः परमाणूनां हेतुवादो न युज्यते ॥ ३०३ ॥
$ अत्यंतमनपेक्षा च मन्वादेरपरिग्रहतात् ॥ सांख्यं न्यायमते चोभे निरस्ते वहुयुक्तिभिः ॥३०४॥

* ब्र. सू.–१४ अ.–२ पा.–२. † ब्र. सू.-१५ अ.–२ पा.–२. $ ब्र. सू.–१६ अ.–२ पा.–२.

गणाचारविरोधोऽपि यथा न प्रसरीसरेत् ॥ गुरुलिंगादिविषयं न श्राव्यं दूषणं यदि ॥ ३०५॥
श्रुतवान् शिक्षयामीति गणाचारः स उच्यते ॥ सांख्येन तार्किकेणापि दूषणत्वेन कल्पितं ॥३०६॥
यद्यत्तत्स्मरणं वाऽपि मनसा न कृतं मया ॥ किंतु तेषामभिमतं निरस्तं युक्तिभिर्मया ॥ ३०७ ॥
तथैव दृश्यते धर्मः संगते धर्मदूषके ॥ तद्दूषणमशृण्वंस्तत्स्थानात्तं तु प्रवासयेत् ॥ ३०८ ॥
तंडुलान् सिक्तैर्मिश्रान् पृथक् कृत्य यथाऽऽहरेत् ॥ बौद्धाद्यभिमतार्थेषु निरस्तं दुर्वचः किल ॥३०९
विज्ञानरत्नं गृण्हामि तत्र क्षणिकतां त्यजन् ॥
युक्तिभिर्दोषघातज्ञः शाणोल्लीढं मणिं यथा ॥ ३१० ॥

व्या०— "£ उभयथा च दोषात्"। गंधरूपरसस्पर्शगुणा स्थूला पृथ्वी रसरूपस्पर्शगुणाः सूक्ष्मा आपः। रूपस्पर्शगुणं सूक्ष्मतरं तेजः स्पर्शगुणः सूक्ष्मतमो वायुरेवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मतारतम्योपेतानि लोके लक्ष्यन्ते। तद्वत्परमाणवोऽप्युपचितापचिता गुणाः कल्पेरन्। न वा उभयथा दोषः परिहार्यः कल्प्यमाने तावदुपचितापचितगुणत्वे मुक्त्युपचयापचयप्रसंगः। अंतरेण मूर्त्यापचयोपचयं गुणोपचयापचयौ संभवात्। कार्येषु तथा दर्शनात्। मूर्त्युपचयापचये च परमाणुत्वप्रसंगः। अकल्प्यमाने पुनरुपचितापचितगुणत्वे यदि सर्वे चतुर्गुणाः अप्स्वपि गंधोपलब्धिप्रसंगः। तेजसि गंधरसयोः वायौ रूपरसगंधानां च अथ सर्वे एकैकगुणाः तदा तेजसि स्पर्शो न स्यात्। अप्सु रूपरसौ न स्याताम्। पृथिव्यां रूपरसस्पर्शा न स्युः। न चैवं दृश्यते। तस्मादप्यनुपपन्नः परमाणुकारणवादः। "‡ अपरिग्रहाच्चात्यंतमनपेक्षा"। प्रधानकारणवादो वैदिकैरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्युपजीवनेन परिगृहीतः। अयं तु परमाणुकारणवादः कैश्चिदपि शिष्टैः केनाप्यंशेन परिगृहीत इत्ययमेवापेक्षणीयो वेदवादिभिः॥

मू.— निरस्यतेऽथ बौद्धानामिदानीं त्रिविधं मतं ॥
सर्वास्तित्वं वदन्त्येके केचिद्विज्ञानमात्रकम् ॥ ३११ ॥
शून्यवादिन एवैके सर्वास्तित्वं निरस्यते ॥ तत्र तेषां प्रक्रियैषा पृथ्व्यादीनां चतुष्टये ॥ ३१२ ॥
खरस्नेहोष्णेरणस्वभावास्ते परमाणवः ॥ संहन्यन्ते पृथिव्यादिभावेनेति ततस्तथा ॥ ३१३ ॥
वेदनारूपविज्ञानसंज्ञासंस्कारभेदतः ॥ पंच स्कंधास्तथाऽध्यात्मं सर्वरूपेण वै पुनः ॥ ३१४ ॥
व्यवहारास्पदतया संहन्यन्तेऽथ तत्र च ॥ रूपस्कंधः सवीर्याणि इंद्रियाणीति बभ्रमुः ॥ ३१५॥
विज्ञानस्कंधनामाऽसावहमाकार एव च ॥ रूपादिविषयश्चासाविंद्रियादिसमुद्भवः ॥ ३१६ ॥
ज्ञायमानो वेदनाख्यः स्कंधः स तु समीरितः ॥ सुखस्यानुभवश्चापि दुःखस्यानुभवस्तथा ॥३१७॥
संज्ञास्कंधः स विज्ञेयो विशिष्टोल्लेखवानयम् ॥ सविकल्पः प्रत्ययस्तु संस्कारः स्कंध उच्यते ॥३१८
क्लेशरागादयश्चैव मदमानादयस्तथा ॥ उपक्लेशास्तथा धर्माधर्मौ च परिकीर्तिताः ॥ ३१९ ॥
पंचस्कंधी तत्समूहस्तत्रादाविदमुच्यते ॥ द्विप्रकारः § समुदयो योऽयं चोभयहेतुकः ॥ ३२० ॥

£ ब्र. सू.–१५ अ.–२ पा.–२. ‡ ब्र. सू.–१६ अ.–२ पा.–२. § ब्र. सू.–१७ अ.–२ पा.–२.

स च भौतिकसंघातोऽणुहेतुः स्कंधहेतुकः ॥ स्कंधिरूपस्ततस्तस्मिन्नुभयस्मिन्नपि क्रमात् ॥३२१॥
स्यादभिप्रेयमाणे तदप्राप्तिः किल सा भवेत् ॥ समुदायाप्राप्तिरिति तस्यासंगतिरुच्यते ॥३२२॥
स्वतः संघातविरहे जडत्वात्समुदायिनः ॥ समूहसिध्द्यधीनत्वाच्चित्ताभिज्वलनस्य च ॥ ३२३ ॥
अन्यस्य चेतनस्यात्र संहर्तुर्विरहात्ततः ॥
सर्वत्र क्षणिकत्वस्य तथा च प्रतिपादनात् ॥ ३२४ ॥

व्या०— "† समुदाय उभयहेतुकेऽपि तदप्राप्तिः" । इदानीं बौद्धमतं निरस्यते । तच्च त्रिविधं केचित्सर्वास्तित्ववादिनः । केचिद्विज्ञानमात्रवादिनः । अन्ये शून्यवादिनः । तत्र प्रथमं सर्वास्तित्वमतं निरस्यते । तत्रैषा तेषां प्रक्रिया चतुष्टयेऽपि पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावाः पृथिव्यादिभावेन संहन्यन्ते । तथा रूप, विज्ञान, वेदना, संज्ञा, संस्काराः पंच स्कंधाः अध्यात्मसर्वव्यवहारास्पदतया संहन्यंत इति । तत्र रूपस्कंधो नाम सविषयाणींद्रियाणि । विज्ञानस्कंधो नाम अहमित्याकाररूपादिविषय इंद्रियादिजन्यो दंडायमानो वेदनास्कंधः सुखानुभवश्च । संज्ञास्कंधो नाम विशेषोल्लेखिसविकल्पकप्रत्ययः । संस्कारस्कंधो नाम रागादयः क्लेशाः मदमानादय उपक्लेशाः धर्माधर्मौ च तेषां समुदायः पंचस्कंधीति तत्रेदमुच्यते । योऽयमुभयहेतुकः उभयप्रकारः समुदायः अणुहेतुको भौतिकसंघातः स्कंधहेतुकश्च । स्कंधिरूपः तस्मिन्नुभयस्मिन्नप्यभिप्रेयमाणे तदप्राप्तिः समुदायाप्राप्तिः समुदायानुपपत्तिरित्यर्थः । कुतः समुदायिनामचेतनत्वेन स्वतः संघातायोगश्चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वादन्यस्य कस्य चिच्चेतनस्य संहंतुः स्वकरस्यानभ्युपगमात् । सर्वस्यक्षणिकत्वाभ्युपगमाच्च ॥

मू०— संहंता चेतनः कश्चित्स्थिरो नाभ्युपगम्यते ॥
तथाप्यविद्यामुख्यानां कारणत्वात्परस्परम् ॥ ३२५ ॥
संगच्छते लोकयात्रा ते चाविद्यादयः पुनः ॥ अविद्या चैव संस्कारो विज्ञानं नाम रूपकम् ॥३२६
स्यात् षडायतनं स्पर्शो वेदना च ततः परं ॥ तृष्णा विद्याप्युपादानं भवो जातिस्तथैव च ॥३२७॥
स्याज्जरा मरणं शोकस्तथैव परिदेवना ॥ ततो दुःखं दुर्मनस्तेत्येवं जातीयका इमे ॥ ३२८ ॥
अन्योन्यहेतुकास्तेषां समर्येऽङगीकृताः पुनः ॥ अविद्याभ्रान्तिरित्युक्ताः संस्कारा रागपूर्वकाः ॥३२९
विज्ञानं वस्तुविषयज्ञानमित्युपवर्णितम् ॥ चत्वारः स्युरुपादानस्कंधानामपदाभिधाः ॥ ३३० ॥
स्कंधैस्तैरभिनिर्वर्त्या देहस्य कललादिका ॥ अवस्था बुद्बुदाद्या या सारूप्यमिति वर्णिता ॥३३१॥
तत् षडायतनं प्राहुरिंद्रियाणि तु तानि षट् ॥ नामरूपेंद्रियाणां सन्निपातः स्पर्श उच्यते ॥ ३३२ ॥
वेदना सुखदुःखादिमयी संग्राह्यमित्यदः ॥ तृष्णा त्वध्यवसायः स्यादुपादानं ततो विदुः ॥३३३॥
वाक्कायचेष्टासंभूतौ धर्माधर्माविति स्फुटम् ॥ प्रादुर्भावो जातिरिति परिपाको जरेति च ॥३३४॥
स्कंधानां चैव जातानां तन्नाशं मरणं विदुः ॥ शोकस्तु म्रियमाणस्य य अंतर्दाह ईरितः ॥३३५॥

† ब्र. सू.—१७ अ.—२ पा.—२.

प्रलापनं तदुत्थं तु कीर्तिता परिदेवना ॥ पंचविज्ञानकार्यं तदसाध्यानुभवः स्मृतः ॥ ३३६ ॥
तद्दुःखं मानसं दुःखं दुर्मनस्तेति गीयते ॥ यथा बीजादंकुरःस्यादंकुरात्पत्रमेव च ॥ ३३७ ॥
पत्रात्कांडं ततो नालो नालाद्गर्भं ततः परम् ॥ गर्भाच्छूकस्ततः पुष्पं पुष्पात् फलमिति क्रमात् ॥३३८
येषामचेतनत्वेऽपि बीजादीनामसत्यपि ॥ अधिष्ठातरि चान्यस्मिन्यथा वाऽन्योन्यमत्र तु ॥३३९॥
कार्यकारणभावो हि दृश्यते तदिहाऽपि च ॥ जन्मादिहेतवो ज्ञेया अविद्यादय ईरिताः ॥ ३४० ॥
जन्मादयश्च विज्ञेया अविद्याहेतुका इति ॥ आवर्तमाना दृश्यन्ते घटीयंत्रवदत्र च ॥ ३४१ ॥
अर्थाक्षिप्तस्तदेतैः स संघात इति चेन्न च ॥ तेषामुत्पत्तिमात्रत्वात्संघातस्तर्हि युज्यते ॥३४२॥
निमित्तमवगम्येत संघातस्य यदि त्वया ॥ ‡ परस्परप्रत्ययत्वेऽप्यविद्यादेस्तथा पुनः ॥३४३॥
पूर्वपूर्वं निमित्तं स्यादुत्तरोत्तरसंभवे ॥ संघातापत्तिहेतुत्वं नैव क्वाप्युपपद्यते ॥ ३४४ ॥
अर्थादाक्षिप्यते संघश्चाविद्यापूर्वकैरिति ॥ यद्यविद्यादयः संघमंतरेणात्मसंभवं ॥ ३४५ ॥
अलब्ध्वा पंचसंघातमपेक्षंत इतीर्यते ॥ संघातस्य ततस्तस्य निमित्तं किंचिदुच्यताम् ॥ ३४६ ॥
न ह्यपेक्षामात्रतस्तन्निमित्तं सिध्यति स्वतः ॥ संघातस्य त्वविद्याद्या निमित्तमिति चेन्न हि ॥३४७॥
कथं तमेव चाश्रित्य लब्ध्वाऽऽत्मानं पुनः स्वयं॥ तस्यैव स्युर्निमित्तं च संसारेऽनादिके त्वथ॥ ३४८॥
सातत्येनैव संघाता उत्पद्यन्त इतीर्यते ॥ तथापि तस्मात्संघातात्संघातांतरसंभवः ॥ ३४९ ॥
सदृशो नियमेनैव भवेदनियमेन वा ॥ विरुद्धं सदृशं वेति तत्राद्ये शृणु वक्ष्यते ॥ ३५० ॥
न कदापि मनुष्यस्य देवाद्याप्तिः कदाचन ॥ द्वितीये तु क्षणे हस्ती भूत्वा देवो भवेन्नरः ॥३५१॥
नियामकस्याभावादप्यभावस्थायिकर्मणः ॥

व्या०— "‡ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्"। यद्यपि कश्चिच्चेतनः स्थिरः संहंता नाभ्युपगम्यते । तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्य त्रिलोकयात्रांते च विद्यादयः अविद्यासंस्काराः विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदनतृष्णोपादानभवो जातिः जरा मरणं शोकः परिवेदना दुःखं दुर्मन इत्येवं जातीयका इतरेतरहेतुकाः सौगतसमयेऽभ्युपगम्यन्ते । अविद्या-भ्रान्तिः संस्कारा रागादयः वस्तुविषयज्ञानं विज्ञानं चत्वार उपादानस्कंधो नाम उपादानस्कंधैर-भिनिर्वर्त्यं शरीरस्य कललबुद्बुदाद्यवस्थारूपं षडायतनं षडिंद्रियाणि नामरूपेंद्रियाणां सन्निपातः स्पर्शः वेदना सुखदुःखादिः मयैतत्संपादनीयमित्यध्यवसायः । तृष्णा उपादानं वाक्कायचेष्टाभवं धर्माधर्मौ जातिः प्रादुर्भावः जातानां परिपाकः जरा स्कंधानां नाशः मरणं म्रियमाणस्यान्तर्दाहः शोकः तदुत्थं प्रलापनं परिदेवना पंचविज्ञानकार्यं असाद्यनुभवनं दुःखं मानसं दुःखं दुर्मनस्ता तत्र यथा बीजादंकुरमंकुरात्पत्रं पत्रात्कांडं कांडान्नालः नालाद्गर्भं गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमिति बीजादीनां स्वयमचेतनत्वे सत्यपि चान्यस्मिन्नधिष्ठातरि इतरेतरकार्यकारणभावो दृश्यते एवमिहापि जन्मादिहेतुका अविद्यादयः अविद्यादिहेतुकाश्च जन्मादयः घटीयंत्रवदनिशमावर्तमाना दृश्यन्ते । तदेतैरर्था-

‡ ब्र. सू.—१८ अ.—२ पा.—२.

क्षिप्तः संघात इति चेन्न । कुतः उत्पत्तिमात्रत्वात् भवेदुपपन्नः संघातः । यदि संघातस्य किंचिन्निमित्तमवगम्येत । नत्ववगम्यते । इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्य निमित्तं भवेत् । न संघातापत्तौ निमित्तं भवति । यदुक्तमविद्यादिभिरर्थादाक्षिप्यते संघात इति । यद्यविद्यादयः संघातमंतरेणात्मानमलभमाना अपेक्षन्ते । संघातमित्युच्यते । ततस्तस्य संघातस्य किंचिन्निमित्तं वक्तव्यं न ह्यपेक्षामात्रान्निमित्तं सिध्यति । अथ अविद्यादय एव संघातस्य निमित्तमिति तदपि न कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैवानिमित्तं स्युः । अथानादौ संसारे संघाता एव सातत्येन उत्पद्यन्त इति । तथापि संघातात्संघातान्तरमुत्पद्यमानं नियमेन सदृशमेवोत्पद्येत अनियमेन वा विसदृशं सदृशं वेति । आद्ये मनागप्यस्य कदापि देवादिप्राप्तिर्न स्यात् । द्वितीये मनुष्यः क्षणेन हस्ती भूत्वा देवो भवेत् नियामकाभावात् । स्थायिनः कर्मणोऽप्यनभ्युपगमात् ॥

मू०— अंगीकृत्य त्वविद्यादेरुत्पत्तौ च निमित्तताम् ॥ ३५२ ॥
संघातसिद्धिर्नेत्युक्तं * वाचाप्युत्पत्तिहेतुता ॥ इदानीं नेति वक्ष्याम एवं हि क्षणवादिनः ॥३५३॥
पूर्वक्षणे निरुध्येत चोदयत्युत्तरक्षणे ॥ पूर्वोत्तराख्यक्षणयोरेवमभ्युपगच्छता ॥ ३५४ ॥
वाच्यो हेतुफलाभावो न वक्तुं शक्यते क्वचित् ॥ पूर्वक्षणस्य रुद्धस्य रुध्यमानस्य वा पुनः ॥३५५॥
तथाभावग्रस्ततया नोत्तरक्षणहेतुता ॥ कार्यान्वितानां मृत्स्वर्णादीनां दृष्टा हि हेतुता ॥ ३५६ ॥
ग्रस्तस्य नैवाभावेन दृश्यते कार्यहेतुता ॥ क्षणभंगाख्यवादे तु हेतुः पूर्वक्षणो न हि ॥ ३५७ ॥
निरोधेन ग्रस्ततया चोत्तरस्येति कीर्तितम् ॥ अथ $ हेतावसत्येव फलोत्पत्तिं वदेद्यदि ॥ ३५८ ॥
तत्प्रतिज्ञोपरोधः स्याच्चतुर्हेतून् प्रतीत्य च ॥ चित्ताच्चैत्तोत्पत्तिरिति प्रतिज्ञाहानिरापतेत् ॥ ३५९ ॥
चित्तं विज्ञानमाख्यातं चैत्तास्ते च सुखादयः ॥ नीलावभासज्ञानस्य नीलालंबप्रतीतितः ॥ ३६० ॥
भवेन्नीलाकारताद्या ततस्तु समनंतरात् ॥ प्रत्ययात्पूर्वविज्ञानान्मनसो बोधरूपता ॥ ३६१ ॥
दृशः प्रतिप्रत्ययाच्च रूपग्रह उदाहृतः ॥ सहकारिप्रत्ययाच्चालोकात्स्पष्टार्थता पुनः ॥ ३६२ ॥
कारणानि तु चत्वारि चैत्तानामिति या पुनः ॥ प्रतिज्ञावरणाभावे चोपरुध्येत केवलम् ॥ ३६३ ॥
अथोत्तरक्षणोत्पत्तिपर्यंतमवतिष्ठते ॥ पूर्वक्षणश्चेत्तद्यौगपद्यं हेतोः फलस्य च ॥ ३६४ ॥
तथा च क्षणिकाः सर्वे प्रतिज्ञेति न संभवेत् ॥

व्या०--- "* उत्तरोत्पादे च पूर्वनिरोधात्" अंगीकृत्याविद्यादीनामुत्पत्तिनिमित्तत्वं न संघातसिद्धिरित्युक्तं । इदानीं तदप्युत्पत्तिनिमित्तत्वं न संभवतीत्युच्यते । क्षणवादिनोऽयमभ्युपगमः । उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वक्षणो निरुध्यत इति । न चैवमभ्युपगच्छता पूर्वोत्तरक्षणयोर्हेतुफलभावं शक्यते वक्तुं । निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वेनोत्तरक्षणहेतुत्वानुपपत्तेः कार्यान्वयानां मृत्सुवर्णादीनां हेतुत्वं दृश्यते । नाभावग्रस्तस्य । "$ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा" क्षणभंगवादे पूर्वक्षणे निरोधग्रस्तत्वान्नोत्तरस्य हेतुरित्युक्तं । अथासत्येव हेतौ फलोत्पत्तिं

* ब्र. सू.–१९ अ.–२ पा.–२. $ ब्र. सू.–२० अ.–२ पा.–२.

ब्रूयात्ततः प्रतिज्ञोपरोधः स्यात् । चतुर्विधान् हेतून्प्रतीत्य चित्ताचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा हीयेत । चित्तं विज्ञानं चैत्ताः सुखादयः नीलावभासज्ञानस्य नीलाद्यालंबनप्रत्ययान्नीलाकारतासमनंतरप्रत्ययात्पूर्वं विज्ञानान्मनसो बोधरूपता चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणनियमः अलोकात्सहकारिप्रत्ययात् स्पष्टार्थता । एवं चैत्तानामपि चत्वार्येतानि कारणानि सेयं प्रतिज्ञा । असति कारणे उपरुध्येत । अथोत्तरक्षणोत्पत्तिर्यावदवतिष्ठते पूर्वक्षण इत्युच्येत । ततः यौगपद्यं हेतुफलयोः स्यात् । तथा च क्षणिकाः सर्वे इतीयं प्रतिज्ञा हीयेत ॥

मू०— वैनाशिकाः कल्पयंति नानाभेदेन वै पुनः ॥ ३६५ ॥
बुद्धिर्बोध्यं तथा बोद्धा त्रयादन्यत्तु संस्तुतं ॥ क्षणिकं चेति तदपि त्रयं च क्रमशो विदुः ॥३६६॥
*प्रतिसंख्यातनिरोधावाकाशश्चेति भेदतः ॥ अवस्तुभावमात्रं तन्निरुपाख्यमिति श्रुतं ॥ ३६७ ॥
प्रतिसंख्या तु भावानां नाशः स्याद्बुद्धिपूर्वकः ॥ विपरितो निरोधः स्यात्प्रतिसंख्यानिरोधकः ॥३६८
तथैवावरणाभावमात्रमाकाशमुच्यते ॥ प्रत्याचष्ट इदानीं तन्निरोधद्वयमप्यथ ॥ ३६९ ॥
प्रतिसंख्यातनीरोधद्वयाप्राप्तिरसंभवः ॥ अवच्छेदात्तदेतौ हि स्यातां संतानगोचरौ ॥ ३७० ॥
किं भावगोचरावेतौ नैव संतानगोचरौ ॥ संतानेष्वपि सर्वेषु किल संतानिना पुनः ॥ ३७१ ॥
तद्धेतुफलभावेन संतानस्य तथैव हि ॥ विच्छेदविरहान्नापि स्यातां तौ भावगोचरौ ॥ ३७२ ॥
निरन्वयो हि भावानां निरुपाख्यो विनाशकः ॥ अवस्थास्वपि सर्वासु प्रत्यभिज्ञाबलेन तु ॥३७३॥
अन्वयच्छेदभावेन तस्मात्तत्परिकल्पितम् ॥ नोपपन्नं विरोधस्य द्वयमित्यवधार्यताम् ॥ ३७४ ॥
यश्चाविद्याविरोधः स्यात्प्रतिसंख्यानिरोधके ॥ अंतःपातिसमीचीनज्ञानात्परिकरैः सह ॥ ३७५ ॥
स्वयमेव यथा वाचा हानिर्निर्हेतुकादिके ॥ ज्ञानोपदेशानर्थक्यमन्ते § चोभयथाऽपि च ॥ ३७६ ॥
दोषादेतद्दर्शनं तु सर्वं तदसमंजसं ॥

व्या०— " * प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् "। अपि वैनाशिकाः कल्पयन्ति । "बुद्धिर्बोध्यं तथा बोद्धा त्रयादन्यत्तु संस्तुतं ॥ क्षणिकं चेति "। तदपि च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधौ आकाशश्चेत्याचक्षते । त्रयमपि चैतदवस्त्वभावमात्रं निरुपाख्यमिति मन्यन्ते । बुद्धिपूर्वकः खलु विनाशी भावानां प्रतिसंख्यानिरोधो नाम विपरीतो प्रतिसंख्यानिरोधः । आवरणाभावमात्रमाकाशमिति केषामाकाशं परस्तात् खलु प्रत्याख्यास्यति निरोधद्वयमिदानीं प्रत्याचष्टे । प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसंभवः । कुतः अविच्छेदात् । एतौ हि संतानगोचरौ स्याताम् । भावगोचरौ वा न तावत्संतानगोचरौ संभवतः । सर्वेष्वपि संतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानस्य विच्छेदाभावात् । नापि भावगोचरौ । न हि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति । सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेन अन्वयविच्छेददर्शनात् । तस्मात्परपरिकल्पितस्य विरोधद्वयस्यानुपपत्तिः । "§ उभयथा च दोषात्" योऽयमविद्यानिरोधः प्रतिसंख्यानिरोधान्तःपाती

* ब्र. सू.–२१ अ.–२ पा.–२.  § ब्र. सू.–२२ अ.–२ पा.–२.

स सम्यग्ज्ञानाद्वा सपरिकरात्स्यात् । स्वयमेव वा । आद्ये निर्हेतुकनिराश्रयाभ्युपगमहानिः । उत्तरस्मिन् ज्ञानोपदेशानर्थक्यं । एवमुभयथाऽपि दोषादसमंजसमिदं दर्शनम् ॥

मू०— "‡आकाशे चाविशेषाच्च" निरुपाख्यत्वमेव न ॥ ३७७ ॥
अविशेषात्तत्प्रतीतेस्तावद्वेदप्रमाणतः ॥
आकाशवत्सर्वगतश्च नित्य इति वाक्यतः ॥ ३७८ ॥
व्योम्नि वस्तुप्रसिद्धं हि प्रतिपन्नान् जनान् प्रति ॥
शब्दानुमेयता वाच्या गंधादीनां तथा पुनः ॥ ३७९ ॥
पृथ्व्याद्याश्रयतायाश्च सर्वत्रापि च दर्शनात् ॥
अपि चावरणाभावमात्रमाकाशमिच्छतः ॥ ३८० ॥
तार्क्ष्ये पतति चैकस्मिन्सत्वादावरणस्य तु ॥
पिपत्सुतोऽन्यतार्क्ष्यस्य पतिष्यति च तत्र चेत् ॥ ३८१ ॥
येन वावरणाभावो विशेष्येत ततोऽप्यथ ॥
आकाशं वस्तुभूतं स्यान्नैव चाभावमात्रकम् ॥ ३८२ ॥

व्या०— "‡आकाशे चाविशेषात्" । आकाशे चायुक्तः निरुपाख्यत्वाभ्युपगमः तत्त्वप्रतीतेरविशेषात् । आगमप्रामाण्यात्तावता "आकाशवत्सर्वगतश्च नित्य" इत्यादिश्रुतिभ्यः आकाशस्य वस्तुत्वसिद्धिं विप्रत्तिपन्नान् प्रतिशब्दगुणानुमेयत्वं गंधादिगुणानां पृथिव्याद्याश्रयत्वदर्शनात् । अपिचावरणाभावमात्रमाकाशमिच्छतः एकस्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात् सुपर्णान्तरस्य पिपत्सुतोऽनवकाशप्रसंगः । यत्रावरणभावस्तत्र पतिष्यतीति चेत् । येनावरणभावो विशिष्यते । तर्त्हि वस्तुभूतमेवाकाशः स्यात् । नाभावमात्रम् ॥

मू०— "†अनुस्मृतेश्च" युक्तं वै वैनासिकमतं ततः ॥
वैनासिकाः क्षणिकतां वदेयुः सर्ववस्तुनः ॥ ३८३ ॥
अभ्युपेयात् क्षणिकतामुपलब्धुरपि स्वयम् ॥
अनुस्मृतेर्न चैवं स्यादित्यस्यार्थो विचार्यते ॥ ३८४ ॥
अनुभूतमनुत्पन्नं स्मरणं स्यादनुस्मृतिः ॥
सा च संभवतीत्थं चेदनुभूत्येककर्तृका ॥ ३८५ ॥
नैवमन्यानुभूतेऽर्थे स्मृतिरन्यस्य संभवेत् ॥
अप्येवं दर्शनस्मृत्योरेकस्मिन् कर्तरि स्फुटं ॥ ३८६ ॥
प्रत्यक्षप्रत्यभिज्ञानं प्रसिद्धं सर्वलोकतः ॥

‡ ब्र. सू.–२३ अ.–२ पा.–२. † ब्र. सू.–२४ अ.–२ पा.–२.

अहमद्राक्षमेवैतं भिन्नः कर्त्ता तयोर्यदि ॥ ३८७ ॥
भवेत्तदाऽसावद्राक्षीन्नैवं प्रत्येति कश्चन ॥ § नैवासतो ह्यदृष्टत्वाद्वैनाशिकमिदं मतं ॥ ३८८ ॥
अनंगीकुर्वतां भावकार्ये च स्थिरकारणम् ॥ भावोत्पत्तिरभावं च तत्कार्यं दर्शयत्यपि ॥३८९॥
भावोत्पत्तिमभावाच्चानुपमृद्य भवेन्न हि ॥ प्रादुर्भावस्तथा नष्टाद्बीजात् स च किलांकुरः ॥३९०॥
घटो विनष्टान्मृत्पिंडात्कूटस्थादविशेषतः ॥ यदि चेत्सर्वतः सर्वमुत्पद्येतेति ते विदुः ॥ ३९१ ॥
तत्रेदमुच्यते न स्यादभावाद्भावसंभवः ॥ भावोत्पत्तिर्यद्यभावात्तदाभावाविशेषतः ॥ ३९२ ॥
तत्कारणविशेषस्य कल्पना व्यर्थतामियात् ॥ बीजादीनां विनष्टानां विनष्टानां मृदां तथा ॥३९३
शशशृंगादिकानां च विशेषो नास्त्यभावतः ॥ बीजादेवांकुरोत्पत्तिः शशशृंगात्कुतो न हि ॥३९४॥
नीलादिरुत्पलादीनामिवाभावो विशिष्यते ॥ विशेषवत्वादेवाभावस्य भावत्वमुच्यते ॥ ३९५ ॥
उत्पलादिवदेवं चेदभावाद्भावसंभवे ॥ अभावान्वितमेव स्यात्कार्यमेव मृदन्विताः ॥ ३९६ ॥
शरावाद्या हि दृश्यन्ते यत्त्वयोक्तं न दृश्यते ॥ यच्च नानुपमृद्यात्र प्रादुर्भावादितीरितम् ॥३९७॥
तद्दुरुक्तं सुवर्णे च स्वेषामेव तथा पुनः ॥ प्रत्यभिज्ञायमानानां सुवर्णानां हि दृश्यते ॥ ३९८ ॥
रुचकादौ कारणत्वमपि चैवांकुरादिषु ॥ उपादानं न बीजाद्या अनुस्यूतांशुकाः पुनः ॥३९९॥
तस्मादनुपरं नायमभावाद्भावसंभवः ॥

व्या०— "* अनुस्मृतेश्च" इति । अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात् । न च संभवति । अनुस्मृतेः अनुभवमनुत्पद्यमानमनुस्मरणमास्मृतिः। सा चानुभवैककर्तृका संभवति । पुरुषान्तरानुभूते पुरुषान्तरस्य स्मृत्यदर्शनात् । अपि च दर्शनस्मरणयोरेकस्मिन् कर्तरि प्रत्यक्षप्रत्यभिज्ञानं सर्वलोकसिद्धं । अहमद्राक्षमिति यदि हि तयोर्भिन्नः कर्ता स्यात्ततोऽसावद्राक्षीति प्रतीयात् । न त्वेवं प्रत्येति कश्चित् "नासतोऽदृष्टत्वात्"। इतश्चानुपपन्नो वैनाशिकसमयः यतः स्थिरकारणमनभ्युपगच्छतामभावाद्भावोत्पत्तिः स्यात् । दर्शयति चाभावात् भावोत्पत्तिं नानुपमृद्य प्रादुर्भावादिति न विनष्टाद्धि किल बीजादंकुर उत्पद्यते । न विनष्टाच्च मृत्पिंडात् घटः कूटस्थाच्चेत् अविशेषात् सर्वं सर्वत उत्पद्यत इति तत्रेदमुच्यते । "§ नासतोऽदृष्टत्वात्" इति नाभावाद्भाव उत्पद्यते । यद्यभावाद्भाव उत्पद्येत अभावाविशेषात् । कार्यविशेषाभ्युपगमोऽनर्थकः स्यात् । न हि विनष्टानां बीजादीनां शशविषाणादीनां चाभावे कश्चिद्विशेषोऽस्ति । येन बीजादेवांकुरो जायते न शशविषाणात् । यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येत । उत्पलादीनामिव नीलादिस्ततोऽविशेषवत्त्वादेव भावत्वं अभावस्योत्पलादिवत्स्यात् अभावाच्च भावोत्पत्तौ अभावान्वितमेव कार्यं स्यात् शरावादय इव मृदन्विता न चैवं दृश्यंते । यच्चूक्तं नानुपमृद्य प्रादुर्भावादित्यादि तद्दुरुक्तं स्वरे स्वानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां रुचकादिकारणत्वादिदर्शनात् । अंकुरादिष्वपि न बीजादय उपादानं । किंत्वनुस्यूतास्तदवयवा एव । तस्मादनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः ।

§ ब्र. सू.–२५ अ.–२ पा.–२. * ब्र. सू.–२४ अ.–२ पा.–२.

मू०— भावोत्पत्तिमभावादभ्युपगम्येत यद्यपि ॥ ४०० ॥
एवं चानीहमानानां †औदासीन्येन वै नृणाम् ॥
सुलभत्वादभावस्य सिद्धेदभिमतं फलं ॥ ४०१ ॥
क्षेत्रकर्मण्ययत्नस्य कृषिकस्य सदा भवेत् ॥
समृद्धा सस्यसंपत्तिर्न समीहेत कश्चन ॥ ४०२ ॥
तथैवालयमागच्छेत्तदा स्याद्युक्तमीरितम् ॥
सर्वापवर्गयोस्तस्मान्न युक्तं तावकं मतं ॥ ४०३ ॥

व्या०— "†उदासीनानामपि चैवं सिद्धिः"। यदि चाभावाद्भावोत्पत्तिमभ्युपगम्येत एवं सत्युदासीनानामनीहमानानां जनानामभिमतं सिद्धिः स्यात्। अभावस्य सुलभत्वात्। तथा च कृषिफलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात्। स्वर्गापवर्गयोश्च न कश्चित्समीहेत। न चैतद्युज्यतेऽभ्युपगम्यते वा केनचित्। तस्मादप्यनुपपन्नोऽभावाद्भावोत्पादः ॥

मू०— विज्ञानवादी बौद्धश्चेदानीं प्रत्यवतिष्ठते ॥
केषांचिच्च विनेयानामर्थानां बाह्यवस्तुनि ॥ ४०४ ॥
आलक्ष्याभिनिवेशं तदनुरोधेन केवलं ॥ बाह्यार्थप्रक्रियेयन्तु रचिता तेन वै पुनः ॥ ४०५ ॥
नाभिप्रेता हि सुगतैर्विज्ञानस्कंधवादिभिः ॥ तस्मिन् विज्ञानवादे च बुध्यारूढेन केवलम् ॥ ४०६॥
रूपेणान्तस्थ एवात्र प्रमाणं फलमित्यपि ॥ प्रमेयं चेति सर्वोऽपि व्यवहारो हि युज्यते ॥ ४०७ ॥
तथा सत्यपि बाह्येऽर्थे बुध्यारोहणमंतरा ॥ मानादिव्यवहारस्य संभवादिति तत्कथम् ॥ ४०८ ॥
अन्तस्थो व्यवहारस्तु न बाह्योऽर्थ इतीरितम् ॥ अर्थोऽवगम्यमानस्तु बाह्यः किं परमाणवः ॥४०९॥
संबाध्यास्तत्समूहा वा न तावत्परमाणवः ॥ ते स्तंभादिप्रकृतयः परिच्छेद्या भवन्ति हि ॥४१०॥
परमाण्ववभासाभिज्ञानानुदयतस्तथा ॥ न तत्समूहाः स्तंभाद्याः परमाणुभ्य एव तु ॥ ४११ ॥
अन्ये तानन्यभावाच्च दुर्निरूपतया तथा ॥ प्रत्याचक्षीत जात्यादीन् तथाऽनुभवमात्रतः ॥ ४१२ ॥
साधारणात्मज्ञानस्य विषयेऽविषये च यः ॥ पक्षपात इदं स्तंभज्ञानं कुड्यमिदं त्विति ॥ ४१३ ॥
घटज्ञानं पटज्ञानमित्येवं रूपतो बहु ॥ न विशेषो ज्ञानगतं नांतरेणोपपद्यते ॥ ४१४ ॥
एवं विषयसारूप्यं वाच्यं ज्ञानस्य वै पुनः ॥ तस्मिन्नंशकृते चापि ज्ञानेन विषयाकृतेः ॥ ४१५ ॥
अपार्थे कामरुद्धत्वाद्बहिरर्थातिकल्पना ॥ स्वप्नादिवत्तद्द्रष्टव्यं यथा स्वप्ने जनस्य तु ॥ ४१६ ॥
मायामरीचिसलिलगंधर्वनगरादयः ॥ बाह्यार्थमन्तरेणैव ग्राह्यग्राहकतां तथा ॥ ४१७ ॥
एवं जाग्रत्प्रत्ययाश्च प्रत्ययत्वाविशेषतः ॥ कथं वा सति बाह्येऽर्थे प्रत्ययानां विचित्रता ॥ ४१८ ॥
वासनायाश्च वैचित्र्यादित्याह स च वै पुनः ॥ अनादावत्र संसारे बीजांकुरनिदर्शनात् ॥ ४१९ ॥

† ब्र. सू.–२६ अ.–२ पा.–२

ज्ञानानां वासनानां च परस्परनिमित्ततः ॥ वैचित्र्यान्न विरुध्येत बाह्यार्थाभाव एव तत् ॥ ४२० ॥
इति प्राप्ते *न चाभाव उपलब्धेरितीरितम् ॥ न कल्पं खलु बाह्यस्य कुतश्चेदुपलब्धितः ॥ ४२१ ॥
प्रत्ययेऽप्रत्यये चैव बाह्यार्थ उपलभ्यते ॥ न चोपलभ्यमानस्य विरहः शक्यते खलु ॥ ४२२ ॥
यथा हि कश्चिद्भुंजानस्तृप्तिं चानुभवेज्जनः ॥ ब्रूयान्नाहं तु भुंजानो न तृप्यामीति वा स्वयं ॥४२३॥
तद्वदिंद्रियसंबंधैर्लब्धबाह्यस्तु पूरुषः ॥ न च सोऽस्तीति वा ब्रूयादहं नोपलभे त्विह ॥ ४२४ ॥
ब्रूयाच्चेत्तस्य वचनमुपादेयं कथं भवेत् ॥ नाहमेवं ब्रवीम्यर्थमहं नोपलभे त्विह ॥ ४२५ ॥
किंतु लब्ध्यतिरिक्तार्थमहं नोपलभे त्विति ॥ न लब्धव्यतिरेकोऽपि बलात्स्वीकार्य एव हि ॥४२६
नैव कश्चिल्लब्धमेव स्तंभं वा कुड्यमेव वा ॥ इत्येवं नोपलभते स्तंभकुड्यादिकान् पुनः ॥ ४२७ ॥
विषयत्वेनोपलब्धेर्लभन्ते सर्वजंतवः ॥ इतश्चैवं हि वक्तव्यमन्य एवोपलभ्यते ॥ ४२८ ॥
उपलब्ध्यतिरिक्तोऽर्थ इति चैव किल स्थितिः ॥ एवं व्याचक्षते ते च बाह्यमर्थं प्रयत्नतः ॥४२९॥
यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासते ॥ इति ते सर्वलोकेषु प्रसिद्धां संविदं बहिः ॥ ४३० ॥
भासमानां लब्धवंतः प्रतिचिख्यासवः पुनः ॥ बहिर्वदंति बाह्यार्थवच्छब्दं च प्रयुंजते ॥ ४३१ ॥
अन्यथा ते कथं ब्रूयुर्बहिर्वदिति निर्भयाः ॥ न हि वंध्यापुत्रवदवभासत इत्ययं ॥ ४३२ ॥
तस्माद्यथा स्वानुभवं बहिरर्थेऽवभासते ॥ ननु बाह्यस्य चार्थस्य प्रोक्तस्तैरप्यसंभवः ॥ ॥४३३ ॥
नायमध्यवसायस्तु साधुरित्युररीकृतम् ॥ संभवासंभवौ चोभौ प्रमाणस्य यतः पुनः ॥ ४३४ ॥
परिणामं विना नोभौ प्रमाणस्य यतः पुनः ॥ प्रवृत्तिं चाप्रवृत्तिं च पुरस्कृत्यैव तावुभौ ॥ ४३५ ॥
न संभवासंभवौ च पुरस्कृत्यैव केवलम् ॥ प्रवृत्तिरप्रवृत्तिर्वा न प्रमाणस्य युज्यते ॥ ४३६ ॥
प्रत्यक्षादिष्वन्यतमप्रमाणेनोपलभ्यते ॥ संभवत्येव तद्यत्तु प्रमाणेन न केन वा ॥ ४३७ ॥
उपलभ्येत तन्नैव तत्र संभवतीह तु ॥ लभ्यमानोऽपि बाह्योऽर्थः सर्वैरेव प्रमाणकैः ॥ ४३८ ॥
विकल्पैर्व्यतिरेकाद्यैः कथं नेत्येव वर्णयेत् ॥ नैवं विषयसारूप्याल्लब्धेर्विषयनाशनम् ॥ ४३९ ॥
अस्वीकृते च विषये पुनर्विषयरूपितम् ॥ सारूप्यं नोपलभ्येत बहिर्विषयलब्धितः ॥ ४४० ॥
स्वप्नप्रत्ययवज्जाग्रदवस्थाप्रत्यया अपि ॥ विनैव बाह्यं युज्येरन् नैतत्प्रत्युच्यते मया ॥ ४४१ ॥
स्वाप्नप्रत्ययवज्जाग्रत्प्रत्यया न भवन्ति हि ॥ वैधर्म्यात्तच्च वैधर्म्यं बाधाबाधावितीरितौ ॥ ४४२॥
बाध्यते स्वप्नलब्धोऽर्थः प्रतिबुद्धो वदेदिति ॥ मिथ्या मयोपलब्धो हि महाजनसमागमः ॥४४३
निद्राग्लानं मम मनस्तेनैषा भ्रांतिरित्यथ ॥ एवं यथायथं बाधो मायादिष्वपि दृश्यते ॥४४४॥
नैवं जाग्रल्लब्धवस्तु स्यादवस्थासु बाधितं ॥ अबाधितत्वमास्तेयं तज्जाग्रत्प्रत्ययस्य तु ॥ ४४५ ॥
तेन स्वप्नप्रत्ययः स्यात् मिथ्याबाधित इत्यसौ ॥ अथ जाग्रत्प्रत्ययस्य बाध्यत्वे बाधको न हि॥४४६
स्वाप्नानां प्रत्ययानां स्यान्न बाध्यं बाधनं यतः ॥

* ब्र. सू.–२७ अ.–२ पा.–२.

न स्वप्नप्रत्ययो मिथ्या ततः स्वप्नवदित्यसौ ॥ ४४७ ॥
दृष्टांतः साध्यविकलस्तद्बाधाबाधलक्षणम् ॥

व्या०— "‡ नाभाव उपलब्धेः" विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते । केषांचिद्विनेयानां बाह्यवस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थप्रक्रियेयं विरचिता । नासौ सुगताभिप्रेता । तस्य तु विज्ञानैकस्कंधवाद एवाभिप्रेतः । तस्मिंश्च विज्ञानवादे बुद्ध्यरूढेनैव रूपेणांतस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्वं उपपद्यते । सत्यपि बाह्येऽर्थे बुद्ध्यारोहणमंतरेण प्रमाणादिव्यवहारासंभवात्कथं गम्यते । अंतस्थ एव व्यवहारो न बाह्यार्थोऽस्तीति तदसंभवादित्याह । स हि बाह्यार्थोपगम्यमानः परमाणवो वा स्युः तत्समूहाः स्तंभादयो वा न तावत्परमाणवः स्तंभादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति । परमाण्ववभासज्ञानानुत्पत्तेः नापि तत्समूहाः स्तंभादयः तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां दुर्निरूपत्वात् । एवं जात्यादीनपि प्रत्याचक्षीत । अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य योऽयं प्रतिविषयं पक्षपातस्तंभज्ञानं कुड्यज्ञानमित्येवं रूपः । नासौ ज्ञानगतं विशेषमंतरेण उपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याभ्युपगंतव्यं । आचक्ष्यते ( अंशक्षते ) च । तस्मिन्विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बहिरर्थकल्पना स्वप्नादिवच्चेदं द्रष्टव्यं । यथा स्वप्नमायामरीच्युदकगंधर्वनगरादिप्रत्ययाः विनैव बाह्यार्थेन ग्राह्यग्राहकाकारा भवन्ति । एवं जागरिताः प्रत्यया अपि प्रत्ययत्वाविशेषात् कथं पुनरसति बाह्ये ते प्रत्ययवैचित्र्यमुपपद्यन्ते । वासनावैचित्र्यादित्याह । अनादौ हि संसारे बीजांकुरवत् ज्ञानानां वासनानां चान्योन्यनिमित्तत्वेन वैचित्र्यं न विरुध्यते । तस्मादभावो बाह्यार्थस्येत्येवं प्राप्ते ब्रूमः । नाभाव उपलब्धेरिति । न कल्पभावो बाह्यार्थस्य युक्तः । कस्मादुपलब्धेः उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तंभकुड्यादिर्न चोपलभ्यमानस्यैवाभावो युक्तः । यथा हि कश्चिद्भुंजानः भुजि साध्यां तृप्तिमनुभवन्ब्रूयात् । नाहं भुंजे न तृप्यामीति तद्वदिंद्रियोत्कर्षेणैव स्वयमुपलभ्यमान एव बाह्यार्थं नाहमुपलभे । न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात् । ननु नाहमेवं ब्रवीमि नाहमर्थं उपलभ इति । किंतूपलब्धिव्यतिरिक्तं नोपलभ इति चेन्न । यत उपलब्धिव्यतिरिक्तोऽपि बलादभ्युपगंतव्यः । न हि कश्चिदुपलब्धिमेव स्तंभं कुड्यं वेत्युपलभते । उपलब्धिविषयत्वेन स्तंभकुड्यादीन् सर्वलोका उपलभन्ते । इतश्चैतदेवं वक्तव्यं । उपलब्धिव्यतिरिक्तोऽर्थ उपलभ्यत इति यत्प्रत्याचक्षणापि बाह्यमर्थमेव व्याचक्षते । यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति तेऽपि सर्वलोकप्रसिद्धाः । बहिरवभासमानां संविदमुपलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदितिवत्करणं कुर्वन्ति । इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः । न हि वंध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्माद्यथानुभवं बहिरर्थोऽवभासत इति युक्तमभ्युपगंतुं । न तु बहिर्वदवभासत इति । ननु बाह्यार्थस्यासंभव उक्तः । नायं साधुरध्यवसायः । यतः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवौ । न पुनः संभवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती । यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते तत्संभवति । यत्तु न केनापि प्रमाणेनोपलभ्यते । तन्न संभवति । इह तु सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिभिर्विकल्पैर्न संभवतीत्युच्यते । उपलब्धेरेवं न च ज्ञानस्य विषयसारूप्यात् विषयनाशो भवति । असति विषये विषयसारूप्यानुपपत्तेः । बहिरुपलब्धेश्च विषयस्य ॥

‡ ब्र. सू–२७ अ.–२ पा.–२

मू०—§ वैधर्म्ये न स्वप्नवच्च जाग्रतः प्रत्ययस्य तु ॥ ४४८ ॥
भवेन्निर्विषयत्वाध्यवसानमिति निश्चयः ॥
यदप्युक्तं विनाप्यर्थं ज्ञानवैचित्र्यमद्भुतं ॥ ४४९ ॥
वासनानां च वैचित्र्यमिति प्रत्युच्यते मया ॥
वासनानां ¶ न भावोऽपि त्वत्पक्षेऽनुपलब्धितः ॥ ४५० ॥
अपि चार्थोपलब्ध्यर्थं बाह्यार्थानां भवन्ति ताः ॥
नामरूपावासनाख्याः प्रत्यर्थं भाषितास्त्वया ॥ ४५१ ॥
अर्थेष्वलभ्यमानेषु किं निमित्तास्तु तद्वद ॥ अनादित्वेऽप्यन्धपरंपरान्यायेन दुर्वहा ॥ ४५२ ॥
वासना नाम संस्कारविशेषास्तावदाश्रयम् ॥ अन्तरेणावकल्पन्त एवं लोकेषु दर्शनात् ॥ ४५३ ॥
न साधनाश्रयः कश्चित्तव चास्ति प्रमाणतः ॥ अतो नानुपलब्धेश्च क्षणिकत्वाच्च नैव तत् ॥४५४॥
यदप्यालयविज्ञानं परेण परिकल्पितं ॥ यद्वासनाश्रयत्वेन क्षणिकत्वपरिग्रहात् ॥ ४५५ ॥
अनवस्थितरूपं तत्प्रवृत्तिज्ञानवत्स्वयं ॥ न वासनाधिकरणं तावद्भवितुमर्हति ॥ ४५६ ॥
न कालत्रयसंबंधिन्येकस्मिन्नसति स्फुटम् ॥ देशकालनिमित्तादिसापेक्षा वासना तु या ॥ ४५७ ॥
तदधीनस्मृतेस्तस्याः प्रतिसंधानपूर्वकः ॥ व्यवहारः संभवति स्थिरत्वे चालयस्य तु ॥ ४५८ ॥
क्षणभंगप्रतिज्ञायाः ग्लानिरापतति ध्रुवम् ॥ अपि विज्ञानवादेऽपि क्षणिकत्वपरिग्रहात् ॥ ४५९ ॥
यच्च बाह्यार्थवादेषु क्षणिकत्वनिबंधनं ॥ दूषणं भावितं तच्चेदुत्तरोत्पादनेऽपि च ॥ ४६० ॥
पूर्वक्षणनिरोधादीत्येवमादिकमत्र च ॥ अनुसंधेयमेतस्मादेतौ पक्षौ निराकृतौ ॥ ४६१ ॥
बाह्यार्थवादो विज्ञानवादिपक्षश्च तावुभौ ॥
"†सर्वथाऽनुपपत्तेश्च" तन्नैकस्मिन्नसंभवात् ॥ ४६२ ॥

व्या०— "§ वैधर्म्याच्च न स्वप्नादिवत्" यदुक्तं स्वप्नादिप्रत्ययवत् जागरितवत् प्रत्यया अपि विनैव बाह्यार्थेन भवेयुरिति तत्प्रत्युच्यते । न स्वप्नादिप्रत्ययवत् जाग्रत्प्रत्ययो भवितुमर्हति । कुतः वैधर्म्यात् । वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पुनर्वैधर्म्यं बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु वस्तुप्रतिबुद्धस्य मिथ्यामायोपलब्धो महाजनसमागमः न ह्यस्ति महाजनसमागमः निद्राज्ञानं तु मे मनो बभूव । तेनैषा भ्रांतिर्बभूवेति । एवं मायादिष्वपि भवति । यथाऽयं बाधः नैवं जागरितोपलब्धं वस्तु स्तंभादिकं कस्यांचिदवस्थायां बाध्यते । अपि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयं । तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते । जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ बाधको न भवेत् । न हि बाध्यमेव बाधकं भवति । तथा च न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात् स्वप्नवदिति । तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नवत् जाग्रत्प्रत्ययस्य निर्विषयत्वाध्यवसानं । "¶ न भावोऽनुपलब्धेः" यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्या-

§ ब्र. सू.–२८ अ.–२ पा.–२. ¶ ब्र. सू.–२९ अ.–२ पा.–२. † ब्र. सू.–३० अ.–२ पा.–२.

दिति तत्प्रत्युच्यते । न भावो वासनानामुपपद्यते । त्वत्पक्षेऽनुपलब्धिर्बाह्यार्थानामर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नामरूपा वासना भवति । अनुपलभ्यमानेष्वर्थेषु किं निमित्ता वासना भवेयुः । अनादित्वेऽप्यंधपरंपरान्यायेन प्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यात् । अपि च वासना नाम संस्कारविशेषः । संस्कारश्च नाश्रयमंतरेणावकल्पते । एवं लोके दृष्टत्वात् । न च तव साधनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः क्षणिकत्वात् । यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परपरिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवत् न वासनाधिकरणं भवति । न हि कालत्रयसंबंधिन्येकस्मिन्नसति देशकालनिमित्तापेक्षावासनाधीनस्मृतिप्रतिसंधानादिव्यवहारः संभवति । स्थिरत्वे चालयविज्ञानस्य क्षणभंगहानिः । अपि च विज्ञानवादेऽपि क्षकिकत्वाभ्युपगमाद्यानि बाह्यार्थवादे क्षणिकत्वानि निबंधनानि दूषणान्युद्भावितान्युत्तरोत्पादे च पूर्वनिरोधादित्येवमादीनीहाप्यनुसंधेयानि एवमेतौ पक्षौ निराकृतौ । बाह्यार्थवादिपक्षः विज्ञानवादिपक्षश्च । शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणायानादरः क्रियते । न ह्ययं सर्वप्रसिद्धो लोकव्यवहारः । अन्यत्तत्त्वमधिकमशक्यते अपन्होतुमपवादाभाव उत्सर्ग इति प्रसिद्धेः । "* सर्वथानुपपत्तेश्च" किं बहुना यथा यथाऽयं वैनाशिकसमय उत्पत्तिमत्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव । न कांचिदत्रोपपत्तिं पश्यामः । अतश्चानुपपन्नो वैनाशिकतंत्रव्यवहारः । अपि च बाह्यार्थविज्ञानशून्यवादत्रयमपि इतरेतरविरुद्धमपदिशताऽनुगतेन स्पष्टीकृत आत्मनोऽसंबंधप्रलापित्वप्रद्वेषो वापचासुविरुद्धप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति सर्वथाप्यनादरणीयोऽयं वैनाशिकसमयः श्रेयोऽर्थिभिरिति ॥

मू०—इदानीं तु क्षपणकमतं दूरे निरस्यते ॥

सप्त तेषां पदार्था जीवाजीवास्रवसंवराः ॥ ४६३ ॥
बंधश्च निर्जरा मोक्षः संक्षेपाद्द्वौ पदार्थकौ ॥ ४६४ ॥
( संवरो निर्भरो मोक्षः संक्षेपाद्द्वौ पदार्थकौ ) ॥
जीवाजीवौ तयोरंतर्भावात्तेषामितीर्यते ॥ ४६५ ॥
तयोः प्रपंचमपरमिममाचक्षते च ते ॥
पंचास्तिकायास्तेष्वाद्यः प्रोक्तो जीवास्तिकायकः ॥ ४६६ ॥
तत्पुद्गलास्तिकायश्च ततो धर्मास्तिकायकः ॥
अथाधर्मास्तिकायश्च तथाकाशास्तिकायकः ॥ ४६७ ॥
एष्ववान्तरभेदेन ( एतानांतरभेदेन ) बहुशः परिकल्पितान् ॥
जग्मुर्बोधात्मको जीवो जडवर्गस्त्वजीवकः ॥ ४६८ ॥
इंद्रियाणां प्रवृत्तिः स्यादास्रवः संवरस्त्वयम् ॥
शमादिरूपा या वा स्यात्प्रवृत्तिस्त्वथ निर्जरा ॥ ४६९ ॥

---

* ब्र. सू.–३० अ.–२ पा.–२.

तप्ताश्मारोहणादिः स्याद्वंधोऽष्टविधकर्म तत् ॥ चतुर्विधं घातिकर्माद्यं ज्ञानावरणीयकं ॥ ४७० ॥
दर्शनावरणीयं च मोहनीयं तृतीयकम् ॥ आंतरालिकमेवं स्यादथ घाति चतुर्विधम् ॥ ४७१ ॥
वेदनीयं नामिकं च गोत्रीयायुष्कमित्युभे ॥ तत्र सम्यग्ज्ञानतः स्यान्न मोक्ष इति पर्ययः ॥ ४७२ ॥
तद्ज्ञानावरणीयं स्यात्कर्म चार्हतदर्शनात् ॥ अभ्यासान्न भवेन्मोक्षो दर्शनावरणीयकम् ॥ ४७३ ॥
तृतीयं मोहनीयं तु विशेषानवधारणम् ॥ बहुशः प्रतिषिद्धेषु मोक्षमार्गेष्वितीरितम् ॥
मोक्षमार्गप्रवृत्तानामंतरायकरं विदुः ॥ विज्ञानं यत्तुरीयं तदान्तरालिकसंज्ञितम् ॥ ४७५ ॥
श्रेयोहंतृतयैतानि घातिकर्माण्यरीरटन् ॥ अथ चाघातिकर्माणि वेदनीयमथोच्यते ॥ ४७६ ॥
शुक्लपुद्गलपाकेषु हेतुर्बंधोऽपि नैव हि ॥ श्रेयोनिरोधि यस्मात्तत्त्वज्ञानादिघातकं ॥ ४७७ ॥
यच्छुक्लपुद्गलारंभवेदनीयानुरोधि तत् ॥ नामिकं कर्म चाख्यातं तत्कर्मारभते पुनः ॥ ४७८ ॥
तच्छुक्लपुद्गलस्याद्याऽवस्था कललबुद्बुदं ॥ अव्याकृतं ततोऽप्याद्यं शक्तिरूपेण संस्थितं ॥ ४७९ ॥
गोत्रीयमथ चायुष्कमायुष्कायति वै नृणाम् ॥ सम्यगुत्पादनद्वारा सतां कथयतीति तत् ॥ ४८० ॥
आघातिकर्मणी शुक्लपुद्गलाश्रयता यतः ॥ बध्नाति पुरुषं चेति बंधकर्माष्टकं च तत् ॥ ४८१ ॥
गतसर्वक्लेशजातवासनस्यैव चात्मनः ॥ सम्यक् सुखैकतानस्य चोपरिष्टादवस्थितिः ॥ ४८२ ॥
मोक्ष इत्येवमपरे तूर्ध्वं गमनशालिनः ॥ जीवस्य बंधविरहाद्यदूर्ध्वं गच्छतीति सः ॥ ४८३ ॥
अस्तीति कायते यस्माज्जीव एवास्तिकायकः ॥ एवमन्यत्र जीवास्तिकायस्तु त्रिविधः स्मृतः ॥ ४८४ ॥
बद्धो मुक्तो नित्यसिद्ध आर्हतस्तु तृतीयकः ॥ अन्यौ प्रसिद्धौ विज्ञेयौ पूर्यते गलतीति च ॥ ४८५ ॥

पुद्गलं वस्तूप ( वस्त्युप ) चितं तथैवापचितं च तत् ॥
स्यात्पुद्गलास्तिकायश्च षोढाभेदसमन्वितः ॥ ४८६ ॥
पृथिव्यादीनि चत्वारि स्थावरं जंगमं त्विति ॥
धर्मास्तिकायो विज्ञेयः प्रकृतेरानुकूल्यवान् ॥ ४८७ ॥
स्यादधर्मास्तिकायस्तु स्थितिहेतुरितीरितः ॥
द्विधाऽऽकाशास्तिकायश्च लोकाकाशस्तथाऽऽदिमः ॥ ४८८ ॥

अन्यस्त्वलोकाकाशः स्यादुपर्युपरि वर्तिनाम् ॥ अन्तर्वर्ती तु लोकानां लोकाकाश इतीर्यते ॥ ४८९ ॥
मोक्षस्थाने तदुपरि त्वलोकाकाश उच्यते ॥ सर्वत्र सप्तभंगीनां न्यायं तमवतारयन् ॥ ४९० ॥
निपातोऽनेकान्तभासी तिङन्तप्रतिरूपकः ॥ यदि वस्त्वस्त्येव चेत्येकान्ततः सर्वथा सदा ॥ ४९१ ॥

सर्वत्र सर्वात्मनाऽस्त्येवेति चैतदसंगतं ॥
तस्य चेप्साजिहासाभ्यां कानिचित्क्वचिदेव च ॥ ४९२ ॥

सत्वे प्रेक्षावतां हानोपादाने कल्पिते इति ॥ तमेकं सप्तभंगीनयं दूषयति स्वयम् ॥ ४९३ ॥

* असंभवाच नैकस्मिन्निति सूत्रेण सूत्रकृत् ॥
सत्वासत्वादिधर्माणामन्योन्याभावरूपिणाम् ॥ ४९४ ॥
एकस्मिन् धर्मिणि समावेशः शीतोष्णवन्न हि ॥

व्या०— "* नैकस्मिन्नसंभवात्"। इदानीं क्षपणकमतं निरस्यते तेषां सप्त पदार्थाः जीवाजीवास्रवसंवरनिर्जरबंधमोक्षाः। संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवौ। तयोरेव तेषामन्तर्भावादिति मन्यन्ते। तयोरिममपरं प्रपंचमाचक्षते। पंचास्तिकायो नाम जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः आकाशास्तिकायश्चेति। सर्वेषामप्येषामवान्तरभेदान्बहुविधान् स्वसमये परिकल्पितान् वर्णयन्ति। बोधात्मको जीवः जडवर्गस्त्वजीवः इन्द्रियप्रवृत्तिरास्रवः शमदमादिरूपा प्रवृत्तिः संवरा तप्तशिलारोहणादिर्निर्जरः बंधोऽष्टविधं कर्म। तत्र घातिकर्म चतुर्विधं। ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमांतरालिकमिति। तथाघातिकर्म चतुर्विधं। वेदनीयं नामिकं गोत्रीयमायुष्कं चेति। तत्र सम्यग्ज्ञानान्न मोक्ष इति विपर्ययः। ज्ञानावरणीयं कर्म आर्हतदर्शनाभ्यासान्न मोक्ष इति। दर्शनावरणीयं। बहुप्रतिषिद्धेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं मोक्षमार्गप्रवृत्तावांतरविज्ञानं आंतरालिकं तानीमानि श्रेयोहंतृत्वात् घातिकर्माणीत्युच्यन्ते। अथाघातिकर्माणि वेदनीयं कर्म शुक्लपुद्गलविपाकहेतुः। तद्धि बंधोऽपि न श्रेयसः परिपंथी तत्त्वज्ञानाविघातकत्वात्। शुक्लपुद्गलारंभकवेदनीयकर्मारंभगुणं नामिकं कर्म। तद्धि शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदमारभते। गोत्रिकं त्वव्याकृतं। ततोऽप्याद्यं शक्तिरूपेणावस्थितः आयुष्कमायुः कायति कथयति उत्पादनद्वारेत्यायुष्कं तान्येतानि शुक्लपुद्गलाश्रयत्वादघातिकर्माणि तदेतत्कर्माष्टकं पुरुषं बध्नातीति बंधः। विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानसुखैकतानस्यात्मनोऽवस्थानं मोक्ष इति एके। अन्ये तूर्ध्वगमनशीलस्य जीवस्य बंधमोक्षात् य ऊर्ध्वं गच्छत्येव स मोक्ष इति अस्तीति कायते शब्द्यत इत्यस्तिकायः जीव एवास्तिकायः। एवं सर्वत्र जीवास्तिकायः त्रिविधः बद्धो, मुक्तो, नित्यसिद्धश्चेति। नित्यसिद्ध आरभतः अन्यौ प्रसिद्धौ पूर्यते गलत्युपचितापचितं वस्तु पुद्गलशब्देनोच्यते। पुद्गलास्तिकायः षोढा पृथिव्यादीनि चत्वारि भूतानि स्थावरं जंगमं चेति धर्मास्तिकायः। प्रवृत्त्यन्वधर्मास्तिकायः। स्थितिहेतुः आकाशास्तिकायो द्विविधा लोकाकाशः अलोकाकाशश्चेति। उपर्युपरि वर्तमानानां लोकानामन्तर्वर्ती लोकाकाशः। तेषामुपरि मोक्षस्थानमलोकाकाशः। सर्वत्र चेमं सप्तभंगिनं न्यायमवतारयन्ति। दंतप्रतिरूपको (तो) निवातोऽनेकान्तद्योती यदि वस्त्वस्त्येवेत्येकान्ततः सर्वथा सदा सर्वत्र सर्वात्मनाऽस्त्येवेति तनतदीप्सा जिघासाभ्यां क्वचित् कदाचित्सत्वे हानोपादानो प्रेक्षावतां कल्पेतेति तमेतं सप्तभंगिनं नयं दूषयति। "* नैकस्मिन्नसंभवात्" इति न ह्येकस्मिन् धर्मिणि सदसत्वादीनां धर्माणां परस्परपरिहारस्वरूपाणां समावेशः संभवति शीतोष्णवत्। य एते सप्तपदार्थनिर्धारिता एतावन्त एवंरूपाश्चेति ते तथैव वा स्युर्नैव वा तथा स्युरितरथा हि तथा वा स्युः अतथा वेत्यनिर्धारितरूपं ज्ञानं संशयप्रमाणवदप्रमाणमेव स्यात्। नन्वनेकात्मकं वस्त्विति निर्धारणरूपमवज्ञानमुत्पद्यमानं न संशयवदप्रमाणं न निरंकुशं ह्यनेकान्तत्वं सर्ववस्तुषु प्रतिज्ञानस्य निर्धारणस्यापि वस्तुत्वाविशेषात्। स्यादस्तीति, स्यान्नास्तीति, विकल्पो निपातादनिर्धारणात्मकतैव

* ब्र. सू.—३१ अ.—२ पा.—२.

स्यात् । एवं निर्धारयितुं निर्धारणफलस्य च स्यात्पक्षे अस्तिता स्याच्च पक्षे नास्तिता चेति कथं तीर्थंकरो निर्धारणविशेषमुपदेष्टुं शक्नुयात् । कथं वा तदुपदिष्टेऽर्थे अनिर्धारितरूपे प्रवर्तेरन् । एकान्तिकफलत्वनिर्धारणे हि तत्साधनानुष्ठानाय सर्वो लोकः प्रवर्तेत । एवं स्वर्गापवर्गयोरप्यनवधारणे प्रवृत्तिर्न स्यात् । ततश्च तदर्थ शास्त्रप्रणयनं तून्मत्ततुल्यं स्यात् ॥

मू०— $ एवं चात्माकात्स्न्र्यमिति न देहपरिमाणता ॥
‡ पर्यायेणाविरोधोऽपि विकारादिभ्य एव न ॥ ४९५ ॥
† अंत्यमोक्षावस्थितस्य परिमाणस्य नित्यता ॥
आद्यस्य मध्यमस्यापि परिमाणस्य नित्यता ॥ ४९६ ॥
शरीरपरिमाणस्य वक्तव्या चैकरूपता ॥
अविशेषात्प्रसज्येत तस्मादेवं न शक्यते ॥ ४९७ ॥
अथ वाऽन्त्यस्य मोक्षे च परिमाणस्य तु स्थिरे (स्थिते) ॥
अवस्थयोः पूर्वयोस्तु जीवः स्यात्तत्प्रमाणकः ॥ ४९८ ॥
ततो विशेषतोऽणुर्वा महान्वा जीवभावतः ॥
न देहपरिमाणस्य तस्मान्मतमसंगतम् ॥ ४९९ ॥

व्या०— "$ एवं चात्माकात्स्न्र्यं" इति । यथैकस्मिन् धर्मिणि विरुद्धधर्मासंभवः स्याद्वा देवमात्मनो जीवस्याकात्स्न्र्यं परो दोषः । शरीरपरिमाणो जीव इत्यार्हता मन्यन्ते । तत्र यदा मनुष्यजीवः मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन् न कृत्स्नहस्तिशरीरं प्राप्नुयात् । प्रतीकजन्म प्राप्नुवन् कृत्स्नवपुः तनुशरीरेण केचिदपगच्छन्ति । अतो कात्स्न्र्यं तत्राह ॥ "‡ न च पर्यायादप्यविरोधो विकारादिभ्यः" । न च पर्यायादप्यवयवोपगमापगमाभ्यां देहपरिणामत्वं वक्तुं शक्यं । विकारादिदोषप्रसंगात् । यद्यवयवारभ्यो जीवः स्याद्विनाशी स्यात् ततश्च मोक्षाभावप्रसंगः । यद्यवयवा एवात्मा तर्ह्यगच्छतां चावयवानामागमापायधर्मवत्त्वाद्देहादिवदनात्मत्वादवस्थितं । कश्चिदवयव एवात्मेति न तस्य देहतुल्यत्वं । अपि चागच्छंतोऽवयवाः कुत आगच्छेयुः न ह्यात्माऽवयवाकारः कश्चित्प्रसिद्धोऽस्ति । तस्मादप्यसंगतं । "† अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" अपि चांत्यमोक्षावस्थाभावान्न जीवपरिमाणस्य नित्यत्वमिष्यते । तैस्तद्वत्पूर्वयोरप्याद्यमध्ययोर्जीवपरिमाणयोर्नित्यत्वप्रसंगात् । एकशरीरपरिमाणतैव स्यात् । अथ वाऽन्त्यस्य मोक्षे जीवपरिमाणानामवस्थितत्वात्पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात् । ततश्चाविशेषेण सर्वदा अणुर्महान्वा जीवो भवेत् न शरीरपरिमाणः । तस्मादप्यसंगतमार्हतमतम् ॥

मू०— % असामंजस्यतः पत्युरधिष्ठातेश्वरस्त्वति ॥
निमित्तमात्रवादस्तदश्रौतत्वान्निषिध्यते ॥ ५०० ॥

---

$ ब्र. सू.-३२ अ.-२ पा.-२. ‡ ब्र. सू.-३३ अ.-२ पा.-२. † ब्र. सू.-३४ अ.-२ पा.-२.
% ब्र. सू.-३५ अ.-२ पा.-२.

अश्रौतेश्वरवादश्च नानारूपेण कल्पितः ॥
पुरुषस्य प्रधानस्याप्यधिष्ठाता च केवलं ॥ ५०१ ॥
निमित्तकारणं योगसांख्याद्या जग्मुरीश्वरम् ॥
"¶ माहेश्वरास्तु मन्यन्ते" पदार्थान् पंच ते पुनः ॥ ५०२ ॥

कार्यं च कारणं योगो विधिर्दुःखान्त इत्यपि ॥ पशुपाशविमोक्षाय पत्यादिष्टा इमे इति ॥ ५०३ ॥
ईश्वरः स्यात्पशुपतिर्निमित्तं कारणं त्विति ॥ माहेश्वरास्तु चत्वारः शैवाः पाशुपतास्तथा ॥ ५०४ ॥
कारुसिद्धान्तिनः केचित्तथा कापालिकाः परे ॥ महेश्वरप्रणीतागमानुसारतया च ते ॥ ५०५ ॥
नाम्ना माहेश्वराः प्रोक्तास्तत्र कारणमीश्वरः ॥ कार्यं प्रधानं योगस्तु महदादिप्रकीर्तितम् ॥ ५०६ ॥
ॐकारज्ञानधृत्यादिविधिस्त्रिषवणं पुनः ॥ गूढचर्यावसानं च दुःखान्तो मोक्ष इत्यपि ॥ ५०७ ॥

आत्मानः पशवस्तेषां पाशो बंधः प्रकीर्तितः ॥
दुःखान्तस्तद्विमोक्षः स्यादिति वैशेषिकाः पुनः ॥ ५०८ ॥

स्वप्रक्रियानुसारेण निमित्तं त्वीश्वरस्त्विति ॥ अधिष्ठातुः कुलालादेर्निमित्तत्वं घटादिषु ॥ ५०९ ॥
उपादानत्वमपि न तद्वत्कार्ये प्रतीश्वरः ॥ तत्रेदं प्रतिभातीत्थं किं केवलनिमित्तता ॥ ५१० ॥
श्रुतेरुतानुमानादेर्नाद्यस्तूभयवर्णनात् ॥ निमित्तोपादानतेति चोपादानत्वमित्यपि ॥ ५११ ॥
वेदेष्वसकृदुक्तत्वादनुमानमपीह न ॥ अनुमानात्कल्प्यमान ईशो दृष्टानुसारतः ॥ ५१२ ॥
कल्पनीयस्ततश्चात्र कुलालवदपीशितुः ॥ रागादिदोषः सज्येत वैषम्यं निर्घृणादिकं ॥ ५१३ ॥
सार्थकत्वादनीशत्वप्रसक्तेश्चेश्वरस्य च ॥ स्यात्पूरुषविशेषत्वोपगमात्पुरुषस्य च ॥ ५१४ ॥
औदासिन्याभ्युपगमादसामंजस्यमापतेत् ॥ "‡ अधिष्ठानासंगतेरप्येवं $ करणवद्यदि ॥ ५१५ ॥
न भोगादेः § प्रसक्तत्वादंतवत्त्वं प्रसज्यते ॥ स्यादसर्वज्ञता वापि परिच्छेदो न वा तथा ॥ ५१६ ॥

व्या०— "* पत्युरसामंजस्यात्" । इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते । सा चेयं वेदबाह्येश्वरकल्पना अनेकप्रकारा केचित्तावत्सांख्ययोगव्यपाश्रया हिरण्यगर्भपतंजलिप्रभृतयः कल्पयन्ति । प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वर इति । "माहेश्वरास्तु मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पंच पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः । पशुपतिरीश्वरः निमित्तकारणमिति वर्णयन्ति । माहेश्वराश्चत्वारः शैवाः पाशुपताः कारुक (कारुणिक) सिद्धांतिनः कापालिकाश्चेति । महेश्वरप्रणीतागमानुसारितया माहेश्वराः कारणमीश्वरः कार्यं प्राधानिकं महदादि च योगोपि ॐकारादिध्यानधारणादिः विधिस्त्रिषवणस्नानादिः गूढचर्यावसानः दुःखान्तो मोक्षः पशव आत्मानः तेषां पाशः बंधः तद्विमोक्षो दुःखान्तः । वैशेषिकादयोऽपि कथं चित्स्वप्रक्रियानुसारेण निमित्तकारणमीश्वरं वर्णयन्ति । एवं हि ते मन्यन्ते चेतनस्य खल्व-

¶ शांकरभाष्ये पत्युरसामंजस्यादितिसूत्रार्थे अ.—२ पा.—२ अधि.—७. ‡ ब्र. सू.—३६ अ.—२ पा.—२
$ ब्र. सू.—३७ अ.—२ पा.—२. § ब्र. सू.—३८ अ.—२ पा.—२. * ब्र. सू.—३५ अ.—२ पा.—२.

धिष्ठातृकुंभकारादेः कुंभादिकार्ये निमित्तत्वमात्रं दृश्यते । न तूपादानत्वमपि । तद्वदीश्वरोऽपि निमित्तमेव । इत्येवं प्राप्ते ब्रूमः पत्युरसामंजस्यादिति तत्रेदं वक्तव्यं । किमीश्वरस्य निमित्तमात्रत्वश्रुतेरवगम्यते । उतानुमानादेर्नाद्यः श्रुतेरुभयविधकारणत्वावगमात् इत्यसकृदुक्तत्वात् । नाप्यनुमानात् । अनुमानाद्धीश्वरः कल्प्यमानो दृष्टानुसारेणैव कल्पनीयः । ततश्च कुलालादिवदीश्वरस्यापि रागादिदोषप्रसक्तिः । वैषम्यनैर्घृण्यादिप्रसक्तेः सार्थवत्वादनीश्वरप्रसक्तिश्च पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्यौदासिन्याभ्युपगमाच्चासामंजस्यं । "‡ अधिष्ठानानुपपत्तेश्च" । इतश्चानुपपत्तिः । परपरिकल्पितस्येश्वरस्य कुंभकार इव मृदादिप्रधानादीन्यधिष्ठाय प्रवर्तेरन् । न चैवमुपपद्यते । न ह्यप्रत्यक्षरूपं रूपादिविहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति । मृदादिवैलक्षण्यात् । "¶ करणवच्चेन्न भोगादिभ्यः" स्यादेतद्यथा रूपादिविहीनमपि चक्षुरादिकं पुरुषोऽधितिष्ठति एवं प्रधानमपीश्वरोऽधिष्ठास्यतीति न भोगादिदर्शनात् हि करणग्रामस्याधिष्ठितत्वम् गम्यते । न चात्र भोगादयो दृश्यन्ते । करणग्रामस्यैवेश्वरस्यापि भोगप्रसंगः । न चैतदिष्यते । तैरन्यथा वा सूत्रद्वयं व्याख्यायते । "‡ अधिष्ठानानुपपत्तेश्च" इतश्चानुपपन्नः परपरिकल्पितश्चेश्वरः साधिष्ठानः । सशरीरो हि राजा राष्ट्रस्येष्टे अतश्च दृष्टान्तेनेश्वरं कल्पयतः ईश्वरस्यापि शरीरं कल्प्यं स्यात् । न च तत्संभवति सृष्ट्युत्तरकालाभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः । "¶ करणवच्चेन्न भोगादिभ्यः" । ईश्वरस्यापि करणानामायतनं शरीरं (न) कल्प्यते । तर्हि संसारिवदीश्वरस्यापि दुःखादिभावादि प्रसज्येत । "+ अंतवत्त्वमसर्वज्ञता वा" इतश्चानुपपन्नः परपरिकल्पित ईश्वरः स हि प्रधानपुरुषेश्वराणामियत्तां परिच्छिनत्ति न वा । आद्ये तेषामंतवत्त्वं स्यात् । लोके इयत्तापरिच्छिन्नानां घटानामन्तवत्त्वदर्शनात् दृष्टानुसारेण कल्प्यत्वादन्ते ईश्वरस्यासर्वज्ञत्वापत्तिः तस्मादसंगतस्तार्किककल्पनेश्वरकारणवादः । अस्माकं तु श्रुत्येश्वरसिद्धिः । सा च न दृष्टान्तमपेक्षते । निरपेक्षस्वभावत्वात् । तया चेश्वरस्य निमित्तत्वमुपादानत्वं सर्वज्ञत्वमधिष्ठातृत्वादिकं च सिध्यतीति न काऽप्यनुपपत्तिः ॥

मू०— * उत्पत्त्यसंभवात्पांचरात्रं मतमसंगतम् ॥
भगवान् वासुदेवः स्याज्ज्ञानरूपो निरंजः ॥ ५१७ ॥

परमार्थं च तत्तत्त्वं स चतुर्धा विभज्य च ॥ आत्मानं प्रतितिष्ठन्वासुदेवव्यूहरूपतः ॥ ५१८ ॥
संकर्षणव्यूहरूपः प्रद्युम्नव्यूहरूपतः ॥ अनिरुद्धव्यूहरूपी वासुदेवः परात्मवान् ॥ ५१९ ॥
संकर्षणो जीवनाम प्रद्युम्नो मन उच्यते ॥ अहंकारोऽनिरुद्धः स्यात्तेषां प्रकृतिरुच्यते ॥ ५२० ॥
वासुदेवस्तदितरे कार्यमित्यभिधीयते ॥ संकर्षणो वासुदेवात्प्रद्युम्नः संकर्षणात्मनः ॥ ५२१ ॥
प्रद्युम्नादनिरुद्धश्च जात इत्यभिधाय च ॥ भगवन्तं महात्मानमिज्ययाऽभिगमेन च ॥ ५२२ ॥
स्वाध्याययोगैरिष्ट्वा तं क्षीणक्लेशस्तु यो जनः ॥ भगवन्तं प्रपद्येतेत्यादि तत्रोच्यते मया ॥ ५२३ ॥
उत्पत्त्यसंभवाद्दोषादनित्यत्वादिसंभवः ॥ नैवास्य भगवत्प्राप्तिर्मोक्षस्याकारणस्य तत् ॥ ५२४ ॥
कार्यप्राप्तौ च विलयप्रसंगात्तदसंभवः ॥ † कर्तुः संकर्षणाज्जीवात्प्रद्युम्नः करणं मनः ॥ ५२५ ॥

‡ ब्र. सू.–३६ अ.–२ पा.–२. ¶ ब्र. सू.–३७ अ.–२ पा.–२. * ब्र.सू.–३९ अ.–२पा.–२.
+ ब्र सू.–३८ अ.–२ पा.–२. † ब्र. सू.–४० अ.–२ पा.–२.

उत्पद्यत इति ह्येतदुक्तं नोत्पत्त्यसंभवात् ॥ ※ विज्ञानादिषु वा सत्सु स्यादेवोत्पत्तिसंभवः ॥५२६॥
अथ £ विप्रतिषेधाच्च क्वचिद्गुणगणत्वकम् ॥ ज्ञानैश्वर्यादि च गुणाः क्वचिदात्मन एव ते ॥५२७॥
संकर्षणादयो जीवा वासुदेवाः क्वचित्तथा ॥ वेदनिंदादर्शनाच्च पांचरात्रमसंगतम् ॥ ५२८ ॥
सांख्यादिपांचरात्रांता निरस्ता बहुयुक्तिभिः ॥ यावत्परमतं नैव निराकुर्यात्स्वयुक्तिभिः ॥५२९॥
अप्रतिष्ठितमेव स्यादिति न्यायात्स्वकं मतम् ॥ तस्माद्धृदयदेशे तु लिंगं धार्यं मुमुक्षुभिः ॥ ५३० ॥
इति सिद्धं प्रमाणैश्च तथैव बहुयुक्तिभिः ॥

व्या०— "§ उत्पत्त्यसंभवात्" । पांचरात्रमतमिदानीं निरस्यते । तत्र भागवता मन्यन्ते । भगवानेवैको वासुदेवः निरंजनज्ञानस्वरूपः परमार्थतत्वं । स च चतुर्धात्मानं प्रविभज्य प्रतिष्ठितः । वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च वासुदेवः परमात्मा संकर्षणो जीवः प्रद्युम्नो मनः अनिरुद्धोऽहंकारस्तेषां वासुदेवः प्रकृतिरितरे कार्यं वासुदेवात्संकर्षणो जायते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति । तमित्थंभूतं भगवन्तं अभिमानोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशः भगवन्तमेव प्रतिपद्यत इति तत्रेदमुच्यते । "§ उत्पत्त्यसंभवादिति" वासुदेवात्संकर्षणस्य जीवस्योत्पत्तिर्न हि संभवति । अनित्यत्वादिदोषप्रसंगात् । ततश्च नैवास्य भगवत्प्राप्तिः मोक्षः स्यात् । कारणस्य कार्यप्राप्तौ विलयप्रसंगात् । तस्मादसंगतैषा कल्पना ॥ "‡ न च कर्तुः करणम्" । यच्च भागवता वर्णयन्ति । कर्तुर्जीवात् । संकर्षणसंज्ञिकात् करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यत इति तन्न । उत्पत्त्यसंभवादेव वक्ष्यति चाचार्यः । जीवादेरनुत्पत्तिं नात्मा श्रुतेरित्यादिना । "※ विज्ञानादिभावे वा तदप्रतिषेधः" । अथापि स्यान्नैवैते संकर्षणादयः जीवादिभावेनाभिप्रेयन्ते । किं तर्हीश्वरा एवैते सर्वे विज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यैर्धर्मैरन्विता अभ्युपगम्यन्ते । वासुदेवा एवैते सर्वे निर्दिष्टा निरधिष्ठाना निरवद्याश्चैते तस्मान्नोत्पत्त्यभावदोष इति चेदेवमपि तदप्रतिषेधः । एवमपि विज्ञानादीनां भावेऽप्युत्पत्त्यसंभवस्याप्रतिषेधः प्रसज्येतैव उत्पत्त्यसंभवो दोषः प्रकारान्तरेण कथं यदि तावदयमभिप्रायः । वासुदेवाश्चत्वारोऽत्यंतं भिन्नास्तुल्यधर्माण इति ततोऽनेकेश्वरकल्पनानर्थक्यं एकेनैव कार्यसिद्धेः सिद्धान्तहानिश्च । भगवानेवैको वासुदेवः परार्थतत्त्व इत्यभ्युपगमात् ॥ अथायमभिप्रायः । एकस्य भगवतश्चत्वारो व्यूहास्तुल्यधर्माण इति तथापि तदवस्था एवोत्पत्त्यसंभवदोषः । न हि वासुदेवात्संकर्षणस्य संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्योत्पत्तिः संभवत्यतिशयाभावात् भवितव्यं ह्यतिशयेन कार्यकारणयोर्मृद्घटयोरिव न ह्यसत्यतिशये इदं कार्यमिदं कारणमित्यवकल्प्यते । नापि विशेषस्तैरभ्युपगम्यते वासुदेवा एव सर्वे व्यूहा निर्विशेषा इत्यन्तेन चैते भगवद्व्यूहाश्चत्वार एव । ब्रह्मादेस्तंबपर्यंतस्य समस्तस्यैव जगतः भगवद्व्यूहत्वाभ्युपगमात् । अथाऽपरा व्याख्या । ननु वासुदेवात्संकर्षणो जायत इत्यादिना जीवादेर्नोत्पत्तिर्न विधीयते । येनोक्तदोषः स्यात्किं तर्हि जीवादेर्जीवादिभाव ईश्वरादेर्भवतीत्युच्यते । पाकेन

---

※ ब्र. सू.–४१ अ.–२ पा.–२. £ ब्र. सू.–४२ अ.–२ पा.–२.
§ ब्र. सू.–३९ अ.–२ पा.–२. ‡ ब्र. सू.–४० अ.–२ पा.–२.

पुष्टो लोहितो जायत इतिवदित्यत आह । विज्ञानादिभावे वा तदप्रतिषेधः । एवमपि तदप्रतिषेध एवोत्पत्तिसंभवस्याप्रतिषेध एव उत्पत्त्यसंभवः प्राप्नोत्येव । कुतः न हि लौहित्यादिवत् जीवादिभाव उत्पत्तुमर्हति । जीवादिवत्तत्तद्भावस्याप्यनादित्वात् । न हि जीवप्रवृत्तेरीश्वरदेवतामात्रेण जीवभावस्येश्वरादिजन्यत्वं संभवति । तस्माज्जीवादेस्तद्भावस्य वा उत्पत्त्यसंभव एव । "$ विप्रतिषेधाच्च" विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते । गुणगुणित्वकल्पनालक्षणः ज्ञानैश्वर्यबलवीर्यतेजांसि गुणाः क्वचिदुक्ता । आत्मान एवैते भगवन्तो वासुदेवा इति । तथा संकर्षणादयः क्वचिज्जीवादिरूपेणोक्ता इत्यत्र वासुदेवा एवैते सर्वे इति च एवमादिदर्शनात् वेदविप्रतिषेधश्च भवति । चतुर्षु वेदेषु परं श्रेयः अलब्ध्वा शांडिल्यं शास्त्रमधीतवानित्यादिवेदनिन्दादर्शनात् । तत्रान्तरविरोधश्च । सुप्रसिद्धस्तस्मादसंगतैषा कल्पनेति सिद्धं ॥

इति द्वितीयाध्याये द्वितीयः पादो वृत्तः ॥

---

$ ब्र. सू.-४२ अ.-२ पा.-२.

॥ श्रीगणेशाय नमः ॥

# अथ द्वितीयाध्याये तृतीयः पादः

मू०— उक्ता विप्रतिषेधेन परपक्षानपेक्षता ॥ ५३१ ॥
तद्वच्छ्रुतेः समान्योन्यविरोधादनपेक्षता ॥ स्यात्तन्माभूदिति परः प्रपंचः प्रसरत्यसौ ॥ ५३२ ॥
आकाशस्य समुत्पत्तिरस्ति वा नेति संशये ॥ वियन्नोत्पद्यते कस्माच्छांदोग्ये तु ¶ तदश्रुतेः॥५३३॥
तैत्तिरीयोपनिषदि वियदुत्पत्तिश्रस्ति तु ॥ श्रुतिर्वियत्समुत्पत्ते * गौणी चोत्पत्त्यसंभवात् ॥ ५३४॥
यस्य हि प्रागभावोऽस्ति तस्योत्पत्तिर्यथा घटे॥ न चाकाशः प्रागभावस्तस्माद्गौणी किल श्रुतिः ५३५
तस्माच्चामृतमित्यादिश्रवणान्नित्यमेव हि ॥ आकाशवत्सर्वगतो नित्य इत्याद्यसंगतेः ॥ ५३६ ॥
§ स्याच्चैकस्य ब्रह्मशब्दवन्मुख्यत्वं च गौणता ॥ न †¶ प्रतिज्ञाहानिरत्र तथैवाव्यतिरेकतः ॥ ५३७ ॥
† शब्देभ्यो घटसत्ताया मृत्सत्ताव्यतिरेकतः ॥ मृदज्ञाने घटज्ञानं तद्ब्रह्माव्यतिरेकतः ॥ ५३८ ॥
ब्रह्मसत्ताव्यतीरेकात्सत्ताया वियतस्तथा ॥ ब्रह्मज्ञानाद्वियद्ज्ञानं सुखेनैवोपपद्यते ॥ ५३९ ॥
अथ £ यावद्विकारं तु विभागो लोकवत्तथा ॥

व्या०— "¶ न वियदश्रुतेः"। विप्रतिषेधेन परपक्षाणामनपेक्षत्वमुक्तं तद्वच्छ्रुतिमपि परस्परविप्रतिषेधात् अनपेक्षत्वाशंकायां तन्निवृत्तये परः प्रपंच आरभ्यते। किमाकाशस्योत्पत्तिरस्ति उत नेति संशये सिद्धान्तिन उपक्रमंते। ¶ न वियदश्रुतेरिति न वियदुत्पद्यते। तस्मादश्रुतेः। छांदोग्ये ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय कथमन्यद्ज्ञानादन्यज्ञानमित्याशंकायां प्रकृतिविकारयोरभेदात् यथा मृदि ज्ञातायां तद्विकारघटशरावादिज्ञानमेवं सर्वप्रकृतिभूते ब्रह्मणि विज्ञाते सर्वं विज्ञातं भवतीति। वक्तुं "‡ सदेव सौम्येदमग्र आसीत्" इत्युपक्रम्य तेजोबन्नलक्षणभूतक्रमसृष्टिमुक्त्वा त्रिवृत्करणपूर्वकं भौतिकसृष्टिमप्युक्त्वा प्रकृतिविकाराभेदमेव उपसंहरति। "** "ऐतदात्म्यमिदं सर्वं" इति तत्र यदि वियतोऽप्युत्पत्तिरभविष्यत्। ततः सर्वस्य जनिमतः ब्रह्मजन्यत्वप्रतिपादकेऽस्मिन्प्रकरणे वियतोऽप्युत्पत्तिरश्रूयत। न च श्रूयते। तस्मादुत्पत्तिर्नास्तीति निश्चीयते। पूर्वपक्षमाह। "$ अस्ति तु"। तैत्तिरीयके "§‡ तस्माद्वा एतस्मादात्मन आकाशः संभूत" इति वियतोऽप्युत्पत्तिः श्रूयते। उत्पत्तिरस्तीति ‡निराकरोति "* गौण्यसंभवाच्छब्दाच्च" गौणी वियत उत्पत्तिश्रुतिः तस्मादसंभवात् न ह्याकाशस्योत्पत्तिः संभावयितुं शक्यते। यस्य हि प्रागभावोऽस्ति तस्य ह्युत्पत्तिः यथा घटादेः न चाकाशस्य प्रागभावोऽस्ति किं तर्हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसितुं। तस्माद्गौणीशब्दाच्च शब्दः खल्वाकाशस्याजत्वं ख्यापयति। "% वायुश्चांतरिक्षं चैतद-

---

¶ ब्र. सू.–१ अ.–२ पा.–३. $ ब्र. सू.–२ अ.–२ पा.–३. * ब्र. सू.–३ अ.–२ पा.–३.
§ ब्र. सू.–४ अ.–२ पा.–३. †¶ ब्र. सू.–५ अ.–२ पा.–३. † ब्र. सू.–६ अ.–२ पा.–३.
£ ब्र. सू.–७ अ.–२ पा.–३. ‡ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–१.
** छांदोग्योपनिषदि प्र.–६ खं–८ मं.–७. §‡ तैत्तिरीयोपनिषदि वल्ली–२ अनु.–१ मं.–२.
% बृहदारण्यकोपनिषदि अ.–४ ब्रा.–३ मं.–३.

मृतं " न ह्यमृतस्योत्पत्तिरुपपद्यते । आकाशवत्सर्वगतश्च नित्य इत्याकाशेन ब्रह्म नित्यत्वसर्वगतत्वाभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति । न हि तादृश्युत्पत्तिरुपपद्यते । स यथाऽनंतोऽयमाकाश एवं "§ अनंतश्चात्मा" "× आकाशशरीरं ब्रह्म" "* आकाश आत्मा" इति च न ह्याकाशस्योत्पत्तिमत्वे ब्रह्मणस्तेन विशेषणं भवति । स्यादेतत्कथं पुनरेकस्य संभूतशब्दस्य । "‡ तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यस्मिन्नधिकारे तेजःप्रभृत्यनुवर्तमानस्य मुख्यत्वमाकाशे च गौणत्वमित्यत आह । "$ स्याच्चैकस्य ब्रह्मशब्दवत्" । एकस्यापि संभूतशब्दस्य विषयविशेषवशात् गौणत्वमुख्यत्वे यथा एकस्यापि ब्रह्मशब्दस्य "‖ अधीहि भगवो ब्रह्मेति" अस्मिन्नधिकारे विज्ञेये ब्रह्मणि विज्ञानसाधने तपसि च अन्नादावानंदे च मुख्यत्वगौणत्वे तद्वत्कथं पुनरुत्पत्तौ "ब्रह्मणि विदिते सर्वं विदितमिति" प्रतिज्ञातं तत्राह । "† प्रतिज्ञाऽहानिरव्यतिरेकात्" "£ शब्देभ्य" । अनुत्पत्तावपि न स स एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया न हानिस्तस्मादव्यतिरेकात् । यथा हि मृत्सत्ताव्यतिरेकाभावात् घटसत्तायां मृद्ज्ञानेन घटज्ञानं । तथा ब्रह्माव्यतिरिक्तदेशकालतया ज्ञानस्य ब्रह्मसत्ताव्यतिरेकाभावात् । आकाशसत्ताया ब्रह्मज्ञानादाकाशज्ञानमुपपन्नं । न च मृद्घटयोः प्रकृतिविकारभावेनाभेदान्वयज्ञानात् घटज्ञानं युक्तं । ब्रह्माकाशयोस्तदभावादयुक्तमिति वाच्यं । पराभिमताविद्याजीवत्वजीवेश्वरभेदादीनामनादीनां ब्रह्मविचारत्वाभावेऽपि ब्रह्मसत्ताव्यतिरेकेण तत्सत्ताभावमात्रेण ब्रह्मज्ञानात्तद्ज्ञानस्यावश्यवक्तव्यतया प्रकृतेऽपि तथात्वसंभवात् । "% आकाशशरीरं" "* आकाश आत्मा" इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरव्यतिरेकसिद्धिः । कथं पुनरुत्पत्तौ नभस "§† एकमेवाद्वितीयं" इति प्रागुत्पत्तेरेकत्वावधारणमद्वितीयत्वं च घटते । नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति । "£§ यावद्विकारं तु विभागो लोकवत्" । तुशब्दः आशंकाव्यावृत्त्यर्थः न तावन्नभसा द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते लक्षणान्यत्वनिमित्तं हि नानात्वं । न च प्राग्विकाराद्ब्रह्म नभसो लक्षणान्यत्वं भवति । क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वात् । मूर्तत्वादिधर्मसामान्याविकारकाले तु ब्रह्म जगदुत्पादयति । स्तिमितमुत्तिष्ठति । तेनान्यत्वमधीयते । तथा च प्रागुत्पत्तेर्भेदानवगमात् । न द्वितीयत्वदोषः एकत्वावधारणं च स्वकार्यापेक्षया उपपद्यते लोकवत् । यथा लोके कश्चित्कुंभकारकुले पूर्वेद्युर्मृद्दंडचक्रादीनुपलभ्य परेद्युर्नानाविधान्यमंत्राणि प्रसारितान्युपलभ्य ब्रूयात् । मृदेवैकाकिनी पूर्वेद्युरासीदिति स च तयाऽवधारणया मृत्कायजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात् । न दंडचक्रादीनि तद्वत् तस्मान्न वियदुत्पद्यत इति सिद्धम् ॥

मू०— × एतेन मातरिश्वापि व्याख्यातप्राय एव हि ॥ ५४० ॥

वायुश्चांतरिक्षमिति ह्यमृतत्वं विधीयते ॥

वियतः प्रागभावस्याभावाज्जनिरसंगता ॥ ५४१ ॥

---

§ श्वेताश्वतरोपनिषदि अ.—१ मं.—९ × तैत्तिरीयोपनिषदि वल्ली.—१ अनु.—६ मं.—२.
* तैत्तिरीयोपनिषदि वल्ली १ अनु.—७ मं.—१. ‡ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—१ मं.—२
$ ब्र. सू.—४ अ.—२ पा.—३. ‖ तैत्तिरीयोपनिषदि वल्ली ३ अनु.—१ मं.—१.
† ब्र. सू.—५ अ.—२ पा.—३. £ ब्र. सू.—६ अ—२ पा.—३. % तैत्तिरीयोपनिषदि वल्ली—१ अनु.—६ मं.—२
§† छांदोग्योपनिषदि प्र.—६ खं.—२ मं.—१. £§ ब्र. सू.—७ अ.—२ पा.—३.
× ब्र. सू.—८ अ.—२ पा.—३.

वायोस्तु प्रागभावस्य सत्वात्तन्नित्यता कथम् ॥
तदुत्पत्तिश्रुतिर्गौणीत्यत्रैवं प्रतिपाद्यते ॥ ५४२ ॥
वायोः प्रागेव सत्वावधारणेनामृतश्रुतेः ॥
* उत्पत्यसंभवात्तस्याः श्रुतेर्गौणत्वमेव हि ॥ ५४३ ॥
वायोरग्निरिति श्रुत्या ¶ तेजः स्यान्मातरिश्वनः ॥
तेजःसकाशा‡दापस्तु स्यादद्भिः † पृथिवी स्वयम् ॥ ५४४ ॥
$ अधिकारात्तथा कृष्णरूपाच्छब्दान्तरान्मही ॥

व्या०— "§‖ एतेन मातरिश्वा व्याख्यातः"। पृथग्वियोगकरणमुत्तरार्थमेतेन मातरिश्वाऽपि व्याख्यातः "§ वायुश्चांतरिक्षं चैतदमृतं" "× सैषाऽनस्तमिता देवता यद्वायुः" इति नित्यत्वश्रवणात्। नन्वाकाशस्य प्रागभावाभावात्तदुत्पत्तिश्रुतेर्गौणत्वं युक्तं वायोस्तु प्रागभावसंभवात्कथं तदुत्पत्तिश्रुतेर्गौणत्वं तत्राह। "* असंभवस्तु सतोऽनुपपत्तेः"। अमृतत्वश्रुत्या वायोः प्रागेव सत्वावधारणेन प्रागभावस्यानुत्पत्तेरुत्पत्तेरसंभवः। ततः उत्पत्तिश्रुतेर्गौणत्वं। तस्मान्न वायुरुत्पद्यते। तस्मात् "¶ तेजोऽतस्तथा ह्याह" किं तेजो वायोरुत्पद्यते उत ब्रह्मण इति संशये पूर्वपक्षमाह। तेजोऽत इति। अतः मातरिश्वनस्तेज उत्पद्यते तथाह्याह श्रुतिः। "£ वायोरग्निः" इति। आपः अतस्तथा ह्यापेत्यनुवर्तते "‡ आपः" अतः अग्निरुत्पद्यते। तथाह्याह श्रुतिः। "£ अग्नेरापः" इति "† पृथिवी" अतः अद्भ्यो जायते। तथाह्याह। "£ अद्भ्यः पृथिवीति"। "$ अधिकाररूपशब्दान्तरेभ्यः" पृथिवीति वर्तते। "ℬ ता आप ऐक्षन्त" "ℬ ता अन्नमसृजन्त"। इत्यत्र किमन्नशब्दः प्रसिद्धान्नवचनः पृथिवीवचनो वेति संदेहे लोकप्रसिद्ध्या प्रसिद्धान्नवचनत्वे आह। पृथिवीति। अन्नशब्देन पृथिव्येवोच्यते। महाभूताधिकारात्। "‖ यत्कृष्णं तदन्नस्य" इति कृष्णरूपत्वाभिधानात्। पृथिव्या एव कृष्णरूपत्वं नान्नस्य शब्दान्तराच्च। अद्भ्यः पृथिवीति एवं प्राप्ते आह॥

मू०— इति प्राप्ते स एवेशः कारणं जगतां स्वयं ॥ ५४५ ॥
न वाग्वादस्तु @ तदभिध्यानादेव स ईश्वरः ॥
"तल्लिंगा % त्सोऽकामयत बहुः स्यामिति" कामनात् ॥ ५४६ ॥
अप्तेजसोर्जडत्वेन चेक्षणं जगदीशितुः ॥

---

* ब्र. सू.–९ अ.–२ पा.–३. ¶ ब्र. सू.–१० अ.–२ पा.–३ ‡ ब्र. सू.–११ अ.–२ पा.–३.
† ब्र. सू.–१२ अ.–२ पा.–३. $ ब्र. सू.–१३ अ.–२ पा.–३. §‖ ब्र. सू.–८ अ.–२ पा.–३.
§ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–३ मं.–३. × बृहदारण्यकोपनिषदि अ.–३ ब्रा.–५ मं.–२२.
£ तैत्तिरीयोपनिषदि वल्ली–२ अनु.- १ मं.–२. ℬ छांदोग्योपनिषदि प्र.–६ खं.–२ मं.–४.
‖ छांदोग्योपनिषदि प्र.–६ खं–४ मं.–१ @ ब्र. सू.–१४ अ.–२ पा.–३ % तैत्तिरीयोपनिषदि व.–२ अ.–६ मं.–२.

व्या०— "£‖ तदभिध्यानादेव तु तल्लिंगात्सः" । तुशब्दः पक्षव्यावृत्त्यर्थः तेज आदौ स एवेश्वर एव कारणं न वाय्वादि कुतस्तदभिध्यानरूपात्तल्लिंगात् "* तदैक्षत बहुस्यां प्रजायेयेति" "† सोऽकामयत बहुस्यां प्रजायेयेति" तस्यैव बहुभवनसंकल्पश्रवणात् । "* तत्तेज ऐक्षत" "$ ता आप ऐक्षन्त" इत्यत्रापि अप्तेजसोरचेतनत्वेनेक्षणानुपपत्तेः । ईश्वरेक्षणमेव तत्राभिमतं । तथा चेश्वरस्य बहुभवनसंकल्पे स एव तेन तेनाकारेण परिणमते । "£ तदात्मानं स्वयमकुरुत" इति श्रुत्यंतराच्च । "‖ सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति चाकाशशब्दितब्रह्मव्यतिरिक्तोपादाननिषेधाच्च । किंच यदि जलपृथिव्योस्तेजोबलप्रकृतित्वं तदा घटस्य मृदन्वितत्ववत् । जलान्नयोस्तेजोन्वितत्वं सिद्धमिति त्रिवृत्करणं व्यर्थं स्यात् । तस्मादपि ईश्वर एव हेतुः ॥

मू०— § विपर्ययेण चोत्पत्तिक्रमोऽत उपपद्यते ॥ ५४७ ॥
"†* तथाऽक्षरात्संभवतीह विश्वमिति" वर्णयन् ॥
तेन क्रमेण जायन्त इत्याहाथर्वणी श्रुतिः ॥ ५४८ ॥
"¶ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ॥ अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतं ॥५४९॥
"‡ यः सर्वज्ञः सर्वविच्च यस्य ज्ञानमयं तपः ॥ तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" ॥५५०॥
पृथ्वीं जलं †† चान्तरेण विज्ञानमनसी क्रमात् ॥ "× अन्नात्प्राणो मनः सत्यमिति" तल्लिंगतश्चरेत् ५५१
उक्तरीतिर्वाविशेषादन्नानंतर्यमत्र च ॥ पूर्वापर्यं श्रुतं चैवमन्नात्प्राणस्ततो मनः ॥ ५५२ ॥
मनसः सत्यतायास्तु श्रवणादिति वै स्थितिः ॥ न चोत्पत्तिश्च रूपेण विज्ञानमनसोस्तयोः ॥५५३॥
अनादिताया वाच्यत्वात्तचराचररूपिणः ॥ देहस्यान्नविकारत्वादन्नानंतर्यवर्णनात् ॥ ५५४ ॥
तथा % चराचरोत्पत्तिव्यपाश्रय उदीरितः ॥ विज्ञानमनसोर्जन्म भाक्तं तद्भावभावनात् ॥ ५५५ ॥
सत्यां देहसमुत्पत्तौ विज्ञानमनसोर्जनेः ॥ व्यपदेशात्ततश्चात्र स्वरूपेण तयोर्जनेः ॥ ५५६ ॥
विरहान्न च भूतानामुत्पत्तिक्रमभंजनं ॥

व्या०— "§ विपर्ययेण तु क्रमोऽत उपपद्यते च" । तस्मादीश्वर एव तेजआदौ कारणं न वाय्वादि । अत एव भूतानां विपर्ययेणोत्पत्तिक्रमः श्रूयते । अथर्वणे । "†* तथाऽक्षरात्संभवतीह विश्वं" इति सर्वस्य ब्रह्मजन्यत्वमुक्त्वा तेन क्रमेण जायत इत्याकांक्षायां "¶ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतं" । पूर्वार्थस्य विवर्णे "‡ यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति प्रथममीक्षणमंतरं वेददृष्टिः अन्नशब्दवा-

---

£‖ ब्र. सू.—१४ अ.—२ पा.—३. * छांदोग्योपनिषदि प्र.—६ खं.—२ मं.—३.
† तैत्तिरीयोपनिषदि वल्ली—२ अनु.—६ मं.—२. $ छांदोग्योपनिषदि प्र.—६ खं.—२ मं.—४.
£ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—७ मं.—१. ‖ छांदोग्योपनिषदि प्र.—१ खं.—९ मं.—१.
§ ब्र. सू.—१५ अ.—२ पा.—३. †* मुंडकोपनिषदि मुं.—१ खं.—१ मं.—७.
¶ मुंडकोपनिषदि मुं.—१ खं.—१ मं.—८।९. ‡ मुंडकोपनिषदि मुं.—१ खं.—१ मं.—९.
†† ब्र. सू.—१६ अ.—२ पा.—३. × मुंडकोपनिषदि मुं.—१ खं.—१ मं.—८. % ब्र. सू.—१७ अ.—२ पा.—३.

न्यपृथिव्युत्पत्तिः । अनंतरं सस्यशब्दवाच्यभूतान्तरोत्पत्तिरिति क्रमः प्रतीयते । तेनेरितं कर्म विवर्तते ह पृथिव्यप्तेजोऽनिलखानि चिंत्यंते तेनेश्वरेणेरितं प्रेरितं कर्म विवर्तते । विविधकार्यरूपेण वर्तते । तेन क्रमेणेति वीक्षायामाह । पृथ्व्याप्ययेश्चेत्यनयोश्च वाक्ययोः क्रमपरत्वं तेनैवोक्तं । "£ अन्नं हि भूतानां ज्येष्ठं" इति चोपपद्यते चायं क्रमः । न हि पृथिव्यनाश्रितस्य जलादेरवस्थानं संभवति । "ॐ तदेतदेतस्यामृच्यध्यूढं सामेति" सामशब्दलक्षितस्याग्नेः ऋक्शब्दो लक्ष्येत । पृथिव्याश्रितत्वाभिधानात् । "% पृथिवी विश्वस्य धारिणी" इति श्रुतेश्च । श्वेदाङ्कुरादौ भौतिके आतपत्रृष्ट्यादेर्नित्यत्वदर्शनात् । लोके वृष्टिमनुसृत्य छांदोग्ये सा जलादिका सृष्टिरुक्ता । "$ तस्माद्यत्र क्वाच वर्षति तदेव भूयिष्ठमन्नं भवति" इत्यादिश्रुतेः । केचित्तु यत्र ईश्वर एव सर्वत्र हेतुः । अत एव । "§ अन्नात्प्राण" इति विपरीतक्रमः । "इदं सर्वमसृजत" इत्यत्र क्रमोपदेशश्चोपपद्यत इत्यर्थ इत्याहुः । "‡ अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्" । ननूक्तक्रमो नोपपद्यते पृथिवीं जलं चान्तरा विज्ञानमनसी क्रमेणोत्पद्यते । तल्लिंगात् । "§ अन्नात्प्राणो मनः सत्यं" इति तत्र प्राणशब्द इन्द्रियमुच्यते जीवो वा । तथा विज्ञानशब्देनापि तथा च पृथिव्यनंतरं जलाद्युत्पत्तिरित्यनुपपन्नमिति चेन्न अविशेषात् । अत्र हि "§ अन्नात्प्राणो मन" इति । अन्नानंतर्यं सर्वेषां श्रुतं न तु पौर्वापर्यं श्रुतं । अन्नात्प्राणः प्राणान्मनो मनसः सत्यं श्रवणात् "¶ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" नेह विज्ञानमनसोः स्वरूपेणोत्पत्तिरुच्यते तयोरनादित्वस्य वक्ष्यमाणत्वात् । किं तु चराचरात्मकस्य शरीरस्यान्नविकारत्वेनान्नानंतर्यात् शरीरोत्पत्तिव्यपाश्रय एव विज्ञानमनसोरुत्पत्तिव्यपदेशो भाक्तः तद्भावभावित्वात् । शरीरोत्पत्तौ सत्यमेव विज्ञानमनसोरुत्पत्तिव्यपदेशात् । ततश्च स्वरूपेण तयोरुत्पत्त्यभावान्न भूतक्रमविरोधः ॥

सू०— किं जीवस्य समुत्पत्तिरुत नास्तीति संशयः ॥ ५५७ ॥
यथा वाऽग्नेर्विस्फुलिंगा व्युच्चरन्तीत्युपक्रमे ॥
सर्वे एते किलात्मानो व्युच्चरंतीति च श्रुतेः ॥ ५५८ ॥
उत्पद्यत इति प्राप्ते न जीवस्य समुद्भवः ॥
अनुक्तत्वात्प्रकरणे छांदोग्योपनिषद्गणैः ॥ ५५९ ॥
न जीवो म्रियते * नित्य इत्यादिश्रुतिदर्शनात् ॥
यथा वन्हेर्विस्फुलिंगा निर्गच्छन्ति तथैव च ॥ ५६० ॥
जीवानां निर्गमस्तस्मान्न विरोधोऽस्ति कश्चन ॥

व्या०— "* नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" । किं जीवस्योत्पत्तिरस्त्युत नेति संदेहः किं तावत्प्राप्तं "† यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति" इत्युपक्रमः । "† सर्वा एत आत्मनो व्युच्च-

---

£ तैत्तिरीयोपनिषदि वल्ली—२ अनु.—२ मं.—१. ॐ छांदोग्योपनिषदि प्र.—१ खं.—६ मं.—१.
% मुंडकोपनिषदि मु.—२ खं.—१ मं.—३. $ छांदोग्योपनिषदि प्र.—६ खं.—२ मं.—४.
§ मुंडकोपनिषदि मु.—१ खं.—१ मं.—८. ‡ ब्र. सू.—१६ अ.—२ पा.—३. ¶ ब्र. सू.—१७ अ.—२ पा.—३.
* ब्र. सू.—१८ अ.—२ पा.—३. † बृहदारण्यकोपनिषदि अ.—४ ब्रा.—१ मं.—२०.

रंति" इत्यादिश्रुतेरुत्पद्यत इति प्राप्ते ब्रूमः । नात्मा जीव उत्पद्यते कस्मादश्रुतेः । न ह्यस्य छांदोग्ये उत्पत्तिप्रकरणे उत्पत्तिराम्नाता अपि च ताभ्यः श्रुतिभ्यः नित्यत्वावगमाच्च । "@ न जीवो म्रियते" "% ज्ञाज्ञौ द्वावजावीशानीशौ" "§ नित्यो नित्यानां चेतनश्चेतनानां" इत्यादिश्रुतिभ्योऽजत्वनित्यत्वावगमात् । अग्निविस्फुलिंगश्रुतिश्च ततो निर्गमनपरो नोत्पत्तिपर इत्यविरोधः ज्ञात एव ॥

मू०— जीवस्वरूपः किं वाऽऽत्मा जातः किं वेति संशयः ॥५६१॥
विज्ञानघन इत्याद्यैः प्राप्ता ज्ञानस्वरूपता ॥
‡ ज्ञोऽत एवाधियो वेदेष्वजिघ्राणीति वाक्यतः ॥ ५६२ ॥
द्रष्टा श्रोता तथा मंता बोद्धेत्यादिश्रुतीरणात् ॥
गुणस्य गुणिनो भेदाभिप्रायोदाहृता श्रुतिः ॥ ५६३ ॥

व्या०--- "‡ ज्ञोऽत एव" किमात्मा ज्ञानस्वरूपः उत ज्ञातेति संदेहः किं तावत्प्राप्तं "£ विज्ञानघन एव" इत्यादिश्रुत्या ज्ञानस्वरूप इति प्राप्ते आह । ज्ञः ज्ञाता तस्मादत एव श्रुतेरेव "‖अथ यो वेदेदं जिघ्राणीति स आत्मा" एष हि द्रष्टा श्रोता मंता बोद्धा" इत्यादिश्रुतिभ्यो "£ विज्ञानघन" इति श्रुतिश्च गुणगुणिनोरभेदाभिप्राया ॥

मू०— किं जीवोऽणुपरीमाणो मध्यमो वा महान् किमु ॥
मध्यमं तु परीमाणं निरस्तं चार्हतक्रमे ॥ ५६४ ॥
"* उत्क्रान्तिगत्यागतीनां" श्रवणादणुरेव सः ॥
उत्क्रान्तिश्चावयवतो न विभोरुपपद्यते ॥ ५६५ ॥
लोकान्तरायगमनं पुनरागमनं तथा ॥
गत्यागती † स्वात्मनैव न भूतैः करणैर्वृतः ॥ ५६६ ॥
स वा एष महान् वाक्ये ¶ नाणुरात्मेति चेरणात् ॥
परयाऽऽत्माधिकारात्तच्छ्रुतेर्जीवोऽणुरेव हि ॥ ५६७ ॥
एषोऽणुरात्मा वाक्येन § तथोन्मानेन चाप्यणुः ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ॥ ५६८ ॥
भागो जीवः स विज्ञेयः स चानंत्याय कल्पते ॥
आराग्रमात्रो ह्यवरोऽपि दृष्ट इति वर्णनात् ॥ ५६९ ॥
नन्वणुत्वे तु जीवस्य सर्वदेहगता कथं ॥

---

@ छांदोग्योपनिषदि प्र.–६ खं.–११ मं.–३. % श्वेताश्वतरोपनिषदि अ.–१ मं.–९.
§ कठवल्ल्युपनिषदि वल्ली–५ मं.–१३. ‡ ब्र. सू.- १९ अ.–२ पा.–३. ‖ छांदोग्योपनिषदि प्र.–८ खं.–१२.–४.
£ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–४ मं.–१२ * ब्र. सू.–२० अ.–२ पा.–३.
† ब्र. सू.–२१ अ.–२ पा.–३. ¶ ब्र. सू.–२२ अ.–२ पा.–३. § ब्र.सू.–२३ अ.–२ पा.–३.

वेदानामुपलभ्येत तत्रेदं पठितं खलु ॥ ५७० ॥
"ö अविरोधश्चंदनवत्" चैतन्यगुणयोगतः ॥
£ अवस्थितेऽपि वैशेष्यादिति चेन्न तथा भवेत् ॥ ५७१ ॥
हृदये ह्यभ्युपगमान्न विरोधोऽस्ति कश्चन ॥

व्या०— "* उत्क्रान्तिगत्यागतीनां"। इदानीं किं परिमाणुः जीव इति चिंत्यते किमणुपरिमाणः आहोऽस्विन्महापरिमाण इति मध्यमपरिमाणत्वं त्वार्हतपरीक्षायामेव निरस्तं। तत्र सिद्धान्तेनोपक्रमते। "* उत्क्रान्तिगत्यागतीनां" श्रवणादणुर्जीव इति। न हि विभोर्देहावयवेभ्य उत्क्रमणं लोकान्तरगमनं पुनरागमनं च संभवति। गत्यागतयश्च श्रूयन्ते। "¶ स यदास्माच्छरीरादुत्क्रामति" इति। "% ये वै के चास्माल्लोकात्प्रयन्ति चंद्रमसमेव ते सर्वे गच्छन्ति "§ तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण" इति "‖ स्वात्मना चोत्तरयोः"। न केवलं भूतैः करणग्रामैश्च परिष्वक्तस्य गत्यागती। किंतु तदसंपृक्तस्य शरीर एव स्वात्मन इव गत्यागती श्रूयेते। "§* स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" "§† शुक्रमादाय पुनरेति स्थानं" इति च। तस्मादप्यणुर्जीवः "$ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" नाणुरयमात्मा तस्मादतच्छ्रुतेरणुत्वविपरीतमहत्वश्रुतेः श्रवणात्। "‡ स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" इति पूर्वः पक्षः। निराकरोति तस्मादितराधिकारात् पर एव ह्यात्मेहाधिक्रियते। विरजः परः आकाशादिति न तु जीवः। "£‖ स्वशब्दोन्मानाभ्यां च" इतश्चाणुर्जीवः यतः साक्षादेवाणुवाचिशब्दः श्रूयते। "‖% एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन्प्राणाः पंचधा संविवेश" इति। प्राणसंबंधाच्चायं जीव इति गम्यते। तथोन्मानमपि जीवस्याणुत्वं गमयति। "+ वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानंत्याय कल्प्यते" "¶£ आराग्रमात्रो ह्यवरोऽपि दृष्ट" इति। नन्वणुत्वे सत्येकदेशस्थस्य कथं सकलदेहगतवेदनाद्युपलब्धिः। अत उत्तरं पठति। "ö अविरोधश्चंदनवत्" यथा हरिचंदनबिंदुः शरीरैकदेशस्थोऽपि सकलदेहव्यापि कार्यं करोति। तद्वदणोर्जीवस्य चैतन्यगुणव्याप्त्या कृत्स्नदेहव्यापिनमाल्हादं करोति। "£ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि"। अत्राह युक्तं चंदनबिंदोरेकदेशस्थोऽपि देहव्याप्याल्हादकरत्वं एकदेशस्थितेः प्रत्यक्षत्वादिह त्वात्मन एकदेशस्थत्वं न प्रत्यक्षं। किंतु व्यापिकार्यप्रत्यक्षं। ततश्च कार्यानुरोधाद्व्यापित्वमेव किं न स्यादिति चेन्न। कस्मादभ्युपगमात् अभ्युपगम्यते ह्यात्मनो व्यवस्थितिवैशेष्यमेकदेशस्थत्वं कथमिति तदाह हृदि हीति हृदि

---

ö ब्र. सू.–२४ अ.–२ पा.–३. £ ब्र. सू.–२५ अ.–२ पा.–३ * ब्र. सू.–१० अ.–२ पा.–३.
¶ कौषीतक्युपनिषदि अ.–३ मं.–४. % कौषीतक्युपनिषदि अ.–१ मं.–२.
§ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–६. ‖ ब्र. सू.–२१ अ.–२ पा.–३.
§* बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–१. §† बृहदारण्यकोपनिषदि अ.–६ ब्रा.–३ मं.–११.
$ ब्र. सू.–२२ अ.–२ पा.–३. ‡ बृहदारण्यकोपनिषदि अ.–६ ब्रा.–४ मं.–२२.
£‖ ब्र. सू.–२३ अ.–२ पा.–३. ‖% मुंडकोपनिषदि मुं.–३ खं.–१ मं.–९.
+ श्वेताश्वतरोपनिषदि अ.–५ मं.–९. ¶£ श्वेताश्वतरोपनिषदि अ.–५ मं.–८. ö ब्र. सू.–२४ अ.–२ पा.–३.

ह्यात्मा पठ्यते वेदान्तेषु । "@हृदि ह्येष आत्मा" "¶स वा एष आत्मा हृदि" "‡ योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः" इत्यादिषु । तस्माद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यायुक्तमविरोधश्चंदनवदिति ॥

सू०— *गुणाद्वाऽऽलोकवच्चात्र चैतन्यगुणयोगतः ॥ ५७२ ॥
मणिप्रदीपकादीनां प्रभा व्याप्ता यथाऽखिलं ॥ चैतन्यव्याप्तितः कृत्स्नदेहव्यापित्वसंगतिः ॥५७३॥
कथं गुणस्तु गुणिनमंतरा वर्तते यथा ॥ न पटव्यतिरेकेण शुक्लो वर्तेत वै गुणः ॥ ५७४ ॥
प्रभादीपगुणेनेयं तेजोऽन्यद्विरलांगकम् ॥ ‡व्यतिरेको गंधवत्तु चाघ्रातकुसुमादिषु ॥ ५७५ ॥
चैतन्यस्य गुणस्यात्र व्यतिरेकस्तथाप्यणोः ॥ ननु गंधस्याश्रयेण सह विश्लेष एव चेत् ॥ ५७६ ॥
अपक्षयः प्रसज्येत तदा तु कुसुमादिषु ॥ हीयेत च गुरुत्वाद्यैस्तन्नैव परि दृश्यते ॥ ५७७ ॥
न चाल्पत्वाद्विशिष्टानां विशेषो नोपलभ्यते ॥ स्फुटं गंधोपलब्धिः स्यात्तर्हि लोके प्रतीयताम् ५७८
गंधद्रव्यं यदा घ्रातमिति गंधो मयेति न ॥ तथा ह्याद्यं तथा ज्ञानं गुणानां व्यतिरेकता ॥ ५७९ ॥
तथा च दर्शयत्येवमालोमभ्य इति श्रुतिः ॥ चैतन्यस्य गुणत्वं न तस्यैवात्मस्वरूपतः ॥ ५८० ॥
चैतन्यस्यात्र व्याप्तित्वे जीवव्याप्तित्वमत्र चेत् ॥ †पृथक्तयोपदेशाच्च प्रज्ञयेत्यादिवाक्यतः ॥५८१॥
ननु ज्ञानगुणत्वस्य विज्ञानमिति वाक्यतः ॥ विज्ञानशब्दवाच्यत्वमिति $तद्गुणसारतः ॥५८२॥
विज्ञानव्यपदेशः स्यात्प्राज्ञवल्लवणाब्धिवत् ॥ £तद्यावदात्मभावित्वाच्चादोषस्तस्य दर्शनात् ॥५८३॥
गोत्ववाचकगोशब्दात्तद्गोव्यक्ति ( दतद्गोव्यक्ति ) वर्णनात् ॥
ज्ञानाभावात्सुषुप्त्यादौ यावदात्मत्वमत्र न ॥ ५८४ ॥
×सतः पुंस्त्वादिवत्त्वस्याभिव्यक्तिरुपपद्यते ॥ विद्यमानं यथा पुंस्त्वं बाल्यादौ कारणात्मना ५८५
यौवने चाविर्भवेत्तत्सुषुप्तौ करणात्मना ॥ जाग्रदादावभिव्यक्तमतो दोषो न कश्चन ॥ ५८६ ॥
ज्ञातृत्वं च तथाऽणुत्वं सम्यगेव प्रसाधितं ( प्रसादितं ) ॥
विपक्षे ज्ञप्तिरूपत्वे ( सुषुप्तेर्ज्ञप्तिरूपत्वे ) विभुत्वे बाध उच्यते ॥ ५८७ ॥
‖नित्योपलब्धिरथ वाऽनुपलब्धिः प्रसज्यते ॥
नियमोऽन्यतरस्याथ प्रसज्येतान्यथा पुनः ॥ ५८८ ॥

व्या०— "*गुणाद्वाऽऽलोकवत्"। चैतन्यगुणव्याप्तेरणोरपि जीवस्य सकलदेहव्यापिकार्यं न विरुध्यते । यथालोके मणिप्रदीपादीनामपरैकैकदेशवर्तिनामपि प्रभापवरकव्यापिनि सति कृत्स्नेऽपवरके

---

@ प्रश्नोत्तरोपनिषदि प्र.—३ मं.—६. ¶ छांदोग्योपनिषदि प्र.—८ खं.—३ मं.—३.
‡ बृहदारण्यकोपनिषदि अ.—६ ब्रा.—३ मं.—७. * ब्र. सू.—२६ अ.—२ पा.—३.
‡ ब्र. सू—२७ अ.—२ पा.—३. † ब्र. सू.—२८ अ.—२ पा.—३. $ ब्र. सू.—२९ अ.—२ पा.—३.
£ ब्र. सू.—३० अ.—२ पा.—३. × ब्र. सू.—३१ अ.—२ पा.—३. ‖ ब्र. सू.—३२ अ.—२ पा.—३.

कार्यं करोति । तद्वच्चैतन्यगुणव्याप्त्या कृत्स्नदेहव्यापि कार्यं न विरुध्यते । कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेते । न हि घटस्य शुक्लो गुणः वटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । प्रभा तु न दीपगुणः । किंतु विरलावयवं तेजोंतरमेवेत्याशंक्याह । "‡ व्यतिरेको गंधवत् तथाहि दर्शयति" यथा गुणस्यापि सतो गंधस्य गंधद्रव्यव्यतिरेकेण वृत्तिर्भवति । अप्राप्तेष्वपि कुसुमादिषु गंधोपलब्धिः । एवमणोरपि जीवस्य चैतन्यव्यतिरेको भविष्यति । ननु गंधस्यापि सहैवाश्रयेण विश्लेष इति चेन्न । यस्माद्यस्माद्विश्लेषस्तस्यापचयप्रसंगात् ततश्च तत्पूर्वावस्थितैर्गुरुत्वादिभिर्हीयेत । न च विशिष्टानामल्पत्वात् विशेषो नोपलभ्यत इति तर्हि स्फुटगंधोपलब्धिः स्यात् न च लोके प्रतीतिर्गंधद्रव्यमाघ्रातुमिति लौकिकाः प्रतीयन्ते । तस्मादनुभवगुणमात्रव्यतिरेकोऽभ्युपगंतव्यः । तथा दर्शयति हृदयायतनत्वमणुत्वं चात्मनोऽभिधाय तस्यैव "† आलोमभ्य आनखेभ्य" इति चैतन्यगुणेन समस्तशरीरव्यापिकां दर्शयति श्रुतिः । ननु चैतन्यस्य गुणत्वमसिद्धं । तस्यैवात्मस्वरूपत्वात् । तथा च चैतन्यस्य व्यापित्वे आत्मनो व्यापित्वमित्यत आह । "§ पृथगुपदेशात्" । "* प्रज्ञया शरीरं समारुह्य" इत्यात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् गुणेनैवास्य शरीरव्यापिकाऽवगम्यते । "@ तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति च कर्तुर्जीवात् पृथग्विज्ञानस्योपदेशः । एकमेवाभिप्रायमुपोद्बलयति । ननु ज्ञानगुणत्वे कथमात्मनि विज्ञानशब्दप्रयोगः । "% विज्ञानं यज्ञं तनुते" इत्यादौ तत्राह । "‡* तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" । तच्छब्देन सन्निहितवाचिनाऽनंतरोक्तं ज्ञानं गृह्यते । नान्यत्तस्यासन्निहितत्वात् । स चासौ गुणश्च तद्गुणः न तु षष्ठीसमासः लक्षणप्रसंगात् । गुणग्रहणं स्वरूपत्वशंकानिवृत्त्यर्थं । तद्गुणः सारो यस्य स तद्गुणसारः तस्य भावस्तत्त्वं तस्मात्तद्व्यपदेशस्तेनैव ज्ञानेन व्यपदेशः । यथा लावणः सारः सैंधवखिल्यो लवणमित्युच्यते तद्वत्प्राज्ञवत् । यथा प्राज्ञस्येश्वरस्य सर्वज्ञस्य तद्गुणसारत्वेन तद्व्यपदेशः । "‖* प्रज्ञानं ब्रह्म" इत्यादौ तद्वत् हेत्वंतरमाह । "‡% यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" ज्ञानगुणस्य यावदात्मभावित्वाच्चात्मनो ज्ञानशब्देन व्यपदेशो युक्तः । यथा गोत्ववाचकेन गोशब्देन तनिते गोव्यक्तेर्व्यपदेशदर्शनात् । ननु सुषुप्त्यादौ ज्ञानाभावाद्यावदात्मभावित्वमयुक्तं तत्राह । "£ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" । यथा हि पुंस्त्वं बाल्यादौ कारणात्मना विद्यमानं यौवने आविर्भवति । एवं सुषुप्त्यादौ कारणात्मना विद्यमानं ज्ञानं जाग्रदादावभिव्यज्यते । अतस्तदुत्पत्तियोगादतो न दोषः । एवमात्मनो ज्ञातृत्वमणुत्वं च प्रसाध्य विपक्षे ज्ञप्तिरूपत्वे विभुत्वे च बाधकमाह । "+ नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा" । यद्यात्मा सर्वगतो ज्ञप्तिरूपश्च किं तत्संबंधो विषयोपलब्ध्यनुपलब्ध्योः प्रयोजकः उतान्यतरस्याह । आद्ये सर्वस्य वस्तुनो सर्वदा सर्वगतेनात्मप्रकाशेन संबंधात्सर्वदा उपलब्ध्यनुपलब्धी प्रसज्येयाताम् । द्वितीये यद्यप्युपलब्धेरेव तदा सर्वस्य सर्वदा उपलब्धिरेव स्यात् न कस्य चिदप्यनुपलब्धिः । यद्यप्यनुपलब्धेः प्रयोजकः तदा सर्वदा अनुप-

---

‡ ब्र. सू.—२७ अ.—२ पा.—३. † छांदोग्योपनिषदि प्र.—८ खं—८ मं.—१.
§ ब्र. सू.—२८ अ.—२ पा.—३. * कौषीतक्युपनिषदि अ.—३ मं.—६.
@ बृहदारण्यकोपनिषदि अ.—४ ब्रा.—१ मं.—१७. % तैत्तिरीयोपनिषदि वल्ली—२ अनु.—५ मं.—१.
‡* ब्र. सू.—२९ अ.—२ पा.—३. ‖* ऐतरेयारण्यके आर.—२ अ.—६ खं.—१.
‡% ब्र. सू.—३० अ.—२ पा.—३. £ ब्र. सू.—३१ अ.—२ पा.—३. + ब्र. सू.—३२ अ.—२ पा.—३

पत्तिरेव स्यात् । न कस्यचिदप्युपलब्धिस्तस्मात्कस्याचित्कदाचिदुपलब्धिः कस्यचित्कदाचिदनुपलब्धिः इति व्यवस्थयैव जीवस्याणुत्वं ज्ञातृत्वं चास्थेयं ॥

मू०— जीवः कर्ताऽथ वा नेति संशये च समागते ॥
सांख्यास्तावद्वर्णयन्ति जीवः कर्ता न चेति ते ॥ ५८९ ॥
तस्यानादे(धे)यातिशयतया विरहतः कृतेः ॥ असंगो ह्ययमित्याद्यैरसंगत्वोपवर्णनात् ॥ ५९० ॥
तस्मिन्निमित्तसंयोगाभावाचेति समीरितम् ॥ बुद्धेरेव तु कर्तृत्वमिति प्राप्तेऽथ चोच्यते ॥ ५९१ ॥
§ शास्त्रार्थवत्त्वात्कर्ता स यजेत जुहुयादिति ॥ शास्त्रैर्जीवस्य कर्तृत्वं सम्यगेव प्रतीयते ॥ ५९२ ॥
अन्यथाऽनर्थकं शास्त्रं स्यादेवं प्रतिपादिते ॥ न चानादे(धे)यातिशयतया भावः कृतेरिति ॥५९३॥
सुखाद्यतिशयेनात्र प्रत्यक्षेणोपलंभनात् ॥ अनादे(धे)यातिशयत्वस्यासिद्धेरितीरितम् ॥ ५९४ ॥
नैवं निमित्तसंयोगविरहः पठ्यतां त्वया ॥ आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ५९५ ॥
सम्यङ्निमित्तसंयोगः श्रुत्येति प्रतिपादितः ॥ असंगत्वश्रुतिश्चेयमस्य जीवस्य जाग्रती ॥ ५९६ ॥
स्वप्नदृष्टेन संबाधाभावदर्शनतस्त्वियं ॥ नित्यसंयोगविरहाभिप्रायेण समीरिता ॥ ५९७ ॥
‡ तद्विहारोपदेशाच्च करणोपरतौ तथा ॥ उपादानाच्च कर्तृत्वं * क्रियायां व्यपदेशतः ॥ ५९८ ॥
विज्ञानं यज्ञमित्याद्यैर्ननु विज्ञानशब्दतः ॥ बुद्धिः समीहिता तेन कथं जीवस्य कर्तृता ॥ ५९९ ॥
सूच्यतेति च नेत्युक्तं निर्देशो जीवरूपिणः ॥ न बुद्धेर्जीवनिर्देशः स्यान्निर्देशविपर्ययः ॥ ६०० ॥
विज्ञानेनेत्येवमेव निरदिक्षत्तदा श्रुतिः ॥ क्रियाया $ अप्यनियमः प्रसज्येतोपलब्धिवत् ॥ ६०१ ॥
यदि बुद्धिर्हि कर्त्री स्यात्तदा † शक्तिविपर्ययः ॥ आप्नुयात्कर्तृशक्तिं च त्यजेत्कारणशक्तिकां ॥६०२
आत्मनः कर्तृताभावे £ समाधिविरहो भवेत् ॥ प्रकृतेः पुरुषस्यापि विवेकज्ञानतस्तदा ॥ ६०३ ॥
बुद्धेरेवं च कर्तृत्वाभावादिति समीरितं ॥

व्या०— "§ कर्ता शास्त्रार्थवत्त्वात्" किं जीवः कर्ता उत नेति संशयः । तत्र सांख्या मन्यन्ते जीवो न कर्ता तस्यानादेयातिशयत्वेन तत्र कृतेरभावात् । "@ असंगो ह्ययं पुरुष" इति श्रुत्या असंगत्वावगमेन तत्र निमित्तसंयोगस्याभावाच्च । किंतु बुद्धिरेव कर्त्रीति प्राप्ते आह । कर्ता शास्त्रार्थवत्त्वादिति । कर्ता चायं जीवो भवितुमर्हति कुतः शास्त्रार्थवत्त्वात् । यजेत जुहुयाद्द्यादित्यादिभिः शास्त्रैर्जीवः कर्ता प्रतीयते । अन्यथा तदनर्थकं स्यात् । न चानादेयातिशयत्वात् कृत्यभावः सुखदुःखाद्यतिशयस्य प्रत्यक्षसिद्धत्वेनादेयातिशत्वासिद्धेः । न च निमित्तसंयोगाभावः । "‖ आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति निमित्तसंयोगस्य श्रुत्या प्रतिपादनात् । असंगत्वश्रुतिस्तु जीवस्य जाग्रती स्वप्नदृष्टेन संबंधाभावदर्शनेन नित्यसंयोगाभावाभिप्राया । "@ स यत्तत्र किंचित्पश्यत्यनन्वा-

§ ब्र. सू.-३३ अ.-२ पा.-३. ‡ ब्र. सू.-३४ अ.-२ पा.-३. * ब्र. सू.-३५ अ.-२ पा.-३. $ ब्र. सू.-३६ अ.-२ पा.-३. † ब्र. सू.-३७ अ.-२ पा.-३. £ ब्र. सू.-३८ अ.-२ पा.-३. @ बृहदारण्यकोपनिषदि अ.-६ ब्रा.-३ मं.-१५. ‖ कठवल्ल्युपनिषदि वल्ली.-३ मं.-४.

गतस्तेन भवत्यसंगो ह्ययं पुरुषः" इत्यनेन तथाऽवगमात् । तावन्मात्रस्यैव मोक्षे सकलदुःखाभावसंभावनोपयोगाच्च । "÷ उपादानाद्विहारोपदेशाच्च" इतश्च केवलस्य जीवस्य कर्तृत्वं । यज्जीवप्रकरणे उपरतेषु करणेषु विहारमुपदिशति "संरयते अमृतो यत्र कामं । "§ स्वशरीरे यथाकामं परिवर्तते" इति च उपादानात् । इतश्चास्य केवलस्य कर्तृत्वं यज्जीवप्रक्रियायां करणानामुपादानं संकीर्तयति । "£ तदैषां प्राणानां विज्ञानेन विज्ञानमादाय" इति प्राणान्न हि केति च कारणेषु कर्मकरणविभक्तिनिर्देशात् । "× व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः" । इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकेषु वैदिकेषु च कर्मसु कर्तृत्वं व्यपदिशति "@ विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति । ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यतेति नेत्युच्यते । जीवस्यैव एष निर्देशः न बुद्धेर्न चेज्जीवस्यानिर्देशविपर्ययः स्यात् । विज्ञानेनेत्येवं निरदिक्षत् । तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्देन करणविभक्तिनिर्देशो दृश्यते । "£ तदैषां प्राणानां विज्ञानेन विज्ञानमादाय" इति इह च "@ विज्ञानं यज्ञं तनुते" इति कर्तृसामानाधिकरण्यनिर्देशात् बुद्धिव्यतिरिक्तस्यात्मनः कर्तृत्वं सूच्यते । "‡¶ उपलब्धिवदनियमः" यदि जीवो न कर्ता किंतु बुद्धिरेव तदा उपलब्धिवत् क्रियाया अप्यनियमः प्रसज्येत । जीवस्य कर्तृत्वे हि तस्य चेतनत्वात् स्वेच्छया कदाचित्करोति कदाचिन्न करोतीति युज्यते । बुद्धेः कर्तृत्वं कुतः स्यात् अचेतनत्वात् सर्वदा क्रिया अक्रिया वा स्यात् नतु कदाचित्क्रिया कदाचिदक्रियेति । "†% शक्तिविपर्ययात्" यदि हि बुद्धिः कर्त्री स्यात्तदा शक्तिविपर्ययः स्यात् । बुद्धेः करणशक्तिर्हीयेत कर्तृशक्तिश्चापद्येत । प्रकृतिपुरुषविवेकविज्ञानेन बुद्धेः कर्तृत्वासंभवात् ॥

मू०— ** यथा च तक्षोभयथा ‖ परादेव तु कर्तृता ॥ ६०४ ॥
एष ह्येवेत्यादिवाक्यैस्तस्य प्रेरकता श्रुता ॥ नन्वीश्वरप्रेर्यता चेन्न स्याज्जीवस्य कर्तृता ॥ ६०५ ॥
बलवत्सलिलौघेन न्हीयमाणेव कर्तृता ॥ ‖÷ कृतप्रयत्नसापेक्षे विहितप्रतिषद्धयोः ॥ ६०६ ॥
यजेतेति न हन्तव्य इत्येवं समुपात्तयोः ॥ अवैय्यर्थ्यादिभ्य इति शास्त्रं व्यर्थं तदन्यथा ॥ ६०७ ॥
यथा वन्हेर्विस्फुलिंग † ईशांशो जीव ईरितः ॥ "¶ सोऽन्वेष्टव्यादिवाक्येन" नानात्वव्यपदेशतः ६०८
अन्यथा चापि वेदेषु चात्यंताभेद उच्यते ॥ ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा इति ॥ ६०९ ॥
हीनजात्युक्तितः सर्वं ब्रह्मेति समुदीरितं ॥
"* पादोऽस्य विश्वाभूतानीत्येवं" ब्रह्मांश $ वर्णनात् ॥ ६१० ॥

÷ ब्र. सू.–३४ अ.–२ पा.–३. § बृहदारण्यकोपनिषदि अ.–४ ब्रा.–१ मं.–१८.
£ बृहदारण्यकोपनिषदि अ.–४ ब्रा.–१ मं.–१७. × ब्र. सू.–३५ अ.–२ पा.–३.
@ तैत्तिरीयोपनिषदि वल्ली.–२ अनु.–५ मं.–१. ‡¶ ब्र. सू.–३६ अ.–२ पा.–३.
†% ब्र. सू.–३७ अ.–२ पा.–३. ** ब्र. सू.–३९ अ.–२ पा.–३. ‖ ब्र. सू.–४० अ.–२ पा.–३.
‖÷ ब्र. सू.–४१ अ.–२ पा.–३. † ब्र. सू.–४२ अ.–२ पा.–३.
¶ छांदोग्योपनिषदि प्र.–८ खं.–७ मं.–१ * यजुर्वेदे पुरुषसूक्ते मं.–३. $ ब्र. सू.–४३ अ.–२ पा.–३.

ममैवांशो जीवलोके जीवभूतः सनातनः ॥ इत्यादि * स्मृतिभिर्जीव ईश्वरांश उदाहृतः ॥ ६११ ॥
नन्वीश्वरस्य जीवानामभेदे स्वीकृते सति ॥ जीवदुःखेन दुःखी स्यादभेदान्न तयोर्न च ॥ ६१२ ॥
§ परप्रकाशादिवत्तु स्वस्वरूपाविशेषतः ॥ £ स्मरंति च व्यासमुख्या जीवदुःखान्न चेश्वरः ॥६१३॥
दुःखीति स्मृतिषु स्वैरमुत्तरेण स्फुटोऽर्थतः ॥ तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ६१४
न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥ कर्मात्मा त्वपरो योऽसौ मोक्षबंधैः स युज्यते॥ ६१५ ॥
"$ तयोरन्यः पिप्पलं स्वाद्वत्तीत्याद्यैश्च" तत्स्फुटं ॥ ‖अनुज्ञापरिहारौ द्वौ यजेतेति न भक्षयेत् ६१६
देहसंबंधतो ज्योतिरादिवद्देशभेदतः ॥ ननु देहोत्तरं भाविफलसांकर्यमित्यतः ॥ ६१७ ॥
‡ नासंततेश्च सांकर्यं तथा विधिनिषेधयोः ॥ तेषां बहव आत्मानो भिन्नाः सर्वगताः पुनः ॥६१८॥
तेषां सर्वात्मना सर्वदेहयोगाविशेषतः ॥ सुखदुःखादिसांकर्यादात्मा %% ऽऽभासास्त एव हि॥६१९॥
सर्वेषां देहसंबंधाविशेषेऽपि तथा पुनः ॥ ¶ तथाऽदृष्टविशेषाच्च ततः कस्य चिदेव हि ॥ ६२० ॥
सुखादियोगो नान्येषामदृष्टविरहादतः ॥ न सांकर्यमतः प्राह चादृष्टनियमादिति ॥ ६२१ ॥
× अभिसंध्यादिकानां च प्रधानगतता यदि ॥ साधारण्यं पूर्ववत्स्यादात्मगत्वेऽपि वै पुनः ॥६२२॥
मनःसंयोगाविशेषात्साधारण्यं तु केवलं ॥ विभुत्वेऽप्यात्मनः स्वस्वदेहावच्छिन्नदेशके ॥ ६२३ ॥
सुखादिकं संभवति न सांकर्यमतः परं ॥ ** प्रदेशादिति चेन्नांतर्भावाज्जीवास्तदंशकाः ॥ ६२४ ॥
जीवेशयोस्तु सामान्याभेद एव समीहितः ॥
तयोः स्वाभाविको व्यक्तिभेदः सर्वसमीहितः ॥ ६२५ ॥

व्या०— "† यथा च तक्षोभयथा" बुद्धेः कर्तृत्वे क्रियाया अनियम उक्तः । जीवस्य कर्तृत्वे नानियम इत्याह । यथा तक्षा सत्यामिच्छायां करोति नान्यथा एवं जीवोऽपीच्छायां कुर्यान्न कुर्याद्वा न नियमः । "% परात्तु तच्छ्रुतेः" यदिदं जीवस्य कर्तृत्वमुक्तं तत्किमनपेक्ष्येश्वरं भवति आहोस्विदीश्वरापेक्षमिति संशयः किं तावत्प्राप्तं नेश्वरमपेक्षते जीवः कर्तृत्वमिति कस्मादपेक्षा प्रयोजनाभावादयं हि जीवः स्वयमेव रागद्वेषादिप्रयुक्तः सामग्रीसंपन्नः कर्तुं शक्नोत्येव । किंतु नेश्वरः करिष्यति एवं प्राप्ते आह । परात्त्विति । तुशब्दः पक्षं व्यावर्तयति । तज्जीवस्य कर्तृत्वं परादीश्वराद्भवितुमर्हेति । कुतः तच्छ्रुतेः "@ एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्यो उन्मनीषते एष उ एवैनमसाधु कर्म कारयति तं यमवधो निनीषत" इति । "य आत्मानमंतरो यमयति" इति च इत्येवं जातीयकः श्रुतिः सर्वास्वेव प्रवृत्तिषु ईश्वरस्य हेतुकर्तृतां दर्शयति । नन्वीश्वरस्य प्रेर्यत्वे जीवस्य कर्तृत्वमेव न स्यात् । नहि बलवता सलिलौघेन न्हियमाणः कर्ता भवत्यत आह । "‡§ कृत-

* ब्र. सू.–४४ अ.–२ पा.–३. § ब्र. सू.–४५ अ.–२ पा.–३. £ ब्र. सू.–४६ अ.–२ पा.–३.
$ श्वेताश्वतरोपनिषदि अ.–४ मं.–६. ‖ ब्र. सू.–४७ अ.–२ पा.–३. ‡ ब्र. सू.–४८ अ.–२ पा.–३.
%% ब्र. सू.–४९ अ.–२ पा.–३. ¶ ब्र. सू.–५० अ.–२ पा.–३. × ब्र. सू.–५१ अ.–२ पा.–३.
** ब्र. सू.–५२ अ.–२ पा. ३. † ब्र. सू.–३९ अ.–२ पा.–३. % ब्र. सू.–४० अ.–२ पा.–३
@ कौषीतक्युपनिषदि अ.–३ मं.–९. ‡§ ब्र. सू.–४१ अ.–२ पा.–३.

प्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैय्यर्थ्यादिभ्यः" न हीश्वरः सलिलौघादिवदनिच्छन्तं बलान्नयति किं तर्हि रागद्वेषादिवशेन प्रवर्तमानमनुजानन् प्रवर्तयति । तथा च न जीवस्य कर्तृत्वं व्याहन्यते कथं गम्यते कृतप्रयत्नापेक्षः ईश्वर इति । विहितप्रतिषिद्धावैय्यर्थ्यादिभ्य इत्याह । एवं यजतेत्यादिविधीनां न हंतव्य इत्यादिप्रतिषेधानां च अवैय्यर्थ्यं भवति । इतरथा हि जीवेच्छामननुरुध्य बलादीश्वरस्य प्रवर्तकत्वे विधिनिषेधयोरानर्थक्यमेव स्यात् । अत्यंतपरतंत्रत्वाज्जीवस्य तथाहितकारिणमप्यनर्थेन संसृजेत् निषिद्धकारिणमप्यनर्थेन ततश्च प्रामाण्यं वेदस्यास्तमियात् ईश्वरस्यात्यंतानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैय्यर्थ्यं तदा देशकालनिमित्तानामित्येवमादिदोषतमादिशब्देन सूचयति । "* अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" किं जीव ईश्वरादत्यंतं भिन्नः किं वा तदंशः इति संशयः । किं तावत्प्राप्तं अत्यंतं भिन्नः । कुतः स्वामिभृत्ययोरिव प्रवर्त्यप्रवर्तकभावाभ्युपगमात् । एवं प्राप्ते ब्रूमः । अंश इति । जीवः ईश्वरांशः अग्नेरिव स्फुलिंगाः । ननु किमित्यंशः स एव कस्मान्न भवति । नानाव्यपदेशादिति । "% सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिभेदनिर्देशात् । ननु नानाव्यपदेशः सुतरामत्यंतभेदे घटते तत्राह । अन्यथाचापीति व्यपदेशादिति संबध्यते न केवलं भेदव्यपदेशः । येनात्यंतभिन्नत्वं स्यात्किं त्वभेदव्यपदेशोऽपि तस्मादंशः अभेदव्यपदेशमाह दाशकितवादित्वमधीयत एक इति । "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा" इति हीनजात्युदाहरणेन सर्वेषां ब्रह्मभावमाह इतश्चावंशत्वावगमः । "ꣳ मंत्रवर्णात्" मंत्रवर्णश्च एतमर्थं गमयति "$ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति" भूतशब्देन जीवप्रधानानि स्थावरजंगमानि निर्दिशति "अहिंसन्सर्वभूतानीति" प्रयोगादंशः पादो भाग इत्यर्थान्तरं "¶ अपि च स्मर्यते" ईश्वरगीतास्वपि ईशरांशत्वं जीवस्य स्मर्यते । "§ ममैवांशो जीवलोके जीवभूतः सनातन" इति । तस्मादप्यंशत्वसिद्धिः । ननु जीवानामीश्वरस्य चाभेदाभ्युपगमे ईश्वरः किं जीवदुःखेन न दुःखी स्यात् तदभेदात्तत्राह । "£ प्रकाशादिवत्तु नैवंपरः" यथा प्रकाशादेर्गुणस्य गुणिनो जीवस्य चाभेदेऽपि भेदस्यापि विद्यमानत्वात् स्वरूपविशेषाच्च । न प्रकाशादेर्दुःखित्वमेवमीश्वरस्यापि जीवाभेदेऽपि भेदाभ्युपगमात् स्वरूपविशेषाच्च । न दुःखित्वमिति तुल्यं स्मरन्तीति । "‡ स्मरन्ति च" व्यासादयो जीवदुःखेनेश्वरो न दुःखीति "तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा । कर्मात्मा त्वपरो योऽसौ मोक्षबंधैः स युज्यते" । चशब्दात्समामनन्ति च "‖ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" "† एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन वाह्यः इति । ननु मा भूदीश्वरस्य स्वरूपविशेषाद्दुःखादिसंबंधः । जीवानामपि ब्रह्माभेदेनाभेदाभ्युपगमात् सुखदुःखादिसांकर्यं स्यात् । तथा च विधिनिषेधसांकर्यं च स्यात्तत्राह । "+ अनुज्ञापरिहारौ देहसंबंधात् ज्योतिरादिवत्" । "ब्राह्मणो यजेत" "ब्राह्मणो न हंतव्य" इत्येवं रूपौ विधिनिषेधौ देहसंबंधनिबंधनत्वादात्मभेदेऽपि देहभेदादसंकीर्णौ भवतः । अन्यथा आत्मभेदेऽपि

---

* ब्र. सू.–४२ अ.–२ पा.–३. % छांदोग्योपनिषदि प्र.–८ खं.–७ मं.–१.
ꣳ ब्र. सू.–४३ अ.–२ पा.–३. $ तैत्तिरीयारण्यके प्र.–३ अनु.–१२ मं.–३.
¶ ब्र. सू.–४४ अ.–२ पा.–३. § भगवद्गीतायां अ.–१५ श्लो.–७. £ ब्र. सू.–४५ अ.–२ पा.–३.
‡ ब्र. सू.–४६ अ.–२ पा.–३. ‖ मुंडकोपनिषदि मुं.–३ खं.–१ मं.–१.
† कठवल्ल्युपनिषदि वल्ली–५ मं.–११. + ब्र. सू.–४७ अ.–२ पा.–३.

एकस्यात्मनो जन्मभेदेन ब्राह्मणशूद्रशरीरग्रहणे विधिनिषेधसांकर्यापत्तेः । ज्योतिरादिवत् । यथा ज्योतिषा एकत्वेऽपि अवेध्यदेशसंबंधः परिन्हियते नेतरः शुचिभूमिष्ठः तथा मूत्रं पुरीषं च गवां पवित्रतया गृह्यते तदेव जात्यंतरे वर्ज्यते तद्वदेवमपि देहनाशोत्तरभाविफलसांकर्यं दुर्वारमित्यत आह । "§ असंततेश्चाव्यतिकरः" यद्येकैव जीवव्यक्तिः सर्वदेहेषु वर्तेत तथा भवेत्सांकर्यं। न च तथाभ्युपगम्यते प्रतिदेहशरीरजीवव्यक्तयो भिन्ना अण्व्यश्च सामान्यात्मना परमपरमभेदः । ततश्च जीवानामणुत्वेन सर्वदेहसंबंधाभावात् न विधिनिषेधसांकर्यं नापि फलसांकर्यं परिहृत्य परपक्षे दोषमाह । "$ आभास एव च" । एषां बहव आत्मानोऽत्यंतं भिन्नाः सर्वगताश्च तेषां सर्वात्मना सर्वदेहसंबंधाविशेषात्सुखदुःखादिसांकर्यस्यापरिहार्यत्वात् । ते आत्मनः आभासा एव न सम्यगात्मनः । ननु सर्वेषां देहसंबंधाविशेषेऽप्यदृष्टविशेषात् कस्य चिदेव सुखदुःखादिसंबंधः नान्येषामदृष्टाभावात् । अतो न सांकर्यमित्यत आह । "† अदृष्टानियमात्" । एषां प्रधानादिगतमदृष्टं तेषां प्रधानादिगतादृष्टस्य सर्वात्मसाधारण्यात्सांकर्यं दुर्वारमेव । ननु यस्यात्मनः ममेदं फलं भूयादिति कर्मानुष्ठानं तस्यैव तददृष्टं नान्यस्येत्यत आह । "‡ अभिसंध्यादिष्वपि चैवं" अभिसंध्यादेरपि प्रधानगतत्वे पूर्ववदेव साधारण्यमात्मगतत्वेऽपि तज्जनकमनःसंयोगाविशेषात्साधारण्यमेव । अथोच्यते विभुत्वेऽप्यात्मनः स्वस्वशरीरावच्छिन्नप्रदेश एव सुखादिसंभवत्यतो न सांकर्यमित्यत आह । "£ प्रदेशादिति चेन्नांतर्भावात्" । विभुत्वादात्मनः सर्वे एवात्मनः सर्वशरीरेष्वाविर्भवन्ति । तथा च सर्वात्मसन्निधावुत्पद्यमानमस्येदं शरीरं नान्येषामिति नियन्तुं शक्यं । तथा च सर्वस्यापि शरीरस्य सर्वात्मसंबंधित्वात्सर्वेषां भोगप्रसंगः । ननु कस्यचित् कस्यचित्प्रदेशविशेषः भोगयोग्यो न प्रदेशान्तरं । तथा च सर्वात्मनामेकस्मिन् शरीरे भोगयोग्यप्रदेशविशेषाभावात्सांकर्यमिति चेन्न । यस्मिन्प्रदेशविशेषे द्वयोरात्मनोः पर्यायेण दुःखानुभवस्तत्रैकेनैव शरीरेण द्वयोरपि सुखदुःखानुभवप्रसंगः । द्वयोरप्युपभोगयोग्यप्रदेशे शेषस्य तत्र सत्त्वात् । तस्मात्सर्वगतात्यंतभिन्नात्मान आभासा एव इत्यणवोंऽशाश्च जीवा इति सिद्धं । इदमिदानीं निरूप्यते । "¶ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इत्यत्र जीवो ब्रह्मणोंऽशभेदाभेदव्यपदेशाभ्यामित्युक्तं । तत्रैकनिरूपितयोर्भेदाभेदयोर्विरोधेनैकत्रासंभवादवश्यं निरूपकभेदो वक्तव्यः । तत्र किमाकाशघटाकाशन्यायेनाभेदो व्यक्त्यैक्यं भेदश्चौपाधिकः किं वाऽभेदः स्वाभाविको व्यक्तिभेदः अग्नेर्विस्फुलिंगवत् । सामान्यधर्मावच्छिन्नप्रतियोगिकभेदाभावो वा उपादानोपादेयवत् पृथक्सत्तावच्छेदकभेदाभावो वेति विवेचनीयं । तथा "※ ब्रह्म वेद ब्रह्मैव भवति" इति फलवाक्येऽपि किं ब्रह्मस्वरूपैक्यमेव फलं उत सौम्यमिति । तत्र लाघवान्मुख्यत्वाच्च व्यक्त्यैक्यमेवाभेदः । भेदश्चौपाधिकः ततश्चोपाधिविनाशे यथा घटाकाशस्य महाकाशेनैक्यं भवति । एवं जीवस्यापि ब्रह्मण्यैक्यं भवतीत्याहुः । तदयुक्तं । तथा सति मोक्षस्यापुरुषार्थप्रसंगेन शास्त्रानारंभप्रसंगात् । तदिदमुक्तं । तैरेव प्रकाशादिवन्नैव इति सूत्रमवतारयद्भिर्जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखेन अंशिन ईश्वरस्यापि दुःखं स्यात् । यथा हस्तपादादिगतेन दुःखेन अंशिनो देवदत्तस्य दुःखित्वं तद्वत् । ततश्च तत्प्राप्तानां महत्तरं दुःखं स्यात्सर्वजी

---

§ ब्र. सू.–४८ अ.–२ पा.–३. $ ब्र. सू.–४९ अ.–२ पा.–३. † ब्र. सू.–५० अ.–२ पा.–३. ‡ ब्र. सू.–५१ अ.–२ पा.–३. £ ब्र. सू.–५२ अ.–२ पा.–३. ¶ ब्र. सू.–४२ अ.–२ पा.–३. ※ मुंडकोपनिषदि मुं.–३ खं.–२ मं.–९.

वदुःखसंबंधात् । तत्परं पूर्वावस्थानसंसार एवास्तु । तत्र स्वदुःखमात्रसंबंधादिति । सम्यक् दर्शनार्थप्रसंग इति । ननु तत्सूत्रव्याचक्षाणैस्तैरेव तत्र परिहारोऽभिहितः । जीवस्य हि शरीराद्यभिमानप्रयुक्तः दुःखसंबंध ईश्वरस्य तदभिमानाभावात् । दुःखसंबंधाभावः । यथा बहुष्वश्वाद्यभिमानिषु च युगपदुपविष्टेष्वश्वो नष्टो गजो नष्ट इत्यादिघोषिते एषामेवाश्वाद्यभिमानस्तेषामेव दुःखमुत्पद्यते नान्येषामिति चेन्न । ह्ययं परिहारः जीवयोर्व्यैक्यैक्ये घटते न हि जीवदुःखव्यतिरेकेण ईश्वरे दुःखान्तरमापादितं । येन तस्याभिमानाभावात् । न दुःखमिति परिह्रियेत । किंतु यथा हस्तपादादिगतेन दुःखेनांशिनो देवदत्तस्य दुःखित्वमेवं जीवगतेन दुःखेनेश्वरेऽपि दुःखित्वमापादितं । तत्राभिमानाभावान्न दुःखित्वमित्येतमसंबंधमेव । व्यक्तिभेदे हि जीवेश्वरयोर्जीववदीश्वरस्यापि चेतनत्वसामान्यशरीरसंबंधाच्च दुःखप्रसंग इत्याशंकायां जीववदीश्वरस्यापि मानाभावान्न दुःखमेवं परिहारो युज्यते । यथा सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे "£ अथ खलु क्रतुमयः पूरुषः यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतःप्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प" इत्यत्र किं जीव उपास्यत्वेनोपदिश्यते आहोस्वित् परं ब्रह्मेति विषये । "‡‡ एष म आत्मांऽतर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा" इति हृदयायतनत्वाणुत्ववचनाज्जीव इति प्रापय्य अथर्वोपनिषत्सु प्रसिद्धस्येहापि वाक्योपक्रमे । "£ सर्वं खल्विदं ब्रह्म" इति श्रुतस्य ब्रह्मण एव प्राणशरीर इति समान्तर्वर्तिसर्वनाम्ना उपास्यत्वेनोपदेशात् । विवक्षितगुणोपपत्तेश्चेति सत्यसंकल्पादीनां गुणानामीश्वर एवोपपत्तेश्च ब्रह्मैवोपास्य इत्युक्त्वा । अनुपपत्तेस्तु न शारीर इति सत्यसंकल्पादीनां जीवे अनुपपत्तेर्न स उपास्य इति चोक्त्वा । ननु जीवेश्वरयोर्भेद एतदेव स एवासिद्ध इत्याशंकायां "*कर्मकर्तृव्यपदेशाच्च" "¶शब्दविशेषात्" "†स्मृतेश्चेति" । एवमितःप्रेत्याभिसंभवितास्मीति एतमित्युपास्यप्राप्तिकर्मत्वेनोपासकस्य जीवस्याभिसंभविताऽस्मीति प्राप्तिकर्तृत्वेन व्यपदेशात् । एवमंतरात्मपुरुषो हिरण्मय" इति । प्रथमान्तः सप्तम्यां तद्द्वयोपादानात् । "‖ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इति स्मृतेश्च भेदं व्यवस्थाप्येश्वरस्य हृदयायतनत्वमणुत्वं चानुपपन्नमिति शंकायां "§ अर्भ कौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेति" सर्वगतस्यापीश्वरस्य हृदयदेशगतत्वेनाणुत्वेन च उपास्यत्वार्थमणुत्वादिव्यपदेशः न विरुध्येत इत्युक्त्वा । तर्हि सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबंधात् चिद्रूपतया शारीरेणाविष्टत्वात्सुखदुःखसंभोगः अविशिष्टः प्रसज्येतेत्याशंक्य संभोगप्राप्तिरिति चेन्न । वैशेष्यादिति नायं दोषः । कुतः वैशेष्यात् । विशेषो हि भवति । जीवेश्वरयोः धर्माधर्मादिसाधनः सुखदुःखादिमांश्च अन्यस्तद्विपरीत अपहतपाप्मत्वादि गुणक एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य । यदि च सन्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसंबंधोऽभ्युपगम्यते । तर्हि आकाशादीनामपि दाहं वेदादिप्रसंगोऽभिहितः । तैरपि तथैव व्याख्यातश्च । यतीश्वरस्य तत्त्वज्ञतया बाधितत्वान्न दुःखादिप्रसंग इति तन्न । न हि जीवे दुःखं नोत्पद्यत इति शक्यं वक्तुमनुभवविरोधात् । नापीश्वरः स्ववृत्तितया तन्नानुभवतीति शक्यं वा वक्तुं सर्वथा व्याकोपात् । किंतु मिथ्यात्वनिश्चयं बाध इति वक्तव्यं । न चैतावता स्ववृत्तितयाऽनुभूय-

£ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–१. ‡‡ छांदोग्योपनिषदि प्र.–३ खं.–१४ मं.–३.
* ब्र. सू.–४ अ.–१ पा.–२. ¶ ब्र. सू.–५ अ.–१ पा.–२. † ब्र. सू.–६ अ.–१ पा.–२
§ ब्र. सू.–७ अ.–१ पा.–२ ‖ भगवद्गीतायां अ.–१८ श्लो.–६१.

मानं दुःखमनर्थो नेति शक्यं वक्तुं । न हि दुःखसत्यत्वनिश्चयोऽनर्थः । किंतु दुःखत्वेनैव दुःखनिश्चय । अत एव दुःखं मे माभूदित्येव लोके कामनानुपमदुःखे सत्यत्वमाभूदिति । अत एव विदुषामाचाक्रायणप्रभृतीनां दुःखपरिहारायोच्छिष्टपर्युषितादिभक्षणं श्रूयते । तस्माज्जीवेश्वरयोर्व्यक्त्यैक्ये मोक्षस्यार्थबहुलतया यत्नेन परिहार्यत्वात् । तदर्थशास्त्रानारंभप्रसंगात् । जीवेश्वरयोः स्वाभाविको व्यक्तिभेद एव । अभेदश्च सामान्यधर्मावच्छिन्नप्रतियोगिताको भेदाभावादिरूपः फलवाक्येऽपि ब्रह्मसामान्यमेव फलं अत एव । "§ निरंजनः परमं साम्यमुपैति" भोगमात्रसाम्यलिंगाच्च अश्मादिवच्च तदनूपपत्तिरित्यादिश्रुतिसूत्रैः सामान्यभेदः ब्रह्मसाम्यं च प्रतिपाद्यते । अत स एव पक्षः श्रेयोर्थिभिरादरणीयः ॥

॥ इति द्वितीयाध्याये तृतीयः पादः ॥

---

§ मुंडकोपनिषदि मुं.–३ खं.–१ मं.–३.

॥ श्रीगणेशाय नमः ॥

# अथ द्वितीयाध्याये चतुर्थः पादः

मू०— किमिंद्रियाणि जायंते उत नेत्यत्र संशयः ॥
"×एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च" ॥
इत्यादिश्रुतिषूत्पत्तिश्रवणादिति चेच्छृणु ॥ ६२६ ॥
न जायते यथैवात्मा * तथा प्राणेंद्रियाण्यपि ॥
तदुत्पत्तिश्रुतिर्गौणी प्राणोत्पत्तेरसंभवात् ॥ ६२७ ॥
"¶ अनेन जीवेने" त्यादिश्रुत्यर्थस्यानुसारतः ॥
"§ तत्प्राक्श्रुतिश्च गौण्येव" "£ प्राणा वा ऋषय" स्त्विति ॥ ६२८ ॥
"** तत्पूर्वकत्वाद्वाचश्च" ततः "% सप्तेंद्रियाणि तु ॥
गतेर्विशेषितत्वाच्च" §† हस्तादय इमे पुनः ॥ ६२९ ॥
स्थितितो नैव मंतव्यं "$ प्राणाः सप्तैव चेत्यतः ॥
‡ प्राणाश्चैतेऽणवः प्रोक्ताः स्थूलाश्चेन्मृतिकालतः ॥ ६३० ॥
निर्गच्छंतः शरीरांते बलादहिरिव स्फुटम् ॥
‖ तच्छ्रेष्ठ $† पंचवृत्तिश्च मनोवद्व्यपदिश्यते ॥ ६३१ ॥
§§ अणुश्च मुख्यप्राणोऽसौ ¶† न च वायुक्रिये पृथक् ॥
उपदेशात्प्राण एव ब्रह्मणः श्रुतिवाक्यतः ॥ ६३२ ॥
जीवस्य कर्तृभोक्तृत्वे प्राणः *§ स्याच्चक्षुरादिवत् ॥
सर्वार्थत्वेन करणं न स्वतंत्रं कदाचन ॥ ६३३ ॥
सहैव शिष्यते प्राणस्तत्र तैश्चक्षुरादिभिः ॥
§* न दोषोऽकरणत्वाच्च तथा दर्शयति श्रुतिः ॥ ६३४ ॥
‡$ अधिष्ठानं ज्योतिरादेस्तथा मननतः खलुः ॥

---

× मुंडकोपनिषदि मुं.–२ खं.–१ मं.–३. * ब्र. सू.–१ अ.–२ पा.–४.
§ ब्र. सू.–२ अ.–२ पा.–४. ¶ छांदोग्योपनिषदि प्र.–६ खं.–३ मं.–२.
£ शतपथब्राह्मणे प्र.–६ खं.–१ मं.–१. ** ब्र. सू.–३ अ.–२ पा.–४.
% ब्र. सू.–४ अ.–२ पा.–४. §† ब्र. सू.–५ अ.–२ पा.–४.
$ महानारायणोपनिषदि अनु.–१२ ‡ ब्र. सू.–६ अ.–२ पा.–४. ‖ ब्र. सू.–७ अ.–२ पा.–४.
$† ब्र. सू.–११ अ.–२ पा.–४ §§ ब्र. सू.–१२ अ.–२ पा.–४. ¶† ब्र. सू.–८ अ.–२ पा.–४.
*§ ब्र. सू.–९ अ.–२ पा.–४ §* ब्र. सू.–१० अ.–२ पा.–४. ‡$ ब्र. सू.–१३ अ.–२ पा.–४

देवताश्चेदधिष्ठात्र्यस्तासां भोक्तृत्वमत्र चेत् ॥ ६३५ ॥
सत्यामधिष्ठातृतायां प्राणवत्करणावलेः ॥
स्वामिनैव तु जीवेन संबंधः श्रुतिचोदितः ॥ ६३६ ॥
अथ यत्रैतदाकाशमनुरूपा च सा स्मृतिः ॥
$ तन्नित्यत्वाच्च जीवस्य सह वै श्रुतिचोदनात् ॥ ६३७ ॥
प्राणानां नित्यसंबंधो जीवेनैव समीरितः ॥
उत्क्रांतिप्रलयादौ तदनुवृत्तेश्च दर्शनात् । ।६३८ ॥
" × तमुत्क्रामंत " मित्यादिश्रुत्या तत्प्रतिपादनात् ॥
अग्न्यादिप्राणसंबंधो ह्यनित्य इति वर्णितम् ॥ ६३९ ॥
अग्न्यादीनामभावेऽपि प्रलये प्राणसत्त्वतः ॥
अग्न्यादीनां ततस्तस्मादधिष्ठातृत्वमिष्यते ॥ ६४० ॥
** श्रेष्ठात्प्राणात्तदन्यत्र पृथक्तव्यपदेशतः ॥
प्राणात्तत्त्वांतराण्येव " % वागादीनि " तथा श्रुतिः ॥ ६४१ ॥
"† एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च " ॥
व्यपदिष्टः पृथक् प्राण एवमादिबहुश्रुतौ ॥ ६४२ ॥
वागादिभ्यश्च भेदेन पृथक् प्राणश्रुतेरिति ॥
¶ वैलक्षण्याच्च भेदः स्यात्तस्मात्तत्त्वांतराणि हि ॥ ६४३ ॥
नामरूपव्याकरणं किं वा जीवैककर्तृकम् ॥
उतेशकर्तृकं वेति संशयेऽत्र समागते ॥ ६४४ ॥
£ संज्ञामूर्त्योरत्र क्लृप्तिस्त्रिवृत्कुर्वत ईश्वरात् ॥
सेयमित्यादिवाक्यैस्तदुपदेशात्तथैव हि ॥ ६४५ ॥
तत्कर्तृकरणं ÷ भौममिदमाप्यमिति स्फुटम् ॥
कथं विभागमाशंक्य ह्याध्यात्मं च विभाजनम् ॥ ६४६ ॥
भूमौ व्रीह्यादिरूपाया मांसाद्याध्यात्मकार्यकम् ॥
लोहितादि तथैवापां तथैवाग्न्यादितेजसः ॥ ६४७ ॥

---

$ ब्र. सू.-१४ अ.-२ पा.-४ × बृहदारण्यकोपनिषदि अ.-६ ब्रा.-४ मं.-२.
** ब्र. सू.-१५ अ.-२ पा.-४. % मैत्र्युपनिषदि प्र.-६ मं.-३१.
† मुंडकोपनिषदि मुं.-२ खं.-१ मं.-३. ¶ ब्र. सू.-१६ अ.-२ पा.-४
£ ब्र. सू.-१७ अ.-२ पा.-४. ÷ ब्र. सू.-१८ अ.-२ पा.-४.

तत्तद्वादस्तु ‡ वैशेष्यात्तत्तद्भागविशेषतः ॥
स्यात्तत्तद्व्यपदेशस्तु तस्मात्सर्वं समंजसम् ॥ ६४८ ॥
लिंगादेव व्याकरणं सर्वं तन्नामरूपयोः ॥
त्रिवृत्करणमित्यादिलिंगादेवेति साधितम् ॥
तस्माद्धृदंबुजे धार्यं लिंगं ब्रह्मपदाभिधम् ॥ ६४९ ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धांतरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकंठकृते निगमागमसारसंग्रहे क्रियासारे द्वितीयोपदेशः

---

‡ ब्र- सू.–१९ अ.–२ पा.–४



